सदासीदिति शब्दार्थभेदे वैगुण्यमापतेत् ।
अभेदे पुनरुक्तिः स्यात् मैवं लोके तथेक्षणात् ॥२१॥
कर्त्तव्यं कुरुते वाक्यं ब्रूते धार्यस्य धारणम् ।
इत्यादिवासनाविष्टं प्रत्यासीत् सदितीरणम् ॥२२॥
कालाभावे पुरेत्युक्तिः कालवासनया युतम् ।
शिष्यं प्रत्येव तेनात्र द्वितीयं न हि शङ्क्यते ॥२३॥

---

सति अथवा जगति । नाद्यः अन्यस्य रजतादेर्नामरूपयोरन्यत्र शुक्तिकादावारोपितत्वदर्शनात् सतो नामरूपयोः सत्येव कल्पनायोगात् न द्वितीयः असतो निरात्मकस्य चाधिष्ठानत्वायोगात् न तृतीयः सत उत्पन्नस्य जगतः स्वनामरूपकल्पनाधिष्ठानत्वानुपपत्तेरिति । माभूदधिष्ठानमनयोः कल्पना किं न स्यादित्याशङ्क्याह निरधिष्ठान इति ॥ २० ॥

ननु असदेवेदमग्र आसीदित्यत्र यथा व्याघात उक्तस्तथा सदेव सोम्येदमग्र आसीदित्यत्रापि दोषोऽस्तीति शङ्कते सदासीदिति । तथाहि सदासीदिति शब्दभेदयोरर्थभेदोऽस्ति न वा अस्ति चेदद्वैतहानिः नास्ति चेत् पुनरुक्तिः स्यात् अतः सदासीदित्यनुपपन्नमिति । द्वितीयं पक्षमादाय परिहरति मैवमिति । पुनरुक्तिदोषस्य कः परिहार इत्याशङ्क्याह लोक इति ॥ २१ ॥

लोके एवंविधेषु प्रयोगेषु पुनरुक्त्यभावः कुत्र दृष्ट इत्याशङ्क्याह कर्त्तव्यमिति । भवत्वेवं लोके श्रुतौ किमायातमित्यत आह इत्यादीति ॥ २२ ॥

नन्वद्वितीयवस्तुनि भूतकालाभावात् अग्र आसीदित्युक्तिरनुपपन्नेत्याशङ्क्याह कालाभावे पुरेत्युक्तिरिति । ननु जगदुत्पत्तेः पुरा जगदभावेन यदद्वितीयत्वं ब्रह्मणः इत्याशङ्क्य श्रुतिप्रवृत्तेर्द्वैतवासनाविशिष्टशिष्यप्रबोधनत्वात् नाभिशङ्कनीयम् इत्याह तेनेति ॥ २३ ॥

चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया ।
अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम् ॥२४॥
अतस्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत् किञ्चिदवशिष्यते ॥२५॥
ननु भूम्यादिकं माभूत् परमाण्वन्तमाशतः ।
कथन्ते वियतोऽसत्त्वं बुद्धिमारोहतीति चेत् ॥२६॥
अत्यन्तं निर्जदग्गम यथा ते बुद्धिमाश्रितम् ।
तथैव सन्निराकाशं कुतो नाश्रयते मतिम् ॥ २७ ॥
निर्जगद्व्योम दृष्टञ्चेत् प्रकाशतमसी विना ।
क्व दृष्टं किञ्च ते पक्षे न प्रत्यक्षं वियत् खलु ।२८॥

---

इदानीं सिद्धान्तरहस्यमाह चोद्यं वेति। व्यवहारदशायां चोद्यादि कर्त्तव्यं परमार्थतस्त्वद्वैतमेव तत्त्वमित्यर्थः ॥ २४ ॥

परमार्थतो द्वैताभावे श्रुतिं प्रमाणयति अतस्तिमितेति । तिमितं निश्चलं गम्भीरं दुरवगाहं मनसा विषयीकर्त्तुमशक्यं न तेजस्तेज-स्त्वानधिकरणं न तमस्तमसो विलक्षणमनावरणस्वभावं ततं व्याप्तम् अनाख्यमाख्यातुमशक्यम् अनभिव्यक्तं चक्षुरादिभिरप्यविषयीकृतं सत् शून्यविलक्षणम् अतएव किञ्चिदिदन्तया निर्देष्टुमशक्यम् अवशिष्यते द्वैतनिषेधावधित्वेनावतिष्ठत इत्यर्थः ॥ २५ ॥

ननु जनिमत्त्वेनानित्यस्य भूम्यादेरसत्त्वमस्तु नित्यस्याकाशस्यासत्त्वं कथमङ्गीक्रियते इत्याशङ्कते ननु भूम्यादिकमिति ॥ २६ ॥

दृष्टान्तावष्टम्भेन परिहरति अत्यन्तं निर्जगद्व्योमेति। अत्यन्तं निर्जगज्जगम्मात्ररहितमित्यर्थः ॥ २७ ॥

न हि दृष्टेऽनुपपन्नमिति न्यायमाश्रित्य चोदयति निर्जगद्व्यो-

सद्वस्तु सिद्धमस्माभिर्निश्चितैरनुभूयते ।
तूष्णीं स्थितौ न शून्यत्वं शून्यबुद्धेस्तु वर्जनात् ॥३९॥
सद्बुद्धिरपि चेन्नास्ति मास्त्वस्य स्वप्रभत्वतः ।
निर्मनस्कत्वसाक्षित्वात् सत्त्वं सुगमं नृणाम् ॥४०॥
मनोजृम्भणराहित्ये यथा साक्षी निराकुलः ।
मायाजृम्भणतः पूर्वं सत्तथैव निराकुलम् ॥४१॥
निस्तत्त्वा कार्य्यगम्यास्य शक्तिर्मायाग्निशक्तिवत् ।
न हि शक्तिः क्वचित् कैश्चित् बुध्यते कार्य्यतः पुरा ॥४२॥

---

केति । दर्शनमेवासिद्धमिति परिहरति प्रकाशतमसी विना क्व दृष्ट-मिति । अपसिद्धान्तोऽपि इत्याह किञ्चेति ॥ ३८ ॥

ननु दर्शनाभावः सद्वस्तुन्यपि समान इत्याशङ्क्य सतः सर्वानुभव-सिद्धत्वात् नैवमित्याह सद्वस्तु सिद्धमिति । ननु तूष्णीम्भावे शून्यमेव इतरस्य कस्यापि प्रतीत्यभावात् इत्याशङ्क्य शून्यस्यापि प्रतीत्यभावात् शून्यमपि न सम्भवतीत्याह न शून्यत्वमिति ॥ ३९ ॥

ननु तर्हि सद्बुद्ध्यभावात् सत्त्वमपि न घटत इति शङ्कते सद्बुद्धि-रपीति । तस्य स्वप्रकाशत्वात् न तद्बुद्ध्यभावोऽनिष्ट इति परिहरति मास्त्वस्येति । ननु स्वगोचरबुद्ध्यभावे कथं सद्वस्तु अवगन्तुं शक्यत इत्यत आह निर्मनस्कत्व इति ॥ ४० ॥

एवं निष्प्रपञ्चस्य साक्षिणस्तूष्णीं स्थितौ भानं प्रदर्श्य एतद्-दृष्टान्तबलेन सृष्टेः पुरापि सद्वस्तु तथावगन्तुं शक्यत इत्याह मनोजृ-म्भणराहित्ये इति ॥ ४१ ॥

मायायाः किं लक्षणमित्यत आह निस्तत्त्वेति । निस्तत्त्वा जगत्कारणभूतात् सद्वस्तुनः पृथक् सत्त्वरहिता कार्य्यगम्या वियदादि-कार्य्यलिङ्गगम्या अस्य सद्वस्तुनः शक्तिर्वियदादिकार्य्यजननसामर्थ्यं

न सद्वस्तु सतः शक्तिर्न हि वह्नेः स्वशक्तिता ।
सद्विलक्षणतायान्तु शक्तेः किं तत्त्वमुच्यताम् ॥४३॥
शून्यत्वमिति चेत् शून्यं मायाकार्य्यमितीरितम् ।
न शून्यं नापि सद्यादृक् तादृक् तत्त्वमिहेष्यताम् ॥४४॥
नासदासीन्नो सदासीत् तदानीं किन्त्वभूत् तमः ।
सद्योगात् तमसः सत्त्वं न स्वतस्तन्निषेधनात् ॥४५॥

---

मायेत्युच्यते । वस्तुस्वरूपातिरिक्तसद्भावे दृष्टान्तमाह अग्निशक्तिवदिति । यथा अग्न्यादिस्वरूपातिरिक्तं स्फोटादिकार्य्यलिङ्गगम्यं वह्न्यादिनिष्ठं सामर्थ्यमस्ति तद्वदित्यर्थः । शक्तेः कार्य्यलिङ्गगम्यत्वं व्यतिरेकमुखेन द्रढयति न हि शक्तिरिति ॥ ४२ ॥

एवं शक्तेः कार्य्यलिङ्गगम्यत्वमुपपाद्य मिथ्यात्वरूपतामुपपादयति न सद्वस्तु सतः शक्तिरिति । अयमभिप्रायः सद्वस्तुनः शक्तिः किं सती उतासती न तावत् सती तथात्वे सतोऽभिन्नत्वेन तच्छक्तित्वायोगात् । उक्तार्थे दृष्टान्तमाह न हि वह्नेः स्वशक्तितेति द्वितीयेऽपि किं नरविषाणतुल्या उत सद्विलक्षणेति विकल्पाभिप्रायेण पृच्छति सद्विलक्षणतायान्त्विति ॥ ४३ ॥

तत्राद्यं पक्षमनूद्य दूषयति शून्यत्वमिति । शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरमित्यत्रेत्यर्थः । तस्मात् द्वितीयः पक्षः परिशिष्यत इत्याह न शून्यमिति । मायारूपं सत्त्वासत्त्वाभ्यां निर्वचनानर्हमित्यभिप्रायः ॥ ४४ ॥

उक्तार्थे श्रुतिं प्रमाणयति नासदासीदिति । तम आसीत् तमसा गूढमित्यादि श्रुतिः प्रमाणमित्यर्थः । तर्हि तम आसीदिति कथं सत्त्वमुच्यत इत्यत आह सद्योगादिति । कुत इत्यत आह तन्निषेधनादिति ॥ ४५ ॥

अतएव द्वितीयत्वं शून्यवन्नहि गण्यते ।
न लोके चैतन्यच्छक्तेर्जीवितं गण्यते पृथक् ॥४६॥
शक्त्याधिक्ये जीवितञ्चेद् वर्द्धते तत्र वृद्धिकृत् ।
न शक्तिः किन्तु तत्कार्य्यं युद्धकृष्यादिकन्तथा ।
सर्व्वथा शक्तिमात्रस्य न पृथक् गणना क्वचित् ।
शक्तिकार्य्यन्तु नैवास्ति द्वितीयं शङ्क्यते कथम् ॥ ४७ ॥
न कृत्स्नब्रह्मवृत्तिः सा शक्तिः किन्त्वेकदेशभाक् ।
घटशक्तिर्यथा भूमौ स्निग्धमृद्येव वर्त्तते ॥ ४८ ॥
पादोऽस्य विश्वा भूतानि त्रिपादस्ति स्वयं प्रभः ।
इत्येकदेशवृत्तित्वं मायाया वदति श्रुतिः ॥४९॥

---

फलितमाह अतएवेति । यतः स्वतः सत्त्वं मायाया नास्ति अतएव शून्यस्येव मायाया अपि द्वितीयत्वं नहि गण्यते नैवाद्रियत इत्यर्थः । अमतस्य द्वितीयत्वानङ्गीकारे दृष्टान्तमाह न लोक इति ॥ ४६ ॥

ननु शक्त्याधिक्ये जीविताधिक्यं दृश्यते अतः शक्तेरपि पृथक् जीवितत्वमस्तीति शङ्कते शक्त्याधिक्य इति । न शक्तिर्जीवितवर्द्धने कारणम् अपि तु तत् कार्य्यं युद्धकृष्यादीति परिहरति तत्र वृद्धिकृदिति । दार्ष्टान्तिके योजयति तथा सर्व्वथेति । माभूत् शक्त्या सद्वितीयत्वं स्वतः अपि तु तत्कार्य्येण तत् भवत्वेवेत्याशङ्क्य तस्य तदानीमसत्त्वात् तेनापि न सद्वितीयत्वमित्याह शक्तिकार्य्यमिति ॥ ४७ ॥

ननु सच्छक्तिः सति ब्रह्मणि सर्व्वत्र वर्त्तते उतैकदेशे नाद्यः शक्तौ प्राप्यमसत्त्वाभावप्रसङ्गात् न द्वितीयः निरंशत्वविरोधित्वादित्याशङ्क्य आद्यानङ्गीकारात् द्वितीये परिहारो वक्ष्यते इत्यभिप्रायेणाह न कृत्स्नब्रह्मवृत्तिरिति । एकदेशवृत्तौ दृष्टान्तमाह घटशक्तिरिति ॥ ४८ ॥

शक्तेरेकदेशवृत्तित्वे प्रमाणमाह पादोऽस्येति ॥ ४९ ॥

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।
इति कृष्णोऽर्जुनायाह जगतस्त्वेकदेशताम् ॥ ५० ॥
सभूमिं सर्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ।
विकारावर्त्ति चात्रास्ति श्रुतिसूत्रकृतोर्वचः ॥५१॥
निरंशेऽप्यंशमारोप्य कृत्स्ने ऽंशे वेति पृच्छतः ।
तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतुर्हितैषिणी ॥ ५२ ॥
सत्तत्त्वमाश्रिता शक्तिः कल्पयेत् सति विक्रियाः ।
वर्णा भित्तिगता भित्तौ चित्रं नानाविधं यथा ॥५३॥
आद्यो विकार आकाशः सोऽवकाशस्वभाववान् ।
आकाशोऽस्तीति सत्तत्त्वमाकाशेऽप्यनुगच्छति ॥ ५४ ॥

---

न केवलं श्रुतिरेव स्मृतिरप्यस्तीत्याह विष्टभ्याहमिदमिति ॥ ५० ॥

इदानीं निर्मायस्वरूपसद्भावे प्रमाणमाह सभूमिमिति । विकारावर्त्ति च तथा हि स्थितिमाहेति सूत्रकारवचनमित्यर्थः ॥ ५१ ॥

तर्हि निरंशत्वविरोध इत्यस्य कः परिहार इत्याशङ्क्य वास्तवनिरंशत्वाभ्युपगमान्न विरोध इत्यभिप्रायेणोदाहृतश्रुत्यभिप्रायमाह निरंशेऽप्यंशमिति ॥ ५२ ॥

यदर्थं ब्रह्मणि माया समर्थिता तदिदानीमाह सत्तत्त्वमिति । विक्रियाः विविधत्वेन क्रियन्ते इति विक्रियाः कार्यविशेषा इत्यर्थः । तत्र दृष्टान्तमाह वर्णा भित्तिगता इति । वर्णा रक्तपीतादयो धातुविशेषाः ॥ ५३ ॥

तत्र प्रथमं कार्यविशेषं दर्शयति आद्यो विकार इति । तत्स्वरूपमाह सोऽवकाशस्वभाववानिति । आकाशस्य ब्रह्मकार्यत्वे हेतुमाह आकाशोऽस्तीति सत्तत्त्वमाकाशेऽप्यनुगच्छतीति ॥ ५४ ॥

एकस्वभावं सत्तत्त्वमाकाशो द्विस्वभावकः।
नावकाशः सति व्योम्नि स चैषोऽपि द्वयं स्थितम् ॥५५॥
यद्वा प्रतिध्वनिर्व्योम्नो गुणो नासौ सतीक्ष्यते।
व्योम्नि द्वौ सद्ध्वनी तेन सदेकं द्विगुणं वियत् ॥५६॥
या शक्तिः कल्पयेद् व्योम सा सद्व्योम्नोरभिन्नताम्।
आपाद्य धर्मधर्मित्वं व्यत्ययेनावकल्पयेत् ॥ ५७ ॥
सतो व्योमत्वमापन्नं व्योम्नः सत्त्वान्तु लौकिकाः।
तार्किकाश्चावगच्छन्ति मायाया उचितं हि तत् ॥५८॥

---

ततः किमित्यत आह एकस्वभावमिति। उक्तमर्थं विषदयति नावकाश इति। सति सद्वस्तुन्यवकाशो नास्ति किन्तु सत्स्वभाव एक एव आकाशे तु स च सत्स्वभावश्च एषोऽप्यवकाशस्वभावोऽपीति द्वयं स्थितं विद्यत इत्यर्थः ॥ ५५ ॥

सदाकाशयोरेकद्विस्वभावत्वं प्रकारान्तरेण व्युत्पादयति यद्वा इति। प्रतिध्वनिर्व्योम्नो गुणः इत्युपपादितमधस्तात् असौ प्रतिध्वनिः सद्वस्तुनि नेक्ष्यते नोपलभ्यते व्योम्नि तु सद्ध्वनी सच्छब्दौ उभावप्युपलभ्येते तेन कारणेन सदेकं एकस्वभावं वियत् द्विगुणं द्विस्वभावकमित्यर्थः ॥ ५६ ॥

ननु आकाशस्य सद्ब्रह्मकार्य्यत्वे आकाशस्य सत्त्वेति सतः आकाशधर्मता कुतः प्रतिभातीत्याशङ्क्याह या शक्तिरिति। या माया सद्वस्तुनि आकाशं कल्पयति सा प्रथमतः सद्व्योम्नोरभेदं कल्पयति पश्चात् तयोर्धर्मधर्मिभावस्य वैपरीत्येन कल्पयति अत आकाशस्य सत्त्वेति भानमुपपद्यत इत्यर्थः ॥ ५७ ॥

मायया वैपरीत्यं कथं कृतम् इत्याशङ्क्याह सतो व्योमत्वमिति। वस्तुतत्त्वविचारे क्रियमाणे मृदो घटरूपत्वमिव सतो व्योमत्वमापन्नं

यद् यथा वर्त्तते तस्य तथात्वं भाति मानतः।
अन्यथात्वं भ्रमेणेति न्यायोऽयं सार्वलौकिकः ॥५९॥
एवं श्रुतिविचारात् प्राक् यद् यथा वस्तु भासते।
विचारेण विपर्य्येति ततस्तच्चिन्त्यतां वियत् ॥६०॥
भिन्ने वियत्सती शब्दभेदाद् बुद्धेश्च भेदतः।
वाय्वादिष्वनुवृत्तं सत् नतु व्योमेति भेदधीः ॥६१॥

---

सद्वस्तुन आकाशरूपत्वं प्राप्तम्। लौकिकाः प्राणिनः शास्त्रीयेषु मध्ये तार्किकाश्च तद्वैपरीत्येन व्योम्नः गगनस्य धर्म्मिणः सत्त्वां सद्रूपत्वं धर्मं जातिं वा अवगच्छन्ति जानन्ति। ननु अन्यस्यान्यथा प्रतीतिरनुपपन्नेत्याशङ्क्याह मायाया उचितं हि तत् इति। तद्विपरीतदर्शनहेतुत्वं मायाया उचितमित्यर्थः ॥ ५८ ॥

मायाया विपरीतप्रतीतिहेतुत्वं लौकिकन्यायदर्शनेन स्पष्टीकरोति यद्यथेति। यच्छुक्त्रादि यथा येन शुक्तिकादिरूपेण वर्त्तते तस्य तथात्वं शुक्त्रादिरूपत्वं प्रमाणतः भाति स्फुरति अन्यथात्वं रजतादिरूपत्वं तद्भ्रमेण भ्रान्त्या प्रतिभातीत्ययं न्यायः सार्वलौकिकः सर्वलोकप्रसिद्ध इत्यर्थः ॥ ५९ ॥

एवं भ्रान्त्या विपरीतप्रतिभानं दर्शयित्वा तन्निवृत्त्युपायमाह एवं श्रुतिविचारादिति। एवमुक्तेन प्रकारेण श्रुतिविचारात् प्राक् श्रुत्यर्थविचारात् पूर्वं यद्वस्तु यत् सद्रूपं ब्रह्म भ्रान्त्या येन गगनादिरूपेण वर्त्तते ततः श्रुत्यर्थपर्य्यालोचनेन विपर्य्येति गगनादिभावं परित्यज्य सद्रूपं ब्रह्मैव भवति ततः श्रुतिविचारेण वस्तु याथात्म्यदर्शनसम्भवात् तद्वियच्चिन्त्यतां विचार्य्यतामित्यर्थः ॥ ६० ॥

विचारस्वरूपमेव दर्शयति भिन्ने वियत्सतीति। भिन्ने इति प्रतिज्ञातार्थे हेतुमाह शब्दभेदादिति। वियच्छब्दसच्छब्दयोरपर्य्याय-

सद्वस्त्वधिकवृत्तित्वात् धर्म्मि व्योम्नस्तु धर्म्मता ।
धिया सतः पृथक्कारे ब्रूहि व्योम किमात्मकम् ॥६२॥
अवकाशात्मकं तच्चेदसत् तदिति चिन्त्यताम् ।
भिन्नं सतोऽसच्च नेति वच्मि चेद् व्याहतिस्तव ॥६३॥
भातीति चेद्भातु नाम भूषणं मायिकस्य तत् ।
यदसद्भासमानन्तन्मिथ्या स्वप्नगजादिवत् ॥ ६४ ॥

---

स्यादित्यर्थः । हेत्वन्तरमाह बुद्धेश्च भेदत इति । तमेव हेतुं विशदयति वाय्वादिष्विति । सद्वाय्वादिषु भूतेषु सद्वायुः सत् तेज इत्येवं-प्रकारेणानुवृत्तं भासते व्योम तु नैवं भासते इति यज्ज्ञानं सा भेदधी-र्भेदबुद्धिरित्यर्थः ॥ ६१ ॥

एवं सदाकाशयोर्भेदं प्रसाध्य व्योम्नः सत्त्वेति भ्रान्त्या प्रतीतस्य धर्मिधर्मभावस्य विचारेण व्यत्ययं दर्शयति सद्वस्त्वधिकवृत्तित्वादिति । रूपरसादिष्वनुवृत्तस्य द्रव्यस्येवाकाशवाय्वादिष्वनुवृत्तस्य सतो धर्मित्वं रसादिभ्यो व्यावृत्तस्य रूपस्येव वाय्वादिभ्यो व्यावृत्तस्य नभसो धर्मत्व-मित्यर्थः । ननु तर्हि घटाद् भिन्नस्य रूपस्य यथा वास्तवत्वं तथा सतो भिन्नस्य नभसोऽपि स्यादित्याशङ्क्य सद्व्यतिरिक्तस्य नभसो दुर्निरूपत्वात् नैवमित्याह धिया सत इति ॥ ६२ ॥

दुर्निरूपत्वमसिद्धमिति यदुक्तं अवकाशात्मकमिति । तर्हि सतो विलक्षणत्वादसदेव स्यादिति परिहरति असत्तदितीति । सतो विल-क्षणमसत्त्वं नास्तीति वदतो दोषमाह भिन्नमिति ॥ ६३ ॥

असत्त्वे भानं न स्यादित्याशङ्क्य तुच्छविलक्षणत्वाद् भानं न विरु-ध्यते इत्याह भातीति चेदिति । अविरोधं दर्शयितुं मिथ्यावस्तुलक्षणं सदृष्टान्तमाह यदसद्भासमानमिति । यद्वस्तु स्वरूपेणाविद्यमान-मपि भासते तद् स्वप्नगजादिवन्मिथ्या इत्यर्थः ॥ ६४ ॥

जातिव्यक्ती देहिदेहौ गुणद्रव्ये यथा पृथक् ।
वियत्सतोस्तथैवास्तु पार्थक्यं कोऽत्र विस्मयः ॥६५॥
बुद्धोऽपि भेदो नो चित्ते निरूढिं याति चेत्तदा ।
अनैकाग्र्यात् संशयाद्वा रूढ्यभावोऽस्य ते वद ॥६६॥
अप्रमत्तो भव ध्यानादाद्येऽन्यस्मिन् विवेचनम् ।
कुरु प्रमाणयुक्तिभ्यां ततो रूढतमो भवेत् ॥ ६७ ॥
ध्यानान्मानाद् युक्तितोऽपि रूढे भेदे वियत्सतोः ।
न कदाचित् वियत् सत्यं सद्वस्तु छिद्रवन्न च ॥६८॥

---

ननु नियमेन सहोपलभ्यमानयोर्भेदो न दृश्यत इत्याशङ्क्याह जातिव्यक्तीति ॥ ६५ ॥

भेदो यद्यपि बुध्यते तथापि निश्चितो न भवतीति शङ्कते । बुद्धोऽपीति । तत्परिहारं वक्तुं निश्चयाभावे कारणं पृच्छति अनैकाग्र्यादिति ॥ ६६ ॥

आद्ये परिहारमाह अप्रमत्तो भव ध्यानादाद्य इति । आद्ये प्रथमे विकल्पे ध्यानात् तत्र प्रत्ययैकतानता ध्यानमित्युक्तलक्षणादप्रमत्तो भव सावधानमना भवेति यावत् । द्वितीये परिहारमाह अन्यस्मिन् विवेचनं कुर्विति । ततश्च किम् इत्यत आह ततो रूढतमो भवेदिति ॥ ६५ ॥

ततोऽपि किम् इत्यत आह ध्यानादिति । ध्यानं पूर्वोक्तलक्षणं, मानं भिन्ने वियत्सती शब्दभेदात् बुद्धेश्च भेदत इत्युक्तं, युक्तिस्तु सद्वस्त्वधिकदेशवृत्तित्वादित्यादावुक्ता, एतैर्ध्यानादिभिर्वियत्सतोर्भेदे चित्ते निरूढिं याते सति वियत् कदाचित् न सत्यं किन्तु सर्वदा मिथ्यैव भासते सद्वस्त्वपि छिद्रवदाकाशवच्च नैव भवतीति शेषः ॥ ६८ ॥

अस्य भाति सदा व्योम निस्तत्त्वोल्लेखपूर्व्वकम् ।
सद्वस्त्वपि विभात्यस्य निश्छिद्रत्वपुरःसरम् ॥ ६९ ॥
वासनायां विवृद्धायां वियत्सत्यत्ववादिनम् ।
सन्मात्राबोधयुक्तञ्च दृष्ट्वा विस्मयते बुधः ॥ ७० ॥
एवमाकाशमिथ्यात्वे सत्सत्यत्वे च वासिते ।
न्यायेनानेन वाय्वादेः सद्वस्तु प्रविविच्यताम् ॥ ७१ ॥
सद्वस्तुन्येकदेशस्था माया तत्रैकदेशगम् ।
वियत्तत्राप्येकदेशगतो वायुः प्रकल्पितः ॥ ७२ ॥
शोषस्पर्शौ गतिर्वेगो वायुधर्म्मा इमे मताः ।
त्रयः स्वभावाः सन्मायाव्योम्नां ये तेऽपि वायुगाः ॥ ७३ ॥

---

वियत्सतोर्विवेचनफलमाह अस्य भातीति ॥ ६९ ॥

वियन्मिथ्यात्वं सतो वस्तुत्वञ्च सदा चिन्तयतः किं भवतीत्याह वासनायामिति । बुधो वियत्सतोस्तत्त्ववेत्ता गगनस्य सत्यत्वं ब्रुवाणं निरवकाशसद्वस्तुबोधरहितं दृष्ट्वा विस्मयं प्राप्नोतीत्यर्थः ॥ ७० ॥

उक्तन्यायमन्यत्राप्यतिदिशति एवमाकाशमिथ्यात्वे इति ॥ ७१ ॥

सन्मायाकाशकार्य्यस्य वायोरकारणभूतेन सद्वस्तुना तदात्म्यप्रतीत्ययोगात् सतो विवेचनमप्रयोजकमित्याशङ्क्य साक्षात् सम्बन्धाभावेऽपि परम्परया सम्बन्धोऽस्तीत्याह सद्वस्तुन्येकदेशस्थेति ॥ ७२ ॥

एवं सद्वाय्वोः सम्बन्धं प्रदर्श्य तयोर्धर्मतो भेदज्ञानाय वायौ प्रतीयमानान् धर्मानाह शोषस्पर्शौ गतिरिति । एवं प्रातिस्विकान् धर्मानभिधाय कारणतः प्राप्तान् तानाह त्रयः स्वभावा इति । सन्मायाव्योम्नां ये त्रयः स्वभावाः सीतविशेषास्तेऽपि वायुगाः वायौ विद्यन्त इत्यर्थः ॥ ७३ ॥

वायुरस्तीति सद्भावः सतो वायौ पृथक् कृते।
निस्तत्त्वरूपता मायास्वभावो व्योमगो ध्वनिः ॥७४॥
सतोऽनुवृत्तिः सर्व्वत्र व्योम्नो नेति पुरोदितम्।
व्योमानुवृत्तिरधुना कथं न व्याहतं वचः ॥ ७५ ॥
छिद्रानुवृत्तिर्नेतीति पूर्व्वोक्तिरधुना त्वियम्।
शब्दानुवृत्तिरेवोक्ता वचसो व्याहतिः कुतः ॥ ७६ ॥
ननु सद्वस्तुपार्थक्यादसत्त्वञ्चेत् तदा कथम्।
अव्यक्तमायावैषम्यादमायामयतापि नो ॥ ७७ ॥
निस्तत्त्वरूपतैवात्र मायात्वस्य प्रयोजिका।

---

के ते धर्मा इत्यत आह वायुरस्तीति सद्भाव इति। वायुरस्तीति व्यवहारहेतुः सद्रूपत्वं सद्वस्तुनो धर्म एकः, वायौ सद्वस्तुनो विवेचिते सति यन्निस्तत्त्वरूपत्वं समायाधर्मो द्वितीयः, शब्दः व्योम्नः सकाशादागतस्तृतीय इत्यर्थः ॥ ७४ ॥

ननु व्योमविवेचनप्रस्तावे वाय्वादिष्वनुवृत्तं सत् न तु व्योमेति भेदधीरित्यत्र वाय्वादावाकाशानुवृत्तिर्निवारिता इदानीं व्योमानुवृत्तिरभिधीयते अतः पूर्वोत्तरविरोध इति शङ्कते सतोऽनुवृत्तिः सर्व्वेति। व्योमानुवृत्तिरधुनोच्यते इति शेषः ॥ ७५ ॥

पूर्वमवकाशलक्षणानुवृत्तिर्निवारिता इदानीं धर्मानुवृत्तिरेवाभिधीयते न तु स्वरूपानुवृत्तिरतो न व्याहतिरिति परिहरति छिद्रानुवृत्तिरिति ॥ ७६ ॥

ननु वायोः सद्वस्तुविलक्षणत्वादसत्त्वलक्षणं मायामयत्वं यदुच्यते तर्हि अव्यक्तस्वरूपमायावैलक्षण्यादमायामयत्वमपि किं न स्यादिति चोदयति ननु सद्वस्तुपार्थक्यादिति ॥ ७७ ॥

सा शक्तिकार्य्ययोस्तुल्या व्यक्ताव्यक्तत्वभेदिनोः ॥ ७८ ॥
सदसत्त्वविवेकस्य प्रस्तुतत्वात् स चिन्त्यताम् ।
असतोऽवान्तरो भेद आस्तां तच्चिन्तयात्र किम् ॥ ७९ ॥
सद्वस्तु ब्रह्म शिष्टोऽंशो वायुर्मिथ्या यथा वियत् ।
वासयित्वा चिरं वायोर्मिथ्यात्वं मरुतं त्यजेत् ॥ ८० ॥
चिन्तयेद्वह्निमप्येवं मरुतो न्यूनवर्त्तिनम् ।
ब्रह्माण्डावरणेष्वेषां न्यूनाधिकविचारणा ॥ ८१ ॥
वायोर्दशांशतो न्यूनो वह्निर्वायौ प्रकल्पितः ।
पुराणोक्तं तारतम्यं दशांशैर्भूतपञ्चके ॥ ८२ ॥

---

नाव्यक्तत्वं मायामयत्वे प्रयोजकं किन्तु निस्तत्त्वरूपत्वं तच्च मायायामिव कार्य्येऽप्यस्तीति न मायामयत्वहानिरिति परिहरति निस्तत्त्वरूपतैतामेति ॥ ७८ ॥

ननु शक्तिकार्य्ययोरुभयोरपि निस्तत्त्वरूपतायामविशिष्टायां व्यक्ताव्यक्तत्वलक्षणो भेदः कुत इत्याशङ्क्य तद्विचारः प्रकृतानुपयुक्त इति परिहरति सदसत्त्वविवेकस्येति । असतो मायातत्कार्य्यरूपस्यावान्तरभेदो व्यक्ताव्यक्तत्वरूप इत्यर्थः ॥ ७९ ॥

फलितमाह सद्वस्त्विति । वायौ यः सदंशस्तद्ब्रह्मरूपं शिष्टोऽंशो निस्तत्त्वरूपादिर्योऽंशः स्वरूपं स च वायुर्निस्तत्त्वरूपत्वादेवाकाशवन्मिथ्या इत्थं वायोर्मिथ्यात्वं चिरं वासयित्वा मरुतं त्यजेत् मरुत् सत्य इति बुद्धिं त्यजेदित्यर्थः ॥ ८० ॥

वायावुक्तविचारं तेजस्यतिदिशति चिन्तयेद्वह्निमिति । ननु सहस्रैकदेशस्था माया तस्येत्यादिना वियदादीनां न्यूनाधिकभाव उक्तः स लोके न क्वापि दृष्ट इत्याशङ्क्याह ब्रह्माण्डावरणेष्विति ॥ ८१ ॥

ननु वायोः कियतांशेन न्यूनो वह्निरित्यत आह वायोर्दशांशतो

वह्निरुष्णप्रकाशात्मा पूर्व्वानुगतिरत्र च।
अस्ति वह्निः सनिस्तत्त्वः शब्दवान् स्पर्शवानपि ॥८३॥
सन्मायाव्योमवाय्वंशैर्युक्तस्याग्नेर्निजो गुणः।
रूपं तत्र सतः सर्वमन्यद् बुद्धा विविच्यताम् ॥ ८४ ॥
सतो विवेचिते वह्नौ मिथ्यात्वे सति वासिते।
आपो दशांशतो न्यूनाः कल्पिता इति चिन्तयेत् ॥८५॥
सन्त्यापोऽमूः शून्यतत्त्वाः सशब्दस्पर्शसंयुताः।
रूपवत्योऽन्यधर्म्मानुवृत्त्या स्वीयो रसो गुणः ॥ ८६ ॥

---

ून इति। तस्य वास्तवत्वशङ्कां वारयति मायाविति। नन्वयं न्यूना-
क्रभायः स्वकपोलकल्पित इत्याशङ्क्याह पुराणोक्तमिति ॥ ८२ ॥

वह्नेः स्वरूपमाह वह्निरुष्ण इति। अत्रापि वायोरिव कारण-
र्मा अनुगता इत्याह पूर्वानुगतिरिति। के ते धर्मा इत्याकाङ्क्षायामाह
ास्ति वह्निरिति ॥ ८३ ॥

एवमग्नौ कारणधर्मानुगत्यनुवादपूर्वकं स्वकीयधर्मं दर्शयति सन्मा-
ते। इत्थं सविशेषणं वह्निस्वरूपं व्युत्पाद्य इदानीं सद्वस्तुनो
क्षं विविनक्ति तत्र सत इति। तत्र तेषु मध्ये सतः सद्वस्तुनो-
यत् सर्वं धर्मजातं मिथ्येति बुद्धा विविच्यतां पृथक् क्रियता-
ित्यर्थः ॥ ८४ ॥

एवं वह्नेर्मिथ्यात्वनिश्चयानन्तरमपां मिथ्यात्वं चिन्तयेदित्याह
तो विवेचिते वह्नाविति ॥ ८५ ॥

अप्स्वपि कारणधर्मान् स्वधर्मांश्च विभज्य दर्शयति सन्त्याप इति।
रेण सह वर्त्तमानः सशब्दः सशब्दश्चासौ स्पर्शश्चेति सशब्दस्पर्श-
न युक्ता इत्यर्थः ॥ ८६ ॥

सतो विवेचितास्वप्सु तन्मिथ्यात्वे च वासिते ।
भूमिर्दशांशतो न्यूना कल्पितापस्त्विति चिन्तयेत् ॥ ८७॥
अस्ति भूस्तत्त्वशून्यास्याः शब्दस्पर्शौ स्वरूपकौ ।
रसश्च परतो नैजो गन्धः सत्ता विविच्यताम् ॥८८॥
पृथक्कृतायां सत्तायां भूमिर्मिथ्यावशिष्यते ।
भूमेर्दशांशतो न्यूनं ब्रह्माण्डं भूमिमध्यगम ॥८९॥
ब्रह्माण्डमध्ये तिष्ठन्ति भुवनानि चतुर्दश ।
भुवनेषु वसन्त्येषु प्राणिदेहा यथायथम् ॥९०॥
ब्रह्माण्डलोकदेहेषु सद्वस्तुनि पृथक् कृते ।
असन्तोऽण्डादयो भान्तु तद्भानेऽपीह का क्षतिः ॥९१॥
भूतभौतिकमायानामसत्त्वेऽत्यन्तवासिते ।
सद्वस्त्वद्वैतमित्येषा धीर्विपर्येति न क्वचित् ॥९२॥

---

विवेकध्यानाभ्याम् अपां मिथ्यात्वं निश्चित्यानन्तरं भूमेर्मिथ्यात्वं चिन्तनीयमित्याह सतो विवेचितास्विति ॥ ८७ ॥

तस्या मिथ्यात्वचिन्तनाय तद्धर्मानपि विभजते अस्ति भूस्तत्त्वशून्येति । तेभ्यः सत्तामात्रं पृथक् कर्त्तव्यमित्याह सत्ता विविच्यतामिति ॥ ८८ ॥

सत्तापृथक्करणे फलमाह पृथक्कृतायामिति इदानीं भौतिकेभ्यो ब्रह्माण्डादिभ्यः सतो विवेचनाय तदवस्थानप्रकारं दर्शयति भूमेर्दशांशतो न्यूनमित्यादि यथायथमित्यन्तेन सार्द्धेन ॥ ८९ ॥ ९० ॥

तेषु विवेचने फलमाह ब्रह्माण्डलोकदेहेष्विति ॥ ९१ ॥

तद्भाने का वार्त्तेत्युक्तमेवार्थं स्पष्टीकरोति भूतभौतिकमायानामिति । भूतानामाकाशादीनां भौतिकानां ब्रह्माण्डादीनां माया·

सदद्वैतात् पृथग्भूते द्वैते भूम्यादिरूपिणि।
तत्तदर्थक्रिया लोके यथा दृष्टा तथैव सा ॥९३॥
सांख्यकाणादबौद्धाद्यैर्जगद्भेदो यथा यथा।
उत्प्रेक्ष्यतेऽनेकयुक्त्या भवत्वेष तथा तथा ॥९४॥
अवज्ञातं सदद्वैतं निःशङ्कैरन्यवादिभिः।
एवं का क्षतिरस्माकं तद्द्वैतमवजानताम् ॥९५॥
द्वैतावज्ञा सुस्थिता चेदद्वैते धीः स्थिरा भवेत्।
स्थैर्ये तस्याः पुमानेष जीवन्मुक्त इतीर्यते ॥९६॥
एषा ब्राह्मी स्थितिः पार्थ! नैनां प्राप्य विमुह्यति।

---

याश्च तत्कारणभूताया मिथ्यात्वे विवेकध्यानाभ्यां चित्ते दृढं वासिते सति सद्वस्तुनोऽद्वैतत्वबुद्धिः कदाचिन्न विहन्येत इत्यर्थः ॥ ९२ ॥

ननु भूम्यादीनां असत्त्वे विदुषां व्यवहारलोपः प्रसज्येत इत्याशङ्क्य विवेकेन मिथ्यात्वनिश्चयेऽपि भूम्यादेः स्वरूपमर्दनाभावान्न व्यवहारो लुप्येतेत्याह सदद्वैतादिति ॥ ९३ ॥

ननु तत्त्वस्याद्वैतरूपत्वे सांख्यादिभिरभिधीयमानस्य भेदस्य कुतो न निरासः क्रियत इत्याशङ्क्य व्यावहारिकभेदस्य अस्माभिरभ्युपगतत्वान्न निरासाय प्रयत्यत इत्याह सांख्यकाणादबौद्धाद्यैरिति ॥९४॥

ननु प्रमाणसिद्धस्य सतत्त्वभेदस्यावज्ञानुपपन्ना इत्याशङ्क्याह अवज्ञातमिति। यथा अन्यवादिभिः सांख्यादिभिर्निःशङ्कैः श्रुत्यादिसिद्धस्यापि सदद्वैतस्यावज्ञा क्रियते तथा श्रुतियुक्त्यनुभवावष्टम्भेनास्माकं तदीयद्वैतानादरणे किं हीयते इत्यर्थः ॥ ९५ ॥

ननु निष्प्रयोजनेयं द्वैतावज्ञेत्याशङ्क्य जीवन्मुक्तिलक्षणप्रयोजनसद्भावान्नैवमित्याह द्वैतावज्ञेति ॥ ९६ ॥

स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्व्वाणमृच्छति ॥९७॥
सदद्वैतेऽनृतद्वैते यदन्योन्यैक्यवीक्षणम् ।
तस्यान्तकालस्तद्भेदबुद्धिरेव न चेतरः ॥९८॥
यद्वान्तकालः प्राणस्य वियोगोऽस्तु प्रसिद्धितः ।
तस्मिन् कालेऽपि न भ्रान्तेर्गतायाः पुनरागमः ॥९९॥
नीरोग उपविष्टो वा रुग्णो वा विलुठन् भुवि ।
मूर्च्छितो वा त्यजेदेष प्राणान् भ्रान्तिर्न सर्व्वथा ॥१००॥
दिने दिने स्वप्नसुप्त्योरधीते विस्मृतेऽप्ययम् ।
परेद्युर्नानधीतः स्यात् तत्त्वविद्या न नश्यति ॥१०१॥

न केवलं जीवन्मुक्तिरेव प्रयोजनम् अपि तु विदेहमुक्तिरपि इत्यभिप्रायेण श्लोकशेषमुदाहरति एषा ब्राह्मी स्थितिः पार्थेति ॥९७॥

अन्तकालशब्देन वर्त्तमानदेहपातोऽभिधीयते इत्याशङ्कां वारयितुं विवक्षितमर्थमाह सदद्वैते इति । सद्रूपेऽद्वैते ध्वन्तरूपे द्वैते च यदन्योन्याध्यासवशादैक्यज्ञानमस्ति तदैक्यभ्रमस्यान्तकालो नाम तयोरद्वैतद्वैतयोः स्वस्वाभाविकरूपेण भेदबुद्धिरेव नापरो वर्त्तमान देहपात इत्यर्थः ॥ ९८ ॥

इदानीं लोकप्रसिद्धार्थस्वीकारेऽपि न दोष इत्यभिप्रायेणाह यद्वान्तकाल इति ॥ ९९ ॥

तमेवार्थं प्रपञ्चयति नीरोग इति ॥ १०० ॥

ननु प्राणवियोगकाले मूर्च्छादिना ज्ञाननाशे भ्रान्तिः स्यादित्याशङ्क्य ज्ञाननाशाभावे दृष्टान्तमाह दिने दिने इति । यथा प्रत्यहमधीते वेदे स्वप्नसुषुप्त्यवस्थायां विस्मृतेऽपि परेद्युरनधीतवेदत्वं नास्ति तथा मरणकाले तत्त्वानुसन्धानाभावेऽपि ज्ञाननाशाभाव इत्यर्थः ॥ १०१ ॥

प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना ।
न नश्यति न वेदान्तात् प्रबलं मानमीक्ष्यते ॥१०२॥
तस्माद् वेदान्तसंसिद्धं सदद्वैतं न बाध्यते ।
अन्तकालेऽप्यतो भूतविवेकान्निर्वृतिः स्थिता ॥१०३॥

इति भूतविवेकः समाप्तः ।

---

## तृतीयपरिच्छेदः ।

### पञ्चकोषविवेकः ।

गुहाहितं ब्रह्म यत् तत् पञ्चकोषविवेकतः ।
बोद्धुं शक्यं ततः कोषपञ्चकं प्रविविच्यते ॥ १ ॥

---

ज्ञाननाशाभावमेवोपपादयति प्रमाणोत्पादितेति ॥ १०२ ॥
उपपादितमर्थमुपसंहरति तस्मात वेदान्तसंसिद्धमिति ॥ १०२ ॥

इति भूतविवेकव्याख्या समाप्ता ।

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
पञ्चकोषविवेकस्य कुर्वे व्याख्यां समासतः ॥

तैत्तिरीयोपनिषत्तात्पर्यव्याख्यानरूपं पञ्चकोषविवेकाख्यं प्रकरणमारभमाण आचार्यस्तत्र श्रोतृप्रवृत्तिसिद्धये सप्रयोजनमभिधेयं सूचयन् चिकीर्षितं ग्रन्थं प्रतिजानीते गुहाहितमिति । यो वेद निहितं गुहायां परमे व्योमन्नित्यादिश्रुत्या गुहाहितत्वेनाभिहितं यद् ब्रह्मास्ति तद्गुहाशब्दवाच्यान्नमयादिकोषपञ्चकविवेकेन ज्ञातुं शक्यते यतः ततस्तेषां कोषाणां पञ्चकं प्रकर्षेण प्रत्यगात्मनः सकाशात् विभज्य प्रदर्श्यत इत्यर्थः ॥ १ ॥

देहादभ्यन्तरः प्राणः प्राणादभ्यन्तरं मनः ।
ततः कर्त्ता ततो भोक्ता गुहा सेयं परम्परा ॥ २ ॥
पितृभुक्तान्नजाद् वीर्य्याज्जातोऽन्नेनैव बर्द्धते ।
देहः सोऽन्नमयो नात्मा प्राक् चोर्द्ध्वं तदभावतः ॥ ३ ॥
पूर्व्वजन्मन्यसत्त्वे तज्जन्म सम्पादयेत् कथम् ।
भाविजन्मन्यसत् कर्म्म न भुञ्जीतेह सञ्चितम् ॥ ४ ॥

---

ननु केयं गुहा यस्यां निहितं ब्रह्म कोषपञ्चकविवेकेनावबुध्यत इत्याशङ्क्य गुहाशब्देन विवक्षितमर्थमाह देहादभ्यन्तरः प्राण इति । देहादन्नमयात् प्राणः प्राणमयः अभ्यन्तरः आन्तरः । प्राणात् प्राणमयात् मनः मनोमयः अभ्यन्तरः आन्तरः । ततो मनोमयात् कर्त्ता विज्ञानमय आन्तरः इत्यनुषज्यते । ततो विज्ञानमयात् भोक्ता आनन्दमय सोऽपि पूर्व्वस्मादान्तर इत्यर्थः । सैवमन्नमयाद्यानन्दमयान्तानां परम्परा गुहाशब्देनोच्यत इत्यर्थः ॥ २ ॥

इदानीमन्नमयस्य स्वरूपं तदनात्मत्वञ्च दर्शयति पितृभुक्तान्नजादिति । पितृभुक्तात् पित्रा मात्रा च भुक्तात् ओदनादेरन्नाज्जायमानं यद् वीर्य्यं तस्माद् वीर्य्याद् यो देहो जातः यश्च जननानन्तरं क्षीराद्यन्नेनैव वर्द्धते स देहोऽन्नमयोऽन्नस्य विकारः स आत्मा न भवति कुतः इत्यत आह प्राक् चोर्द्ध्वमिति । जन्मनः प्राक् मरणादूर्द्ध्वञ्च तदभावतस्तस्य देहस्याभावादित्यर्थः । विवादास्पदो देहः आत्मा न भवति कार्य्यत्वात् घटादिवदिति भावः ॥ ३ ॥

देहस्तु साध्यं माभूत् किन्तु बाधकाभावादप्रयोजकोऽयं हेतुरित्याशङ्क्याकृताभ्यागमकृतनाशाख्यबाधकसम्भवान्नैवमिति परिहरति पूर्व्वजन्मनीति । एतद्देहस्यात्मनः पूर्व्वस्मिन् जन्मनि असत्त्वात् एतज्जन्मकेतत्प्रावस्थेऽपि अस्य जन्मनोऽप्यङ्गीक्रियमाणत्वादकृताभ्यागमः

पूर्णो देहे बलं यच्छन्नक्षाणां यः प्रवर्त्तकः ।
वायुः प्राणमयो नासावात्मा चैतन्यवर्जनात् ॥ ५ ॥
अहन्तां ममतां देहे गृहादौ च करोति यः ।
कामाद्यवस्थया भ्रान्तो नासावात्मा मनोमयः ॥ ६ ॥
लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा ।
चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक् ॥ ७ ॥

---

प्रसज्येत तथा भाविजन्मन्यपि अस्य देहरूपस्यात्मनोऽसत्त्वाद्भावादि-ष्टानुष्ठितयोः पुण्यपापयोः फलभोक्तृत्वभावेन भोगमन्तरेणापि कर्मक्षयः प्रसज्येतायं कृतनाश एवम् अकृताभ्यागमकृतनाशरूपबाधकसद्भावादात्मनः कार्यत्वं नाङ्गीकर्त्तव्यमिति भावः ॥ ४ ॥

एवमन्नमयकोषस्यानात्मत्वं प्रदर्श्य प्राणमयकोषस्वरूपं तदनात्मत्वञ्च दर्शयति पूर्णो देहे बलमिति । यो वायुः देहे पूर्णः पादादिमस्तक-पर्य्यन्तं व्याप्तः सन् बलं यच्छन् व्यानरूपेण सामर्थ्यं प्रयच्छन्नक्षाणां चक्षुरादीनामिन्द्रियाणां प्रवर्त्तकः प्रेरको वर्त्तते स वायुः प्राणमय इत्युच्यते । असावप्यात्मा न भवति । तत्र हेतुमाह चैतन्यवर्जना-दिति । विवादाध्यासितः प्राण आत्मा न भवति जड़त्वात् घटवदिति भावः ॥ ५ ॥

इदानीं मनोमयस्वरूपप्रदर्शनपूर्वकं तस्याप्यनात्मत्वमाह अहन्तां ममतामिति । देहे अहन्ताम् अहमयं गृहादौ ममतां मदीयत्वाभि-मानं च यः करोति असौ मनोमय आत्मा न भवति । कुत इत्यत आह कामाद्यवस्थया भ्रान्त इति हेतुगर्भितं विशेषणं, कामक्रोधादि-वृत्तिमत्त्वेनानियतस्वभावत्वादित्यर्थः । तथा च मनोमय आत्मा न भवति विकारित्वाद् देहवदिति भावः ॥ ६ ॥

अनन्तरं कर्तृशब्दवाच्यस्य विज्ञानमयस्य स्वरूपं प्रदर्शयन्

कर्तृत्वकरणत्वाभ्यां विक्रियेतान्तरिन्द्रियम्।
विज्ञानमनसी अन्तर्वहिश्चैते परस्परम् ॥ ८ ॥
काचिदन्तर्मुखा वृत्तिरानन्दप्रतिबिम्बभाक्।
पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते ॥ ९ ॥
कादाचित्कत्वतो नात्मा स्यादानन्दमयोऽप्ययम्।

---

तदनात्मत्वं दर्शयति लीना सुप्ताविति। या चिच्छायोपेता धीः चिदाभासमर्पिता बुद्धिः सुप्तौ सुषुप्तिकाले लीना विलीना सती बोधे च जागरणकाले आनखाग्रगा नखाग्रपर्य्यन्तं वर्त्तमाना सती वपुः शरीरं व्याप्नुयात् व्याप्य वर्त्तते सा विज्ञानमयशब्दभाक् विज्ञानमयशब्दे-नोच्यमाना असावप्यात्मा न भवति विलयाद्यवस्थावत्त्वात् घटादिव-दित्यर्थः ॥ ७ ॥

ननु मनोबुद्ध्योरन्तःकरणत्वाविशेषात् मनोमयविज्ञानमयस्वरूपेण कोषद्वयकल्पनानुपपन्ना इत्याशङ्क्य कर्त्तृत्वकरणत्वाभ्यां भेदसद्भावात् घटत एव। मनोमयत्वादिभेद इत्याह कर्त्तृत्वकरणत्वाभ्यामिति। अन्तरिन्द्रियमन्तःकरणं कर्त्तृत्वकरणत्वाभ्यां कर्त्तृरूपेण करणरूपेण च विक्रियेत परिणमेत इत्यर्थः। एते कर्त्तृकरणे विज्ञानमनसी विज्ञानमनःशब्द-वाच्ये भवतः। एते च परस्परमन्तर्बहिर्भावेन वर्त्तेते अतः कोषद्वय-कल्पनमुपपद्यत इत्यर्थः। ८ ॥

इदानीं भोक्तृशब्दवाच्यस्यानन्दमयस्यानात्मत्वं दर्शयितुं तस्य स्वरूप-माह काचिदन्तर्मुखा वृत्तिरिति। पुण्यभोगे पुण्यकर्मफलानुभव-काले काचिद्वृत्तिरन्तर्मुखा सती आनन्दप्रतिबिम्बभाक् आत्मस्वरूपस्य आनन्दस्य प्रतिबिम्बं भजते सैव भोगशान्तौ पुण्यकर्मफलभोगोपरमे सति निद्रारूपेण लीयते विलीना भवति सा वृत्तिरानन्दमय इत्यभिप्रायः ॥ ९ ॥

बिम्बभूतो य आनन्द आत्मासौ सर्वदा स्थितेः ॥ १० ॥
ननु देहमुपक्रम्य निद्रानन्दान्तवस्तुषु ।
माभूदात्मत्वमन्यस्तु न कश्चिदनुभूयते ॥११॥
वाढं निद्रादयः सर्वेऽनुभयन्ते न चेतरः ।
तथाप्येतेऽनुभूयन्ते येन तं को निवारयेत् ॥ १२ ॥
स्वयमेवानुभूतित्वात् विद्यते नानुभाव्यता ।

---

तस्यानात्मत्वमाह कादाचित्कत्वत इति । अयमानन्दमयोऽपि कादाचित्कत्वात् आत्मा न स्याद्घटादिपदार्थवत् इत्यर्थः । ननु विद्यमानानामानन्दमयादीनां सर्वेषाम् आत्मत्वनिरासे नैरात्म्यं प्रसज्येत इत्याशङ्क्याह बिम्बभूतो य इति । बुद्ध्यादौ प्रतिबिम्बतया अवस्थितस्य प्रियादिशब्दवाच्यस्यानन्दमयस्य बिम्बभूतः कारणभूतो य आनन्दः असावेवात्मा भवति । कुत इत्यत आह सर्वदा स्थितेरिति । नित्यत्वादित्यर्थः । विवादाध्यासित आनन्द आत्मा भवितुमर्हति नित्यत्वात् य आत्मा न भवति नासौ नित्यो यथा देहादिः । गगनादेरुत्पत्तिमत्त्वेनानित्यत्वात् नैकान्तिकतेति भावः ॥ १० ॥

चोदयति ननु देहमुपक्रम्येति । अन्नमयाद्यानन्दमयान्तानां कोषाणामुक्तैर्हेतुभिरात्मत्वं न घटते चेत् माघटिष्ट । अन्यस्त्वात्माऽनुपलभ्यमानत्वान्नैव सम्भवतीत्यर्थः ॥ ११ ॥

परिहरति वाढं निद्रादय इति । अत्र निद्राशब्देन निद्रानन्दो लक्ष्यते निद्रादयो देहान्ता उपलभ्यन्ते अन्यो नानुभूयते इति यदुक्तं तत् सत्यम् । कथं तर्हि तदतिरिक्तस्यात्मनोऽङ्गीकार इत्यत आह तथाप्येतेऽनुभूयन्ते इति । अन्यस्यानुपलभ्यमानत्वेऽपि यद्बलादेतेषामानन्दमयादीनामुपलभ्यमानता भवति सोऽनुभवः कथं नाङ्गीक्रियत इत्यर्थः ॥ १२ ॥

ज्ञातृज्ञानान्तराभावादज्ञेयो न त्वसत्तया ॥ १३ ॥
माधुर्य्यादिस्वभावानामन्यत्र स्वगुणार्पिणाम् ।
अस्मिंस्तदर्पणापेक्षा नो न चास्त्यन्यदर्पकम् ॥ १४ ॥
अर्पकान्तरराहित्येऽप्यस्त्येषां तत्स्वभावता ।
मा भूत् तथानुभाव्यत्वं बोधात्मा तु न हीयते ॥ १५ ॥

---

ननूक्तेभ्यः कोशेभ्योऽन्य आत्मा यदि विद्यते तर्ह्युपलभ्येत नोपलभ्यते अतो नास्तीत्याशङ्क्याह स्वयमेवानुभूतित्वादिति । आनन्दमयादीनां साक्षिणोऽनुभवस्वरूपत्वादेवानुभाव्यत्वं नास्तीति । ननु अनुभवस्वरूपत्वेऽप्यनुभाव्यत्वं कुतो न स्यादित्याशङ्क्याह ज्ञातृज्ञानान्तराभावादिति । ज्ञाता च ज्ञानञ्च ज्ञातृज्ञाने अन्ये ज्ञातृज्ञाने ज्ञातृज्ञानान्तरे तयोरभावः तस्मादज्ञेयः ज्ञानविषयो न भवति इति । ज्ञात्राद्यभावाद्वा न ज्ञायते असत्त्वाद्वा किमत्र विनिगमने कारणमित्यत आह नत्वसत्तयेति । निद्रानन्दादिसाक्षित्वेनासत्त्वस्य पूर्वमेव निराकृतत्वादिति भावः ॥ १३ ॥

अनुभवरूपस्यात्मनोऽनुभाव्यत्वाभावे दृष्टान्तमाह माधुर्य्यादिस्वभावानामिति । आदिशब्देनाम्लादयो गृह्यन्ते माधुर्य्यादयः स्वभावाः सहजाधर्म्मा येषां ते माधुर्य्यादिस्वभावा गुड़ादयः तेषामन्यत्र स्वसंसृष्टपदार्थेषु अपूपादिषु स्वगुणार्पिणां स्वगुणान् माधुर्य्यादीनर्पयन्तीति स्वगुणार्पिणः तेषां अस्मिन् स्वस्वरूपे गुड़ादिलक्षणे तदर्पणापेक्षा तेषां माधुर्य्यादेरर्पणे संपादने अपेक्षा आकाङ्क्षा माधुर्य्यादिकं केनचित् सम्पादनीयमित्येवंरूपा नैव विद्यते कस्मादन्यदर्पकं नास्ति गुड़ादीनां माधुर्य्यादिप्रदं वस्त्वन्तरं नास्ति इत्यर्थः ॥ १४ ॥

दृष्टान्ते फलितमाह अर्पकान्तरराहित्येऽपि इति । माधुर्य्यादिसमर्पकवस्त्वन्तराभावेऽपि एषां गुड़ादीनां माधुर्य्यादिस्वभावता यथा

स्वयंज्योतिर्भवत्येष पुरोऽस्मात् भासतेऽखिलात्।
तमेव भान्तमन्वेति तद्भासा भासते जगत् ॥ १६ ॥
येनेदं जानते सर्वं तं केनान्येन जानताम्।
विज्ञातारं केन विद्यात् शक्तं वेद्ये तु साधनम् ॥ १७ ॥
स वेत्ति वेद्यं तत् सर्वं नान्यस्तस्यास्ति वेदिता।
विदिताविदिताभ्यां तत् पृथक् बोधस्वरूपकम् ॥ १८ ॥

---

विद्यते एवमात्मनोऽप्यनुभवविषयत्वं माभूत् अनुभवरूपता च भवत्येव इत्यर्थः ॥ १५ ॥

उक्तार्थे प्रमाणमाह स्वयं ज्योतिरिति। अत्रायं पुरुषः स्वयं ज्योतिर्भवति, अस्मात् सर्वस्मात् पुरतः सुविभातं तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति इत्याद्याः श्रुतयः आत्मनः स्वप्रकाशत्वं बोधयन्तीत्यर्थः ॥ १६ ॥

येनेदं सर्वं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानीयात् इति वाक्यमर्थतः पठति येनेदं जानते सर्वमिति। येन साक्षिचैतन्यरूपेणात्मना इदं सर्वं दृश्यजातं जानते प्राणिनस्तं साक्षिणमात्मानमन्येन केन साध्यभूतेन जड़ेन जानतामवगच्छेयुः पुमांसः। अस्यैव वाक्यस्य तात्पर्यमाह विज्ञातारमिति। दृश्यजातस्य विज्ञातारं केन दृश्यभूतेन विद्यात् विजानीयात् न केनापि जानातीत्यर्थः। ननु मनसा ज्ञास्यतीत्याशङ्क्याह शक्तं वेद्ये तु साधनमिति। साधनन्तु ज्ञानसाधनन्तु मनो वेद्ये ज्ञातव्ये विषये शक्तं समर्थं न तु ज्ञातर्यात्मनि नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा इत्यादिश्रुतेः तस्यापि ज्ञेयत्वे कर्मकर्तृत्वविरोधाच्चेति भावः ॥ १७ ॥

आत्मनः स्वप्रकाशत्वे सति स वेत्ति वेद्यं न च तस्यास्ति वेत्ता, अन्यदेव तद्विदितादथो अविदितादधीति वाक्यद्वयमपि प्रमाणमिति

बोधेऽप्यनुभवो यस्य न कथञ्चन जायते ।
तं कथं बोधयेत् शास्त्रं लोष्टं नरसमाकृतिम् ॥ १९ ॥
जिह्वा मेऽस्ति न वेत्युक्तिर्लज्जायै केवलं यथा ।
न बुध्यते मया बोधो बोध्यव्य इति तादृशी ॥ २० ॥
यस्मिन् यस्मिन्नस्ति लोके बोधस्तत्तदुपेक्षणे ।
यद्‌बोधमात्रं तद् ब्रह्मेत्येवं धीर्ब्रह्मनिश्चयः ॥ २१ ॥

---

ब्रह्मात्ममहावाक्यद्वयमर्थतः पठति स वेत्ति वेद्यमिति । स ह्यात्मा यद्‌यद्‌वेद्यं तत् सर्वं वेत्ति तस्यात्मनो वेदिता ज्ञाता अन्यो नास्ति तद्‌बोधस्वरूपकं ब्रह्म विदिताविदिताभ्यां विदितं ज्ञातं ज्ञानेन विषयीकृतम् अविदितं अज्ञातमज्ञानेनावृतं ताभ्यां पृथग् विलक्षणं बोधस्वरूपत्वादेवेत्यर्थः ॥१८॥

ननु विदिताविदितातिरिक्तो बोधो नानुभूयत इत्याशङ्क्य विदितविशेषणस्य वेदनस्यैव बोधरूपत्वात् तदनुभवाभावे विदितस्याप्यनुभवाभावप्रसङ्गाद् बोधानुभवोऽवश्यमङ्गीकर्त्तव्य इति सोपहासमाह बोधेऽप्यनुभवो यस्येति । यस्य मन्दस्य बोधेऽपि घटादिस्फुरणरूपेऽप्यनुभवः साक्षात्कारः कथञ्चन कथमपि न जायते नोत्पद्यते तत् नरसमाकृतिं नरसमाकारं लोष्टं लोष्टवज्जडं मनुष्यं शास्त्रं कथम्बोधयेत् न कथमपि बोधयेदित्यर्थः ॥ १९ ॥

बोधो न बुध्यत इति उक्तिरेव व्याहतेति सदृष्टान्तमाह जिह्वा मेऽस्तीति । जिह्वा मेऽस्ति न वेत्युक्तिभाषणं यथा लज्जायै केवलं लज्जाजननायैव भवति न बुद्धिमत्त्वख्यापनाय जिह्वया विना भाषणानुपपत्तेः । एवं मया बोधो न बुध्यते इतः परं बोध्यव्य इत्युक्तिरपि तादृशी लज्जाहेतुरेव बोधेन विना तद्व्यवहारासिद्धेरित्यर्थः ॥ २० ॥

भवत्वेवंविधः स बोधस्तथापि प्रकृते ब्रह्मात्मबोधे किमायातमित्याशङ्क्याह यस्मिन् यस्मिन्नस्तीति । लोके यस्मिन् यस्मिन् घटादि-

पञ्चकोशपरित्यागे साक्षिबोधावशेषतः।
स्वस्वरूपं स एव स्यात् शून्यत्वं तस्य दुर्घटम् ॥ २२ ॥
अस्ति तावत् स्वयं नाम विवादाविषयत्वतः।
स्वस्मिन्नपि विवादश्चेत् प्रतिवाद्यत्र को भवेत् ॥ २३ ॥

---

लक्षणे विषये बोधो ज्ञानमस्ति तत्तदुपेक्षणे तस्य तस्य घटादिविषयस्योपेक्षणे अनादरणे कृते सति यद्बोधमात्रं घटादिषु सर्वत्रानुस्यूतं यत् स्फुरणमस्ति तदेव ब्रह्मेत्येवंरूपा धीर्बुद्धिः ब्रह्मनिश्चयः ब्रह्मावगतिरित्यर्थः ॥ २१ ॥

ननु घटादिविषयोपेक्षया तदर्थानुभवरूपं ब्रह्मावगम्यते चेत् तर्हि कोशपञ्चकविवेको निष्प्रयोजनः स्यादित्याशङ्क्य ब्रह्मणः प्रत्यग्रूपताज्ञानेन विना संसारानिवृत्तेस्तथात्वावबोधोपयोगित्वात् न तस्यापि वैयर्थ्यमित्याह पञ्चकोशपरित्याग इति। पञ्चानां कोशानाम् अन्नमयादीनां परित्यागे बुद्ध्या अनात्मत्वनिश्चये कृते तत्साक्षिरूपस्य बोधस्यावशेषणात् स साक्षिरूपो बोध एव स्वस्वरूपं स्वं निजं रूपं ब्रह्मैव स्यात्। ननु अन्नमयादीनाम् अनुभवसिद्धानां त्यागे शून्यत्वपरिशेषः स्यादित्याशङ्क्याह शून्यत्वं तस्य दुर्घटमिति। तस्य साक्षिबोधस्य शून्यत्वं दुर्घटं दुःसम्पादमित्यर्थः ॥ २२ ॥

दुर्घटत्वमेवोपपादयति अस्ति तावदिति। स्वयं शब्दवाच्यं स्वस्वरूपं लौकिकानां वैदिकानाञ्च मते तावदस्त्येव कुत इत्यत आह विवादाविषयत्वत इति। स्वस्वरूपस्य विप्रतिपत्तिविषयत्वाभावादित्यर्थः। विपक्षे बाधकमाह स्वस्मिन्नपि विवादश्चेदिति। स्वात्मन्यपि विप्रतिपत्तौ सत्यामस्यां विप्रतिपत्तौ कः प्रतिवादी स्यात् न कोऽपीत्यर्थः ॥ २३ ॥

स्वासत्त्वन्तु न कस्मैचिद्रोचते विभ्रमं विना ।
अतएव श्रुतिर्बाधं ब्रूते चासत्त्ववादिनः ॥ २४ ॥
असद् ब्रह्मेति चेद् वेद स्वयमेव भवेदसन् ।
अतोऽस्य माभूद्वेद्यत्वं स्वसत्त्वन्त्वभ्युपेयताम् ॥ २५ ॥
कीदृक्तर्हीति चेत् पृच्छेदीदृक्ता नास्ति तत्र हि ।
यदनीदृगतादृक् च तत् स्वरूपं विनिश्चिनु ॥ २६ ॥
अक्ष्णां विषयस्त्वीदृक् पराक्त्वात्तादृगुच्यते ।
विषयी नाक्षविषयः स्वत्वान्नास्य पराक्तता ॥ २७ ॥

---

ननु स्वासत्त्ववाद्येव प्रतिवादी भविष्यतीत्याशङ्क्य तथाविधः कोऽपि नास्तीत्याह स्वासत्त्वमिति । भ्रान्तिमेकां विहायान्यस्यां दशायां स्वस्याभावः केनापि नाङ्गीक्रियत इत्यर्थः । कुत एवं निश्चीयत इत्याशङ्क्याह अतएवेति । यतः कस्मैचिन्न रोचते अतएव श्रुतिरप्यसत्त्ववादिनो बाधं ब्रूते ॥ २४ ॥

केयं श्रुतिरित्याकाङ्क्षायाम् असन्नेवेत्यादि मन्त्रमेनं ततो विदुरित्यन्तां श्रुतिमर्थतः पठति असद् ब्रह्मेति चेदिति । यदि ब्रह्मासदिति वेद जानीयात् तर्हि स्वयमेव ब्रह्मणोऽसत्त्वज्ञानी असन् भवेत् स्वस्यैव ब्रह्मरूपत्वादित्यर्थः । फलितमाह अतोऽस्येति ॥ २५ ॥

इदानीमात्मनः स्वप्रकाशत्वं वक्तुकामस्तस्य वेद्यत्वाभावे कीदृक् स्वरूपमिति प्रश्नमुत्थापयति कीदृक् तर्हीति चेदिति । अयमभिप्रायः आत्मन ईदृक्त्वादिना केनापि रूपेण वैशिष्ट्याङ्गीकारे तेनैव रूपेण वेद्यत्वं स्यात् तदनङ्गीकारे शून्यत्वमिति । सत्यमीदृक्त्वाद्यङ्गीकारे तथैव वेद्यत्वं भवेत् तत्तु नाङ्गीक्रियत इत्याह ईदृक्ता नास्तीति । उपलक्षणमेतत् तादृक्त्वस्यापि । उभयाभावमेवाह यदनीदृगतादृक् चेति ॥ २६ ॥

न हि प्रतिपाद्यमानेऽप्यर्थोऽविदित इत्याशङ्क्य ईदृक्तादृक्शब्दयो-

अवेद्योऽप्यपरोक्षोऽतः स्वप्रकाशो भवत्ययम्।
सत्यं ज्ञानमनन्तञ्चेत्यस्तीह ब्रह्मलक्षणम्॥ २८॥
सत्यत्वं बाधराहित्यं जगद्बाधैकसाक्षिणः।
बाधः किंसाक्षिको ब्रूहि न त्वसाक्षिक इष्यते॥ २९॥

---

दर्थमभिदधानस्तदवाच्यत्वमुपपादयति अवाच्यमिति। प्रत्यक्षस्यैव घटादे-रीदृक्शब्दवाच्यत्वं दृष्टं परोक्षस्यैव धर्माधर्मादेस्तादृक्शब्दवाच्यत्वं दृष्टम्। द्रष्टुरात्मनस्तु इन्द्रियजन्यज्ञानविषयत्वाभावादीदृक्त्वं स्वत्वेनैव परो-क्षत्वाभावात् न तादृक्त्वमित्यर्थः॥ २७॥

तर्हि शून्यत्वमिति द्वितीयं पक्षं फलप्रदर्शनव्याजेन परिहरति अवेद्योऽपीति। इन्द्रियजन्यज्ञानविषयत्वाभावेऽप्यपरोक्षत्वात् स्वप्रकाश इत्यर्थः। अत्रायं प्रयोगः आत्मा स्वप्रकाशः संवित्कर्मतामन्तरेणा-परोक्षत्वात् संवेदनवदिति। न च विशेषणासिद्धो हेतुः आत्मनः संवित् कर्मत्वे कर्मकर्तृभावविरोधप्रसङ्गात्। स्वरूपेण कर्तृत्वं विशिष्ट-रूपेण कर्मत्वमित्यविरोध इति चेन्न गमनक्रियायामप्येकस्यैव स्वरूपेणैव कर्तृत्वं विशिष्टरूपेणैव कर्मत्वमित्यतिप्रसङ्गात्। न च साधनविकलो दृष्टान्तः संवेदनस्य संवेदनान्तरापेक्षायामनवस्थानादिति। ननु, आत्मनः स्वप्रकाशत्वे सिद्धेऽपि ब्रह्मणो लक्षणाभावान्न ब्रह्मत्वसिद्धिरित्याशङ्क्य तल्लक्षणं तत्र योजयति सत्यं ज्ञानमिति। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या यद् ब्रह्मणो लक्षणमुक्तं तदिहात्मनि विद्यत इत्यर्थः॥ २८॥

आत्मनः सत्यत्वोपपादनाय तावत् सत्यस्य लक्षणमाह सत्यत्वं बाधराहित्यमिति। बाधशून्यत्वं सत्यत्वं सत्यमबाध्यं बाध्यं मिथ्या इति तद्विवेकस्य पूर्वाचार्य्यैरुक्तत्वात्। अस्तु प्रकृते किमायातमित्यत आह जगद्बाधैकसाक्षिण इति। जगतः स्थूलसूक्ष्मशरीरादिलक्षणस्य यो बाधः सुप्तिमूर्च्छासमाधिषु अविद्यमानता तत्साक्षित्वेनैव वर्त्तमान-स्यात्मनो बाधः किंसाक्षिकः कः साक्षी यस्य बाधस्यासौ किंसाक्षिकः

अपनीतेषु मूर्त्तेषु ह्यमूर्त्तं शिष्यते वियत्।
शक्येषु बाधितेष्वन्ते शिष्यते यत् तदेव तत्॥ ३०॥
सर्वबाधे न किञ्चिच्चेत् यन्न किञ्चित् तदेव तत्।
भाषा एवात्र भिद्यन्ते निर्बाधं तावदस्ति हि॥ ३१॥

---

न कोऽपि साक्षी विद्यते इत्यर्थः। असाक्षिकोऽप्यात्मबाधः किं न स्यादित्याशङ्क्याह नत्वसाक्षिक इति। साक्षिरहितो बाधो नाभ्युपगन्तव्योऽनवस्थाप्रसङ्गादिति भावः॥ २९॥

उक्तमर्थं दृष्टान्तेन स्पष्टयति अपनीतेष्विति। मूर्त्तेषु स्वगृहादिगतेषु घटादिष्वपनीतेषु स्वगृहादिभ्यो निःसारितेषु सत्सु यथापनेतुमशक्यं नभ एवावशिष्यत एवं स्वव्यतिरिक्तेषु मूर्त्तामूर्त्तेषु देहेन्द्रियादिषु निराकर्तुं शक्येषु नेति नेति इत्यादिश्रुत्या निराकृतेषु सत्सु अन्तेऽवसाने सर्वनिराकरणसाक्षित्वेन यो बोधोऽवशिष्यते स एव बाधरहित आत्मेत्यर्थः॥ ३०॥

ननु प्रतीयमानस्य सर्वस्यापि निषेधे किञ्चिन्नावशिष्यते अतः कथं शिष्यते यत् तदेव तदित्यवशिष्टस्यात्मत्वमुच्यत इति शङ्कते सर्वबाधे न किञ्चिच्चेदिति। न किञ्चिदवशिष्यत इति वदतापि तथा प्रयोगसिद्धये सर्वाभावविषयकं ज्ञानमवश्यमभ्युपेतव्यमतस्तदेवास्मदभिमतात्मस्वरूपमित्यभिप्रायेण परिहरति यन्न किञ्चिदिति। न किञ्चिदिति शब्देन यच्चैतन्यमुच्यते तदेव ब्रह्म इत्यर्थः। ननु न किञ्चिदित्यभाववाचकेन न किञ्चिच्छब्देन कथं चैतन्यमुच्यत इत्याशङ्क्य भाषासाक्षिणोऽवश्यमभ्युपेयत्वात् अभिधायकशब्दस्यैव विनिर्दिश्यमभिधेय इति परिहरति भाषा एवात्र भिद्यन्त इति। अत्र बाधसाक्षिणि प्रत्यगात्मनि भाषा एव न किञ्चित् साक्षीत्यादिशब्दा एव भिद्यन्ते निर्बाधं बाधरहितं साक्षिचैतन्यन्तु विद्यत एवेत्यर्थः॥ ३१॥

अत एव श्रुतिर्बाध्यं बाधित्वा शेषयत्यदः ।
स एष नेति नेत्यात्मेत्यतद्व्यावृत्तिरूपतः ॥ ३२ ॥
इदं रूपन्तु यद् यावत् तत् त्यक्तुं शक्यतेऽखिलम् ।
अशक्यो ह्यनिदं रूपः स आत्मा बाधवर्जितः ॥ ३३ ॥
सिद्धं ब्रह्मणि सत्यत्वं ज्ञानत्वन्तु पुरोदितम् ।
स्वयमेवानुभूतित्वादित्यादिवचनैः स्फुटम् ॥ ३४ ॥

---

उक्तमर्थं श्रुत्या दृढं करोति अतएव श्रुतिर्बाध्यमिति । यतः स्वचैतन्यमबाध्यम् अतएव नेति नेत्यात्मेति श्रुतिरतद्व्यावृत्तिरूपतोऽनात्मपदार्थनिराकरणद्वारेण बाध्यं निराकरणयोग्यं सर्वमनात्मवस्तुजातं बाधित्वा निराकृत्य अदो निराकर्तुमशक्यं प्रत्यक्स्वरूपं शेषयति अवशेषयतीत्यर्थः ॥ ३२ ॥

नेति नेति इति श्रुतिर्बाध्ययोग्यं बाधित्वा बाधितुमशक्यम् अवशेषयतीत्युक्तं तत्र कीदृशमशक्यमिति विवक्षायां तदुभयं विभज्य दर्शयति इदं रूपन्त्विति । इदमित्येवं रूपं दृश्यत्वेनानुभूयमानं स्वरूपं यस्य देहादेस्तदिदं रूपं तुशब्दोऽवधारणे यद् यावदिति पदद्वयं सर्वदृश्योपसंग्रहार्थम् एवञ्च सति यद् दृश्यं तदखिलं त्यक्तुं शक्यते एवेत्यर्थः अनिदं रूपः प्रत्यक्त्वेन इदन्तयावगन्तुमयोग्यः साक्षी अशक्यस्त्यक्तुमित्यर्थः । हीति निपातेन प्रसिद्धिद्योतकेन त्यक्तुः स्वरूपत्वेन त्यागायोग्यतां सूचयति । फलितमाह स आत्मा बाधवर्जित इति । यो बाधरहितः साक्षी स एवात्मा नाहङ्कारादिरित्यर्थः ॥ ३३ ॥

भवत्वात्मनोऽबाध्यत्वं प्रकृते किमायातमित्यत आह सिद्धं ब्रह्मणीति । ब्रह्मणि ब्रह्मलक्षणे यत् सत्यत्वमभिहितं तदात्मनि सिद्धम् । भवतु सत्यत्वं ज्ञानत्वं कथमित्याशङ्कायां तत् पूर्वमेव उपपादितमित्याह ज्ञानत्वन्तु पुरोदितमिति । स्वयमेवानुभूतित्वात् विद्यते नानुभाव्यतेत्यादिवचनैः ज्ञानरूपत्वं पूर्वमेवाभिहितमित्यर्थः ॥ ३४ ॥

न व्यापित्वाद् देशतोऽन्तो नित्यत्वान्नापि कालतः।
न वस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणि त्रिधा ॥३५॥
देशकालान्यवस्तूनां कल्पितत्वाच्च मायया।
न देशादिकृतोऽन्तोऽस्ति ब्रह्मानन्त्यं स्फुटं ततः ॥ ३६ ॥
सत्यं ज्ञानमनन्तं यत् ब्रह्म तद् वस्तु तस्य तत्।
ईश्वरत्वञ्जीवत्वमुपाधिद्वयकल्पितम् ॥ ३७ ॥

---

ननु सत्यत्वज्ञानत्वयोरात्मनि सिद्धत्वेऽप्यानन्त्यं न घटते ब्रह्मण्यपि तस्यासिद्धेः, इत्याशङ्क्य ब्रह्मणि तावत् तत् साधयति न व्यापित्वादिति। नित्यं विभुं सर्वगतं सुसूक्ष्मम्, आकाशवत् सर्वगतश्च नित्यः, नित्योऽनित्यानां चेतनश्चेतनानाम्, इदं सर्वं यदयमात्मा, सर्वं ह्येतद्ब्रह्म, ब्रह्मैवेदं सर्वम्, इत्यादिश्रुतिषु व्यापित्वनित्यत्वसर्वात्मत्वप्रतिपादनात् ब्रह्मणस्त्रिविधमप्यानन्त्यं देशकालवस्तुकृतपरिच्छेदराहित्यम् अभ्युपेतव्यमित्यर्थः ॥ ३५ ॥

न केवलं श्रुतितः किन्तु युक्तितोऽपीत्याह देशकालान्यवस्तूनामिति। परिच्छेदहेतूनां देशकालान्यवस्तूनां मायाकल्पितत्वाच्च। गन्धर्वनगरादिभिरिव न देशादिभिः कृतः पारमार्थिकः परिच्छेदो ब्रह्मणि सम्भवति यत अतो ब्रह्मण्यानन्त्यं तावद् व्यक्तमेव। तदेतत् सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येवाविचिकित्स्यमिति ओं सत्यम् आत्मैव तत्सिंह-दनो ब्रह्म भवति अयमात्मा ब्रह्म इत्यादिभिरात्मनो ब्रह्माभेदप्रतिपादनात् तस्याप्यानन्त्यं सिद्धमिति तात्पर्यम् ॥ ३६ ॥

ननु जडस्य जगतो ब्रह्मण्यारोपितत्वेन ब्रह्मणः परिच्छेदकत्वाभावेऽपि चेतनयोर्जीवेश्वरयोस्तदसम्भवात् तत्कृतपरिच्छेदवत्त्वेनानन्त्यं ब्रह्मणो न संभवतीत्याशङ्क्य तयोरप्यौपाधिकरूपत्वेन पारमार्थिकत्वाभावात् न तयोरपि वास्तवपरिच्छेदहेतुत्वम् इत्यभिप्रायेणाह सत्यं ज्ञानमनन्तमिति। यत् सत्यादिरूपं ब्रह्म तद् वस्तु तदेव पारमार्थिकं

शक्तिरस्त्यैश्वरी काचित् सर्ववस्तुनियामिका।
आनन्दमयमारभ्य गूढ़ा सर्वेषु वस्तुषु ॥ ३८ ॥
वस्तुधर्मा नियम्येरन् शक्त्या नैव यदा तदा।
अन्योन्यधर्मसाङ्कर्यात् विप्लवेत जगत् खलु ॥ ३९ ॥
चिच्छायावेशतः शक्तिश्चेतनेव विभाति सा।
तच्छक्त्युपाधिसंयोगात् ब्रह्मैवेश्वरतां व्रजेत् ॥ ४० ॥

---

तस्य ब्रह्मणो यल्लोकप्रसिद्धमीश्वरत्वं जीवत्वञ्च तद् वक्ष्यमाणोपाधिद्वयेन कल्पितम् अतः कल्पितत्वादेव जड़वत् जीवेश्वरयोरपि तत् परिच्छेदकत्वाभाव इति भावः ॥ ३७ ॥

किं तदुपाधिद्वयमित्याकाङ्क्षायां तदुभयं क्रमेण दिदर्शयिषुरादावीश्वरोपाधिभूतां शक्तिं निरूपयति शक्तिरस्त्यैश्वरी काचिदिति। ऐश्वरी ईश्वरोपाधितया ईश्वरसम्बन्धिनी काचित् सदसत्त्वादिभीरूपैर्निर्वक्तुमशक्या सर्ववस्तुनियामिका सर्वेषामन्तर्यामिब्राह्मणोक्तानां पृथिव्यादीनां नियम्यवस्तूनां नियमनकर्त्री शक्तिरस्ति। सा कुत्र तिष्ठति कुतो वा नोपलभ्यते इत्याशङ्क्याह आनन्दमयमिति। आनन्दमयादिषु ब्रह्माण्डान्तेषु वस्तुषु गूढ़ा वर्त्तते अतो नोपलभ्यत इत्यर्थः ॥ ३८ ॥

नियमेनानुपलभ्यमानायास्तस्याः असत्त्वमेव किं न स्यादित्याशङ्क्य जगन्नियमनान्यथानुपपत्त्या सावश्यमभ्युपेया इत्याह वस्तुधर्मा इति। वस्तूनां पृथिव्यादीनां धर्माः काठिन्यद्रवत्वादयो यदा शक्त्या न व्यवस्थाप्यन्ते तदा तेषां धर्माणां साङ्कर्यात् विमिश्रणेनैकत्वावस्थानात् जगद्विप्लवेतानियतव्यवहारविषयतां प्राप्नुयादित्यर्थः खल्विति प्रसिद्धिं द्योतयति ॥ ३९ ॥

ननु जड़ायाः शक्त्या जगन्नियामकत्वं न युज्यते इत्याशङ्क्याह चिच्छायावेशत इति। सा शक्तिश्चिच्छायावेशतः चिदाभासप्रवेशाच्चेतनेव चेतनत्वमापन्नेव विभाति प्रतीयते अतोऽस्या नियामकत्वं घटत

कोशोपाधिविवक्षायां याति ब्रह्मैव जीवताम्।
पिता पितामहश्चैकः पुत्रपौत्रौ यथा प्रति ॥ ४१ ॥
पुत्रादेरविवक्षायां न पिता न पितामहः।
तद्वन्नेशो नापि जीवः शक्तिकोशाविवक्षणे ॥ ४२ ॥
य एवं ब्रह्म वेदैष ब्रह्मैव भवति स्वयम्।
ब्रह्मणो नास्ति जन्मातः पुनरेष न जायते ॥ ४३ ॥
इति पञ्चकोशविवेकः समाप्तः।

---

इति चेत्। अस्तु तर्हि किमायातमित्यत आह तच्छक्तीति। सा चासौ शक्तिश्चेति कर्मधारयः सैवोपाधिस्तेन संयोगः सम्बन्धः तस्मात् ब्रह्मैव सत्यादिलक्षणमीश्वरता सर्वज्ञत्वादिधर्मयोगितां व्रजेत् प्राप्नुयादित्यर्थः ॥ ४० ॥

जीवत्वोपाधिभूतानां कोशानां प्रागेवाभिहितत्वात् तन्निमित्तकं जीवत्वमिदानीम् आह कोशोपाधीति। कोश एवोपाधिः कोशोपाधिः तद्विवक्षया पर्यालोचनया क्रियमाणायां ब्रह्मैव सत्यादिलक्षणमेव जीवता जीवव्यवहारविषयतां गच्छति। ननु एकस्यैव विरुद्धधर्मद्वयाश्रयत्वं युगपत् न क्वापि दृष्टमित्याशङ्क्याह पिता पितामहश्चैक इति। यथा एक एव देवदत्तः एकदैव पुत्रं प्रति पिता भवति पौत्रं प्रति पितामहः एवं तद्वत् कोशोपाधिविवक्षायां जीवो भवति मायोपाधिविवक्षायाम् ईश्वरो भवतीत्यर्थः ॥ ४१ ॥

वस्तुतस्तु जीवत्वमीश्वरत्वं वा ब्रह्मणो नास्त्येवेत्येतत् सदृष्टान्तमाह पुत्रादेरिति ॥ ४२ ॥

इदानीमुक्तस्य ज्ञानस्य फलमाह य एवमिति। यः साधनचतुष्टय पूर्वोक्तप्रकारेण पञ्चकोशविवेकपुरःसरं ब्रह्म प्रत्यगभिन्नं सत्यादिलक्षणं वेद साक्षात् करोति सः स्वयं ब्रह्मैव भवति, स योऽह वैतत्

# चतुर्थपरिच्छेदः।

## द्वैतविवेकः।

ईश्वरेणापि जीवेन सृष्टं द्वैतं विविच्यते।
विवेके सति जीवेन हेयो बन्धः स्फुटीभवेत् ॥ १ ॥

---

परमं ब्रह्म वेद ब्रह्मैव भवति, ब्रह्मविदाप्नोति परमित्यादि श्रुतिभ्यः। ततोऽपि किमित्यत आह ब्रह्मणो नास्तीति। न जायते म्रियते वा विपश्चिदित्यादि श्रुतेर्ब्रह्मणस्तावज्जन्म नास्ति अतएव विद्वानपि स्वात्मनस्तद्रूपत्वावगमात् नैव जायते न च पुनरावर्त्तते इति श्रुतेरिति सिद्धम् ॥ ४२ ॥

इति पञ्चकोषविवेकव्याख्या समाप्ता।

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ।
मया द्वैतविवेकस्य क्रियते पदयोजना ॥

चिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणायाभिमतदेवतातत्त्वानुस्मरणलक्षणं मङ्गलमाचरन् अस्य वेदान्तप्रकरणत्वात् शास्त्रीयमेवानुबन्धचतुष्टयं सिद्धवत् कृत्य ग्रन्थारम्भं प्रतिजानीते ईश्वरेणापीति। ईश्वरेण कारणोपाधिकेनान्तर्यामिना जीवेनापि कार्य्योपाधिनाहं प्रत्ययिना च सृष्टमुत्पादितं द्वैतं जगत् विविच्यते विभज्य प्रदर्श्यते। अस्य द्वैतविवेचनस्य काकदन्तपरीक्षावत् निष्प्रयोजनत्वं वारयन्ति विवेके सतीति। विवेके जीवेश्वरसृष्टयोर्द्वैतयोर्विवेचने कृते सति जीवेन पूर्वोक्तेन हेयः परित्याज्यो बन्धो बन्धहेतुः द्वैतं स्फुटीभवेत् स्पष्टतां गच्छेत् एतावत् जीवेन हेयमिति निश्चीयत इत्यर्थः ॥ १ ॥

मायान्तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरम् ।
स मायी सृजतीत्याहुः श्वेताश्वतरशाखिनः ॥ २ ॥
आत्मा वा इदमग्रेऽभूत् स ऐक्षत सृजा इति ।
सङ्कल्पेनासृजल्लोकान् स एतानिति बह्वृचाः ॥ ३ ॥
खवाय्वग्निजलोर्व्योषध्यन्नदेहाः क्रमादमी ।
सम्भूता ब्रह्मणस्तस्मादेतस्मादात्मनोऽखिलाः ॥ ४ ॥
बहु स्यामहमेवातः प्रजायेयेतिकामतः ।
तपस्तप्त्वाऽसृजत् सर्वं जगदित्याह तित्तिरिः ॥ ५ ॥

---

ननु परद्वारा जीवानामेव जगद्धेतुत्वं वादिनो वर्णयन्ति अतः कथमीश्वरसृष्टत्वं जगत उच्यते इत्याशङ्क्य बहुश्रुतिविरोधाच्चेदं चोद्यमत्रापि वक्तुमर्हतीत्यभिप्रायेण श्वेताश्वतरवाक्यन्तावदर्थतः पठति मायामिति । मायोपाधिकमीश्वरं प्रस्तुत्य अस्मान्मायी सृजते विश्वमेतदिति तस्यैवेश्वरस्य जगत्स्रष्टृत्वं श्वेताश्वतरशाखिनो वर्णयन्तीत्यर्थः ॥ २ ॥

ऐतरेयोपनिषद्वाक्यमर्थतोऽनुसंक्रामति आत्मा वा इति । आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चनमिषत् स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजतेत्यनेन वाक्येनाद्वितीयस्य परमात्मन एव जगतः स्रष्टृत्वं बह्वृचा ऋक्शाखाध्यायिनः आहुः ॥ ३ ॥

ईश्वरस्य जगत्कारणत्वे तैत्तिरीयश्रुतिरपि प्रमाणम् इत्यभिप्रेत्य तद्वाक्यमर्थतः पठति खमिति श्लोकद्वयेन ॥ ४ ॥

बहु स्यामिति । सत्यं ज्ञानमनन्तं ब्रह्म इत्युपक्रम्य तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यादिना प्रकारात् पुरुष इत्यन्तेन वाक्येन गुहाहितत्वेन प्रत्यगभिन्नात् ब्रह्मणः आकाशादिदेहपर्यन्तं जगदुत्पन्नम् इत्यभिधाय उपरिष्टादपि सोऽकामयत बहु स्यां प्रजाये-

इदमग्रे स देवासीद् बहुत्वाय तदैक्षत ।
तेजोऽबन्नाण्डजादीनि ससर्जेति च सामगाः ॥ ६ ॥
विस्फुलिङ्गा यथा वह्नेर्जायन्तेऽक्षरतस्तथा ।
विविधाश्चिज्जडा भावा इत्याथर्वणिकी श्रुतिः ॥ ७ ॥
जगदव्याकृतं पूर्वमासीद् व्याक्रियतेऽधुना ।
दृश्याभ्यां नामरूपाभ्यां विराडादिषु ते स्फुटाः ।
विराण्मनुर्नरा गावः खराश्वाजावयस्तथा ।
पिपीलिकावधि द्वन्द्वमिति वाजासनेयिनः ॥ ८ ॥

---

येति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्चेति वाक्येन तस्यैव ब्रह्मणो जगत्सर्जनेच्छापूर्वकपर्यालोचनेन जगत्स्रष्टृत्वं तैत्तिरिराहेत्यर्थः ॥ ५ ॥

छान्दोग्येऽपि जगत्स्रष्टृत्वं ब्रह्मण एव श्रुतमित्याह इदमग्र इति । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति सद्रूपमद्वितीयं ब्रह्मोपक्रम्य तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत इत्यादिना तस्यैवेक्षणपूर्वकं तेजोऽबन्नस्रष्टृत्वम् अभिधाय तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमित्यादिना आण्डजादिशरीरनिर्मातृत्वञ्च सामगा वर्णयन्तीत्यर्थः ॥ ६ ॥

मुण्डकोपनिषदापि तदेतत् सत्यं यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपास्तथाक्षरात् विविधाः सोम्य ! भावाः प्रजायन्ते तत्र चैवापि यन्तीत्यक्षरशब्दवाच्याद् ब्रह्मणो जगदुत्पत्तिः श्रूयत इत्याह विस्फुलिङ्गा यथेति ॥ ७ ॥

एवं बृहदारण्यकेऽप्यव्याकृतशब्दवाच्याद् ब्रह्मणो नामरूपात्मकं जगदुत्पन्नमिति श्रुतमित्याह जगदव्याकृतमिति । तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूपमिति वाक्येन

कृत्वारूपान्तरं जैवं देहे प्राविशदीश्वरः।
इति ताः श्रुतयः प्राहुर्जीवत्वं प्राणधारणात् ॥ ९ ॥
चैतन्यं यदधिष्ठानं लिङ्गदेहश्च यः पुनः।
चिच्छाया लिङ्गदेहस्था तत् संघोजीव उच्यते ॥ १० ॥
माहेश्वरी तु या माया तस्या निर्माणशक्तिवत्।
विद्यते मोहशक्तिश्च तं जीवं मोहयत्यसौ ॥ ११ ॥

---

सृष्टेः पुरा अस्पष्टनामरूपत्वेनाव्याकृतशब्दवाच्यात् मायोपाधिकात् ब्रह्मणो नामरूपस्पष्टीकरणलक्षणा सृष्टिरुक्ता तयोर्नामरूपयोर्विराडादिषु स्थूलकार्येषु स्पष्टता च तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायमिदं रूप इति वाक्येनाभिहिता ते च विराडादयः आत्मैवेदमग्र आसीत् पुरुषविध इत्यादिना एवमेव यदिदं किञ्च मिथुनमापिपीलिकाभ्यस्तत् सर्वमसृजतेत्यन्तेन दर्शिता इत्यर्थः ॥ ८ ॥

उदाहृताभिः श्रुतिभिरीशसृष्ट्यभिधानानन्तरं ब्रह्मणो जीवरूपेण तत्र प्रवेशोऽप्यभिहित इत्याह कृत्वा रूपान्तरम् इति। जैवं जीवसम्बन्धि रूपान्तरमविक्रियात् ब्रह्मणो विलक्षणं विकारि रूपमित्यर्थः, देहे देहजाते। जीवत्वं कुत इत्यत आह जीवत्वमिति। प्राणादीनां स्वामित्वेन प्रेरकत्वं प्राणधारणं तस्मात् जैवं रूपं कृत्वा प्राविशदित्युक्तम् ॥ ९ ॥

किन्तद्रूपमित्याकाङ्क्षायामाह चैतन्यं यदधिष्ठानमिति। अधिष्ठानं लिङ्गदेहस्याधारभूतं यच्चैतन्यमस्ति यश्च तत्र कल्पितो लिङ्गदेहो यश्च तस्मिन् लिङ्गदेहे विद्यमानश्चिदाभासः तत्सङ्घस्तेषां त्रयाणां समूहो जीवशब्देनोच्यत इत्यर्थः ॥ १० ॥

नन्वीश्वरस्यैव जीवरूपेण प्रविष्टत्वे तस्याल्पत्वदुःखित्वादिविरुद्धधर्मवत्त्वं कुत इत्याशङ्क्याह माहेश्वरी तु या मायेति। माहेश्वरी मायिनन्तु महेश्वरमिति श्रुत्युक्ता महेश्वरसम्बन्धिनी या मायास्ति तस्या

मोहादनीशतां प्राप्य मग्नो वपुषि शोचति ।
ईशसृष्टमिदं द्वैतं सर्वमुक्तं समासतः ॥ १२ ॥
सप्तान्नब्राह्मणे द्वैतं जीवसृष्टं प्रपञ्चितम् ।
अन्नानि सप्त ज्ञानेन कर्मणा जनयत् पिता ॥ १३ ॥
मर्त्यान्नमेकं देवान्ने द्वे पश्वन्नं चतुर्थकम् ।
अन्नत्रितयमात्मार्थमन्नानां विनियोजनम् ॥ १४ ॥

---

निर्माणशक्तिवत् जगद्दर्शनसामर्थ्यवत् मोहशक्तिश्च मोहनसामर्थ्यमस्ति तदेतज्जगत् मोहात्मकमिति स्मृतेः । ततः किमित्यत आह तं जीवमिति । असौ मोहनशक्तिः तं पूर्वोक्तं जीवं मोहयति चिदानन्दादिस्वरूपज्ञानरहितं करोति ॥ ११ ॥

ततोऽपि किमित्यत आह मोहादनीशतामिति । मोहात् पूर्वोक्तात् अनीशतामिष्टानिष्टप्राप्तिपरिहारयोरसमर्थत्वं प्राप्य वपुषि मग्नः शरीरे तादात्म्याभिमानं गतः शोचति दुःखित्वाद्यभिमानं करोति समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान इति श्रुतेरित्यर्थः । वक्ष्यमाणसाङ्कर्यपरिहाराय उक्तं निगमयति ईशसृष्टमिति । समासतः सङ्क्षेपेणेत्यर्थः ॥ १२ ॥

ननु जीवस्य द्वैतस्रष्टृत्वे किं मानमित्याशङ्क्याह सप्तान्नेति । कथं तत्र प्रपञ्चितमित्याशङ्क्य सप्तान्नब्राह्मणवाक्यस्य द्वैतसृष्टिप्रतिपादकं यत् सप्तान्नानि मेधया तपसाऽजनयत् पितेति वाक्यमर्थतः संगृह्णाति अन्नानीति । पिता अदृष्टद्वारा जगदुत्पादनेन सर्वलोकपालको जीव इत्यर्थः ॥ १३ ॥

अन्नसप्तकसर्जनं किमर्थमित्याशङ्क्य तद्विनियोगोऽप्येकमस्य साधारणं द्वे देवानभाजयत् त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् इति वाक्येनोक्त इत्याह मर्त्यान्नमेकमिति । विनियोजनमुक्तमिति शेषः ॥ १४ ॥

व्रीह्यादिकं दर्शपूर्णमासौ क्षीरं तथा मनः ।
वाक् प्राणश्चेति सप्तत्वमन्नानामवगम्यताम् ॥१५॥
ईशेन यद्यप्येतानि निर्मितानि स्वरूपतः ।
तथापि ज्ञानकर्मभ्यां जीवो कार्षीत्तदन्नताम् ॥१६॥
ईशकार्यं जीवभोग्यं जगद्द्वाभ्यां समन्वितम् ।
पितृजन्या भर्तृभोग्या यथा योषित् तथेष्यताम् ॥१७॥
मायावृत्त्यात्मको हीशसङ्कल्पः साधनं जनौ ।
मनोवृत्त्यात्मको जीवसङ्कल्पो भोगसाधनम् ॥१८॥

---

तानि च सप्तान्नानि एकमस्य साधारणमितीदमेवास्य तत् साधारणमन्नं यदिदमद्यत इत्यादिना अयमात्मा वाङ्मयो मनोमयः प्राणमय इत्यन्तेन वाक्यसन्दर्भेण [illegible] दर्शितानीत्याह व्रीह्यादिकमिति ॥ १५ ॥

ननु सप्तान्नानां जगदन्तःपातित्वेनेश्वरनिर्मितत्वात् जीवनिर्मितत्वाभिधानमयुक्तमित्याशङ्क्य तत्स्वरूपस्य ईश्वरनिर्मितत्वेऽपि भोग्यत्वाकारस्य जीवनिर्मितत्वात् नैवमित्याह ईशेन यद्यप्येतानीति । ज्ञानकर्मभ्यां ज्ञानं विहितं प्रतिषिद्धञ्च देवतापरयोषिदादिविषयं ध्यानं कर्म च विहितं यागादिरूपं प्रतिषिद्धं हिंसादिरूपं ताभ्यामित्यर्थः । तदन्नतां तेषां व्रीह्यादिसप्तान्नानां स्वभोगोपकरणत्वमित्यर्थः ॥ १६ ॥

एतावता किमुक्तं भवति तत्राह ईशकार्यमिति । जगत् सप्तान्नलक्षणं व्रीह्यादिरूपमीशकार्यत्वेन जीवभोग्यत्वेन च द्वाभ्यां सम्बद्धमित्यर्थः । एतस्य उभयसम्बन्धे दृष्टान्तमाह पितृजन्येति ॥ १७ ॥

ईशजीवयोर्जगन्निर्माणे किं साधनमित्यत आह मायावृत्त्यात्मको हीति ॥ १८ ॥

ईशनिर्मितमण्यादौ वस्तुन्येकविधे स्थिते ।
भोक्तृधीवृत्तिनानात्वात् तद्भोगो बहुधेष्यते ॥१९॥
हृष्यत्येको मणिं लब्ध्वा क्रुध्यत्यन्यो ह्यलाभतः ।
पश्यत्येव विरक्तोऽत्र न हृष्यति न कुप्यति ॥२०॥
प्रियोऽप्रिय उपेक्ष्यश्चेत्याकारा मणिगास्त्रयः ।
सृष्टा जीवैरीशसृष्टं रूपं साधारणं त्रिषु ॥२१॥
भार्या स्नुषा ननन्दा च याता मातेत्यनेकधा ।
प्रतियोगिधिया योषिद्भिद्यते न स्वरूपतः ॥२२॥

---

नन्वीश्वरसृष्टवस्तुस्वरूपातिरिक्तो भोग्यत्वाकार एव नास्ति को जीवेन सृज्यत इत्याशङ्क्याह ईशनिर्मितेति । एकस्मिन्नेव विषये बहुविधो भोग उपलभ्यमानस्तत्प्रयोजकं भोग्याकारभेदं गमयतीत्यर्थः ॥ १९ ॥

ननु सति भोगभेदे भोग्यभेदः कल्प्येत स एव नास्तीत्याशङ्क्य दृश्यमानत्वान्नैवमित्याह हृष्यत्येक इति । एको मण्यर्थी तं लब्ध्वा हृष्यति अन्यस्तथाविधस्तदलाभात् क्रुध्यति अत्र मणिविषये विरक्तः तं मणिं पश्यत्येव लाभालाभनिमित्तकौ हर्षक्रोधौ न प्राप्नोतीत्यर्थः ॥ २० ॥

के ते भोगभेदोपरक्ता जीवसृष्टा आकारभेदा इत्यत आह प्रियोऽप्रिय इति । मणिस्था प्रियत्वाप्रियत्वोपेक्ष्यत्वलक्षणा आकारभेदा जीवैः सृष्टाः त्रिष्वपि साधारणमनुस्यूतं यन्मणिरूपं तदीश्वरनिर्मितमित्यर्थः ॥ २१ ॥

उक्तं जीवसृष्टाकारभेदमुदाहरणान्तरेण स्पष्टयति भार्या स्नुषेति । ननन्दा भर्तृभगिनी याता देवरपत्नी प्रतियोगिधिया भर्तृश्वशुरादिलक्षणप्रतियोगिगोचरया बुद्ध्या तत्तद्वेषतया इत्यर्थः ॥ २२ ॥

ननु योषिद्विषयाणि भार्या स्नुषेत्यादिज्ञानान्येव भिन्नानि स्वरू-

ननु ज्ञानानि भिद्यन्तामाकारस्तु न भिद्यते ।
योषिद्वपुष्यतिशयो न दृष्टो जीवनिर्मितः ॥२३॥

नैवं मांसमयी योषित् काचिदन्या मनोमयी ।
मांसमय्या अभेदेऽपि भिद्यतेऽत्र मनोमयी ॥२४॥

भ्रान्तिस्वप्नमनोराज्यस्मृतिष्वस्तु मनोमयम् ।
जाग्रन्मानेन मेयस्य न मनोमयतेति चेत् ॥२५॥

बाढं माने तु मेयेन योगात् स्यात् विषयाकृतिः ।
भाष्यवार्त्तिककाराभ्यामयमर्थ उदाहृतः ॥२६॥

मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।
रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥२७॥

---

[illegible] न तु मनःकल्पिताया योषितः स्वरूपभेदो दृश्यते अतः प्रतियोगिनिर्मिता योषिदीश्वरस्य [illegible]मिति शङ्कते ननु ज्ञानानि भिद्यन्तामिति ॥ २३ ॥

ज्ञानवैलक्षण्यस्य ज्ञेयवैलक्षण्याविनाभूतत्वात् ज्ञेयाकारभेदोऽङ्गीकर्तव्य एवेत्यभिप्रायेण परिहरति नैवं मांसमयी योषिदिति ॥ २४ ॥

ननु भ्रान्त्यादिस्थले बाह्यविषयाभावात् तत्रत्यं वस्तु मनोमयमस्तु प्रतीतिस्थले तु तदनुपपन्नं बाह्यवस्तुनः सत्त्वादिति शङ्कते भ्रान्तीत्यादिना । मानेन प्रत्यक्षादिप्रमाणेन मेयस्य प्रमेयस्येत्यर्थः ॥ २५ ॥

प्रतीतिस्थले बाह्यविषयसत्त्वमङ्गीकरोति बाढमिति । कथं तर्हि तत्र मनोमयत्वमुच्यत इत्यत आह माने त्विति । माने विषयाकृतिस्तु तत्र मेयेन योगात् सम्बन्धात् स्यात् । नन्विदं स्वकपोलकल्पितमित्याशङ्क्याह भाष्यवार्त्तिककाराभ्यामिति ॥ २६ ॥

तत्र भाष्यकारवचनमुदाहरति मूषासिक्तमिति । यथा द्रुतं ताम्रं मूषायां सिक्तं तदाकृतिं जायते तद्वत्मानाकारमनुभवति तथा

व्यञ्जको वा यथा लोको व्यङ्ग्यस्याकारतामियात् ।
सर्व्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥२८॥
मातुर्म्मानाभिनिष्पत्तिर्निष्पन्नं मेयमेति तत् ।
मेयाभिसङ्गतं तच्च मेयाभत्वं प्रपद्यते ॥२९॥
सत्येवं विषयौ द्वौ स्तो घटौ मृण्मयधीमयौ ।
मृण्मयो मानमेयः स्यात् साक्षिभास्यस्तु धीमयः ॥३०॥

---

रूपादीन् विषयान् व्याप्नुवत् विषयीकुर्वत् चित्तं ध्रुवमवश्यं तच्चित्रं दृश्यते उपलभ्यत इत्यर्थः ॥ २७ ॥

ननु ताम्रादेरग्निसम्पर्कात् द्रुतस्य मूषानिषिक्तस्य कठिनरूपाभिघातेन शैत्यापत्तौ मूषाकारापत्तावपि बुद्धेरमूर्त्तायास्ताम्रादिविलक्षणाया विषयव्याप्तावपि कुतस्तदाकारापत्तिरित्याशङ्क्य दृष्टान्तान्तरमाह व्यञ्जको वेति । यथा व्यञ्जकः प्रकाशकः आलोकः आतपादिः व्यङ्ग्यस्य प्रकाश्यस्य घटादेराकारतामाकारवत्तामियात् प्राप्नुयात् एवं धीरपि सर्व्वेषां व्यञ्जकत्वात् सकलपदार्थप्रकाशकत्वादर्थस्याकार इवाकारो यस्याः सा तथा प्रदृश्यते प्रकर्षेणोपलभ्यत इत्यर्थः ॥ २८ ॥

इदानीं वार्त्तिककारवचनमाह मातुर्मानाभिनिष्पत्तिरिति । मातुः साधिष्ठानबुद्धिस्थचिदाभासरूपात् प्रमातुर्मानाभिनिष्पत्तिर्मानस्य आभासान्तःकरणवृत्तिरूपस्याभिनिष्पत्तिरुत्पत्तिर्भवतीति शेषः । निष्पन्नमुत्पन्नं तन्मानं मेयं प्रमेयं घटादिरूपमेति प्राप्नोति किञ्च तन्मानं मेयाभिसङ्गतं प्रमेयेण सम्बद्धं सन्मेयाभत्वं मेयस्याभेवाभा यस्य तस्य भावस्तत्त्वं मेयसमानकारता प्रपद्यते प्राप्नोतीत्यर्थः ॥ २९ ॥

भवत्वेव प्रकृते किमायातम् इत्यत आह सत्येवमिति । ननु मृण्मयघटस्येव मनोमयघटस्य तेनैव मनसा ग्रहीतुमशक्यत्वात् ग्राहकान्तराभावादसिद्धिरित्याशङ्क्य ग्राहकान्तराभावोऽसिद्ध इत्याह

अन्वयव्यतिरेकाभ्यां धीमयो जीवबन्धकृत्।
सत्यस्मिन् सुखदुःखे स्तस्तस्मिन्नसति न द्वयम् ॥२१॥
असत्यपि च वाह्यार्थे स्वप्नादौ बध्यते नरः।
समाधिसुप्तिमूर्च्छासु सत्यप्यस्मिन् न बध्यते ॥२२॥
दूरदेशं गते पुत्रे जीवत्येवात्र तत् पिता।
विप्रलम्भकवाक्येन मृतं मत्वा प्ररोदिति ॥२३॥

मृण्मय इति। यथा मृण्मयो मानमेयः साभासान्तःकरणवृत्तिभाव्यस्तथा धीमयः साक्षिभास्य इत्यर्थः ॥ २० ॥

भवत्वेवं द्विविधं द्वैतमत्र कस्य हेयत्वं कस्य वा नेति न ज्ञायत इत्याशङ्क्य जीवकृतस्यैव हेयत्वमित्यभिप्रेत्य तस्य बन्धहेतुत्वं दर्शयति अन्वयव्यतिरेकाभ्यामिति। अन्वयव्यतिरेकावेव दर्शयति सत्यस्मिन्निति। अस्मिन् जीवकृते मानसप्रपञ्चे सति विद्यमाने सुखदुःखे स्तः असति तु तस्मिन् न द्वयं सुखदुःखद्वयं नास्तीत्यर्थः ॥२१॥

नन्वन्वयव्यतिरेकौ बाह्यार्थविषयौ किं न स्यातामित्यत आह असत्यपीति। नरो मनुष्यः एतदुपलक्षणमन्येषामपि, स्वप्नादौ स्वप्नस्मृत्यादिकाले बाह्यार्थेऽनुकूले वनितादौ प्रतिकूले व्याघ्रादौ च धारणादिके विषयेऽसत्यविद्यमानेऽपि बध्यते सुखदुःखाभ्यां युज्यते। समाध्यादिषु तस्मिन् बाह्यार्थे सत्यपि न बध्यते न सुखदुःखादिभाग्भवति अतो बाह्यार्थस्यान्वयव्यतिरेकौ न स्त इत्यर्थः ॥ २२ ॥

जीवमनःप्रपञ्चस्य बन्धकत्वमन्वयव्यतिरेकोदाहरणेन स्पष्टयति दूरदेश इति द्वाभ्याम्। देशान्तरं गते पुत्रे तत्र जीवति सति अत्र स्थितस्तत्पिता विप्रलम्भकस्य मिथ्यावचनैः परवञ्चकस्य जनस्य पुत्रो मृत इत्येवं रूपेण वाक्येन स्वपुत्रं मृतं कल्पयित्वा प्रकर्षेण रोदितीति ॥ २३ ॥

मृतेऽपि तस्मिन् वार्त्तायामश्रुतायां न रोदिति ।
अतः सर्व्वस्य जीवस्य बन्धकृन्मानसं जगत् ॥३४॥
विज्ञानवादो बाह्यार्थवैयर्थ्यात् स्यादिहेति चेत् ।
न हृद्याकारमाधातुं बाह्यस्यापेक्षितत्वतः ॥ ३५ ॥
वैयर्थ्यमस्तु वा बाह्यं न वारयितुमीश्महे ।
प्रयोजनमपेक्षन्ते न मानानीति हि स्थितिः ॥ ३६ ॥
बन्धश्चेन्मानसं द्वैतं तन्निरोधेन शाम्यति ।
अभ्यसेद् योगमेवातो ब्रह्मज्ञानेन किं वद ॥ ३७ ॥

---

तस्मिन्नेव पुत्रे मृतेऽपि तन्मृतिवार्त्तायामश्रुतायां रोदनं न करोति । फलितमाहातः सर्व्वस्येति ॥ ३४ ॥

धीमयस्यैव जगतो बन्धहेतुत्वाङ्गीकारे बाह्यार्थापलापाद्विज्ञानवादापत्तिः स्यादिति शङ्कते विज्ञानवाद इति । परिहरति न हृद्याकारमिति । यद्यपि मानसप्रपञ्चस्यैव बन्धहेतुत्वं तथापि तद्धेतुत्वेन बाह्यार्थस्यापि स्वीकारात् न विज्ञानवादप्रसङ्ग इति भावः ॥ ३५ ॥

ननु हृद्याकारसमर्पणाय बाह्यार्थो नापेक्षणीयः पूर्व्वपूर्व्वमानसप्रपञ्चसंस्कारस्यैव उत्तरोत्तरमानसप्रपञ्चहेतुत्वोपपत्तेरित्याशङ्क्य प्रौढ़िवादेन तदङ्गीकरोति वैयर्थ्यमस्तु वेति । तर्हि विज्ञानवादात् को भेद इत्यत आह बाह्यमिति । विज्ञानवादिनो बाह्यार्थमेव लुम्पन्ति वयं न तथेत्ययमेव भेद इत्यर्थः । प्रयोजनशून्यस्याभ्युपगमोऽप्ययुक्त एवेत्याशङ्क्याह प्रयोजनमिति । मानाधीना वस्तुसिद्धिर्न प्रयोजनाधीना मानसिद्धस्य प्रयोजनशून्यत्वमात्रेणासत्त्वस्य लौकिकैर्वादिभिर्वानभ्युपगमादिति भावः ॥ ३६ ॥

मानसद्वैतस्यैव बन्धहेतुत्वे तस्य मनोनिरोधात्मकेन योगेनैव निवृत्तिसम्भवात् ब्रह्मज्ञानस्य बन्धनिवर्त्तकत्वाभ्युपगमो विरुध्येतेति शङ्कते बन्धश्चेन्मानसं द्वैतमिति ॥ ३७ ॥

तात्कालिकद्वैतशान्तावप्यागामिजनिक्षयः ।
ब्रह्मज्ञानं विना न स्यादिति वेदान्तडिण्डिमः ॥ ३८ ॥
अनिवृत्तेऽपीशसृष्टे द्वैते तस्य मृषात्मताम् ।
बुद्ध्वा ब्रह्माद्वयं बोद्धुं शक्यं वस्त्वैक्यवादिना ॥ ३९ ॥
प्रलये तन्निवृत्तौ तु गुरुशास्त्राद्यभावतः ।
विरोधिद्वैताभावेऽपि न शक्यं बोद्धुमद्वयम् ॥ ४० ॥
अबाधकं साधकं च द्वैतमीश्वरनिर्मितम् ।
अपनेतुमशक्यं चेत्यास्तां तद्द्विष्यते कुतः ॥ ४१ ॥

---

योगेन किं द्वैतोपशमः तात्कालिक उच्यते आत्यन्तिको वेति विकल्प्याद्यमङ्गीकृत्य द्वितीयं दूषयति तात्कालिकद्वैतशान्ताविति । ज्ञात्वा देवं मुच्यते सर्वपाशैः, ज्ञात्वा शिवं शान्तिमत्यन्तमेति यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यतीत्यादिश्रुत्यन्वयव्यतिरेकाभ्यां ब्रह्मज्ञानादेव बन्धनिवृत्तिरभिधीयत इति भावः ॥ ३८ ॥

ननु जाग्रद्द्वैतनिवारणमन्तरेणाद्वितीयब्रह्मज्ञानमेव नोदीयादित्याशङ्क्य तन्निवारणाभावेऽपि तस्य मिथ्यात्वज्ञानादेव पारमार्थिकमद्वैतं बोद्धुं शक्यत इत्याह अनिवृत्तेऽपीति ॥ ३९ ॥

न द्वैतस्वरूपाज्ञानम् अद्वैतज्ञानप्रयोजकमपि तु तन्निवारणमेवेत्यभिनिवेशवन्तं प्रत्याह प्रलय इति । प्रलये प्रलयावस्थायां तन्निवृत्तौ तु तस्य द्वैतस्य निवृत्तौ सत्यामपि विरोधिद्वैताभावेऽप्यद्वैतज्ञानविरोधित्वेन भेदाभिमतस्य द्वैतस्य निवारणे सत्यपि गुरुशास्त्राद्यभावतः गुरुशास्त्रादिरूपस्य ज्ञानसाधनस्याभावाद्धेतोः अद्वयं वस्तु बोद्धुं शक्यं न भवति अतस्तन्निवारणमप्रयोजकमिति भावः ॥ ४० ॥

तथापि सति द्वैते कथमद्वैतज्ञानमित्याशङ्क्याह अबाधकमिति ।

जीवद्वैतन्तु शास्त्रीयमशास्त्रीयमिति द्विधा ।
उपाददीत शास्त्रीयमातत्त्वस्यावबोधनात् ॥ ४२ ॥
आत्मब्रह्मविचाराख्यं शास्त्रीयं मानसं जगत् ।
बुद्धे तत्त्वे तच्च हेयमिति श्रुत्यनुशासनम् ॥ ४३ ॥
शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ।
परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ ४४ ॥
ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेत् ग्रन्थमशेषतः ॥ ४५ ॥

---

ईश्वरनिर्मितद्वैतमबाधकं तत्प्रत्यग्ज्ञानेनैवाद्वैतज्ञानोत्पत्तेरुक्तत्वात् साध-कञ्च गुरुशास्त्रादिरूपस्य तस्य ज्ञानसाधनत्वात् आकाशादिरूपं द्वैत-मस्माभिरपनेतुमशक्यञ्चेति हेतोस्तद्द्वैतमास्तां कुतः कारणात् द्विष्यत इत्यर्थः ॥ ४१ ॥

इदानीं जीवसृष्टं द्वैतं विभजते जीवद्वैतन्त्विति । किं द्विविध-मपि सदा हेयमेव ? न इत्याह उपाददीतेति । आतत्त्वस्यावबोध-नात् तत्त्वस्यावबोधनपर्य्यन्तम् इति यावत् ॥ ४२ ॥

किं तत् शास्त्रीयं द्वैतमित्याकाङ्क्षायामाह आत्मब्रह्मविचाराख्य-मिति । प्रत्यगूपस्य ब्रह्मणो विचाराख्यं यत् श्रवणादिकं तत् शास्त्रीयं मानसं जगदित्यर्थः । ननु आतत्त्वस्यावबोधनादित्युक्तमनुपपन्नम् आसुप्ते-रामृतेः कालं नयेत् वेदान्तवार्त्तया इत्युक्तत्वात् इत्याशङ्क्याह बुद्धे तत्त्व इति । तत्त्वे ब्रह्मात्मैक्यलक्षणे साक्षात्कृते सतीत्यर्थः । तर्हि आसुप्ते-रिति वाक्यस्य का गतिरिति चेत् दद्यान्नावसरं किञ्चित् कामादीनां म-नागपीति पूर्वार्द्धे कामाद्यवसरप्रदानस्य निषिद्धत्वात् तत्परतैवेति वदामः अतो न काप्यनुपपत्तिरिति भावः ॥ ४३ ॥

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥ ४६ ॥
तमेवैकं विजानीत ह्यन्या वाचो विमुञ्चथ ।
यच्छेद् वाङ्मनसी प्राज्ञ इत्याद्याः श्रुतयः स्फुटाः ॥ ४७ ॥
अनात्मीयमपि द्वैतं तीव्रं मन्दमिति द्विधा ।
कामक्रोधादिकं तीव्रं मनोराज्यं तथेतरत् ॥ ४८ ॥
उभयं तत्त्वबोधात् प्राक् निवार्य्यं बोधसिद्धये ।
शमः समाहितत्वञ्च साधनेषु श्रुतं यतः ॥ ४९ ॥
बोधादूर्द्ध्वञ्च तद्धेयं जीवन्मुक्तिप्रसिद्धये ।
कामादिक्लेशबन्धेन युक्तस्य न हि मुक्तता ॥ ५० ॥

---

तत्त्वबोधाभ्यासकाले तद्व्यतिरिक्तप्रतिपादनपराः श्रुतीरुदाहरति शास्त्रा-भ्यासीत्यादि इत्याद्याः श्रुतयः स्फुटा इत्यन्तमिति । तमेवैकं विजा-नीत इत्यनेन तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृत-स्यैष सेतुरिति श्रुतिरर्थतः पठिता ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

अनात्मीयस्यापि द्वैतस्यावान्तरभेदमाह अनात्मीयमपि । तद् द्विविधमपि क्रमेणोदाहरति कामक्रोधादिकमिति । इतरत् मन्द-मित्यर्थः ॥ ४८ ॥

द्विविधस्याप्यनात्मीयद्वैतस्य तत्त्वबोधोत्तरकालमेव हेयत्वं नेत्याह उभयमिति । प्राक् निवार्यत्वे निमित्तमाह बोधसिद्धये इति । तत्र हेतुमाह शम इति । यतस्तत्त्वबोधात् प्राक् तयोर्हेयत्वं तत एव विद्याविरोधित्वं विवक्षितं ब्रह्मज्ञानसाधनेषु मध्ये शान्तः समा-हित इति पदद्वयं शान्तिसमाधी श्रूयेते इत्यर्थः ॥ ४९ ॥

ननु तत्त्वबोधात् प्राक् निवार्यत्वाभिधानात् तदुत्तरकालमस्य जीवतो वांछितेत्याशङ्क्याह बोधादूर्द्ध्वञ्चेति । उक्तमर्थं व्यतिरेक-

जीवन्मुक्तिरियं माभूत् जन्माभावे त्वहं कृती ।
तर्हि जन्मापि तेऽस्त्वेव स्वर्गमात्रात् कृती भवान् ॥५१॥
क्षयातिशयदोषेण स्वर्गो हेयो यदा तदा ।
स्वयं दोषतमात्मायं कामादिः किं न हीयते ॥ ५२ ॥
तत्त्वं बुद्ध्वापि कामादीन् निःशेषं न जहासि चेत् ।
यथेष्टाचरणं ते स्यात् कर्म्मशास्त्रातिलङ्घिनः ॥ ५३ ॥
बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशाञ्चैव को भेदोऽशुचिभक्षणे ॥ ५४ ॥

---

मुखेन दूरयति कामादीति। कामादिरूपो यः क्लेशः स एव बन्धः तेन युक्तस्य बद्धस्य मुक्तता जीवन्मुक्तत्वं न हि नास्त्येवेत्यर्थः ॥५०॥

ननु जन्मादिसंसारादुद्विग्नस्यात्यन्तिकपुरुषार्थरूपया विदेहमुक्त्यैवालं किमनया आपातिकया जीवन्मुक्त्येति शक्यते जीवन्मुक्तिरियमिति। ऐहिकभोगनिवृत्तिभयात् जीवन्मुक्तित्यागे आमुष्मिकभोगनिवृत्तिभयात् विदेहमुक्तिरपि त्याज्या स्यादिति प्रतिबन्द्या परिहरति तर्हि जन्मापीति ॥ ५१ ॥

प्रतिबन्दिमोचनं शङ्कते क्षयातिशयदोषेणेति। दोषयुक्तत्वेन स्वर्गादेस्त्याज्यत्वे सकलपुरुषार्थविघातकत्वेनातीव दोषरूपस्य कामादेः सुतरां त्याज्यत्वमित्याह तदा स्वयं दोषतमेति ॥ ५२ ॥

ननु वैराग्यादिसम्पादनेनात्यन्तानर्थहेतोः कामादेस्त्यक्तत्वात् ऐहिकभोगमात्रोपयोगिकामाद्यभ्युपगमे को दोष इत्याशङ्क्याह तत्त्वं बुद्ध्वापीति। तत्त्ववित्त्वाभिमानेन विधिनिषेधशास्त्रमतिक्रम्य कामाद्यधीनतया वर्त्तमानस्य तव यथेष्टाचरणं स्यादित्यर्थः ॥ ५२ ॥

अस्तु को दोष इत्याशङ्क्य तदनिष्टप्रतिपादनपरं सुरेश्वराचार्य्यवचनमुदाहरति बुद्धाद्वैतसतत्त्वस्येति। बुद्धमद्वैतसतत्त्वमद्वैतस्वरूपं यस्य

बोधात् पुरा मनोदोषमात्रात् क्लिष्टोऽस्यथाधुना ।
अशेषलोकनिन्दा चेत्यहो ते बोधवैभवम् ॥ ५५ ॥
विड्वराहादितुल्यत्वं माकाङ्क्षीस्तत्त्वविद् भवान् ।
सर्वधीदोषसंत्यागात् लोकैः पूज्यस्व देववत् ॥ ५६ ॥
काम्यादिदोषदृष्ट्याद्याः कामादित्यागहेतवः ।
प्रसिद्धा मोक्षशास्त्रेषु तानन्विष्य सुखी भव ॥ ५७ ॥
त्यज्यतामेष कामादिर्मनोराज्ये तु का क्षतिः ।
अशेषदोषबीजत्वात् क्षतिर्भगवतेरिता ॥ ५८ ॥

---

बोधेन च बुद्धाद्वैततत्त्वस्यापि तस्य यथेष्टाचरणं यदि स्यात् तर्हि अशुचि-भक्षणादिकमपि स्यात् तथा सति शुनां तत्त्वदृशाञ्चैव न कोऽपि विशेषः स्यादित्यर्थः ॥ ५४ ॥

एतावता किमनिष्टं कामादित्यागाभावे इत्याशङ्क्य दोषमाह बोधात् पुरेति । तत्त्वज्ञानोदयात् प्राक् कामक्रोधादिचित्तदोषैरेव क्लिष्टोऽभूत् इदानीन्तु सर्वलोकनिन्दामपि सहसे इति कोऽयं गुणग्रहमिति भावः ॥ ५५ ॥

तर्हि किं कर्त्तव्यमित्यत आह विड्वराहादितुल्यत्वमिति । यतोऽद्वैततत्त्वज्ञानवांस्त्वं कामादित्यागाभावेन सर्वधर्मविड्वराहादि-साम्यम् माकाङ्क्षीः किन्तु कामादिसकलमनोदोषहानेन सर्वजनैः देववत् पूज्यस्व पूज्यो भवेत्यर्थः ॥ ५६ ॥

तत्त्यागोपायमाह काम्यादीति । काम्याः कामनाविषयाः स्त्र्या-दयः आदयो येषां क्रोधादीनां ते काम्यादयः तेषां ये दोषाः अनित्यत्व-दुःखमिश्रत्वादयस्तेषां दृष्टिरवलोकनमाद्यं येषां कामसङ्कल्पविचारादीनां ते तथोक्ताः । तेषां कामादित्यागहेतुत्वे प्रमाणमाह प्रसिद्धा इति । अस्तु तत्र विचारानन्विष्यत आह तानन्विष्येति ॥ ५७ ॥

ननु कामादीनां अनर्थहेतुत्वात् त्याज्यत्वमस्तु मनोराज्यस्य तु

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ।
क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ५९ ॥
शक्यं जेतुं मनोराज्यं निर्विकल्प समाधितः ।
सुसम्पादः क्रमात् सोऽपि सविकल्प समाधिना ॥ ६० ॥
बुद्धतत्त्वेन धीदोषशून्येनैकान्तवासिना ।
दीर्घं प्रणवमुच्चार्य्य मनोराज्यं विजीयते ॥ ६१ ॥
जिते तस्मिन् वृत्तिशून्यं मनस्तिष्ठति मूकवत् ।
एतत् पदं वशिष्ठेन रामाय बहुधेरितम् ॥ ६२ ॥

---

तथात्वाभावात् तत् त्यागो नापेक्षित इति शङ्कते त्यज्यतामेव इति । साक्षादनर्थहेतुत्वाभावेऽपि परम्परया तद्धेतुत्वात् त्यज्यमेवेत्यभिप्रेत्य परिहरति सर्वदोषबीजत्वादिति ॥ ५८ ॥

परम्परया अनर्थहेतुत्वप्रदर्शनपरं भगवद्वाक्यमुदाहरति ध्यायतो विषयानिति ॥ ५९ ॥

तर्ह्यस्य मनोराज्यस्य कः परिहारोपाय इत्यत आह शक्यं जेतुमिति । सोऽपि कुतः सिध्यतीत्यत आह । सुसम्पादः क्रमात् सोऽपीति ॥ ६० ॥

नन्वष्टाङ्गयोगयुक्तस्य तथास्तु तद्रहितस्य का गतिरित्यत आह बुद्धतत्त्वेनेति । बुद्धमवगतं तत्त्वं ब्रह्मात्मैक्यलक्षणं येन स बुद्धतत्त्वस्तेन कामक्रोधादिबुद्धिदोषरहितेन एकान्तवासिना विजनदेशनिवासशीलेन पुरुषेण दीर्घं षड्द्वादशादिमात्रोपेतं प्रणवमोङ्कारमुच्चार्य्य मनो राज्यं विजीयते निवार्य्यते इत्यर्थः ॥ ६१ ॥

मनोराज्यविजये किं भवतीत्यत आह जिते तस्मिन्निति । यथा

दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम्।
सम्पन्नञ्चेत् तदोत्पन्ना परा निर्वाणनिर्वृतिः।
विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः।
सन्त्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम्॥ ६३॥
विक्षिप्यते कदाचिद्धीः कर्मणा भोगदायिना।
पुनः समाहिता सा स्यात् तदैवाभ्यासपाटवात्॥६४॥
विक्षेपो यस्य नास्त्यस्य ब्रह्मवित्त्वं न मन्यते।
ब्रह्मैवायमिति प्राहुर्मुनयः पारदर्शिनः॥ ६५॥

---

मतः सकलवागादिव्यापाररहितः तिष्ठति मनोऽपि सर्वव्यापाररहितमव-तिष्ठत इत्यर्थः अद्वितीयमनोऽवस्थानस्य पुरुषार्थत्वे प्रमाणमाह एतत् पदमिति। एतत् पदमद्य दृश्यतामित्यर्थः॥ ६२॥

सार्धश्लोकद्वयमुदाहरति दृश्यमिति। नेह नानास्तीत्यादिश्रुत्या द्वितीयस्य निरस्तजगदभावज्ञानेन मनसः सकाशात् दृश्यनिवारण सम्पन्नं यदि तर्हि निरतिशयमोक्षसुखं निष्पन्नमिति जानीयादित्यर्थः। शास्त्रतात्पर्यं विचारितं तथा मिथः परस्परं गुरुशिष्यादिसंवाद-द्वारा चिरकालं ग्राहितञ्च एवं कृत्वा किं निश्चितमित्यत आह सन्त्यक्तवासनादिति। सम्यक् परित्यक्तकामादिवासनान्मौनात् तूष्णीं भावा-दतोऽधिकः पुरुषार्थो नास्तीति निश्चितमित्यर्थः॥ ६३॥

एवं निर्विकल्पकचित्तस्य प्रारब्धकर्मणा विक्षेपे सति तत्प्रती-कारोपायः क इत्यपेक्षायामाह विक्षिप्यत इति। भोगप्रदेन प्रारब्ध-कर्मणा बुद्धिः कदाचिद्विक्षिप्यते चेत् तर्हि सा बुद्धिरभ्यासपाटवादभ्यास-दार्ढ्यात् तदैव पुनरपि समाहिता स्यादित्यर्थः॥ ६४॥

यदा चित्तविक्षेपरहितस्य ब्रह्मवित्त्वमपि औपचारिकमित्याह विक्षेपो यस्येति। पारदर्शिनः वेदान्तपारं गता इत्यर्थः॥ ६५॥

दर्शनादर्शने हित्वा स्वयं केवलरूपतः।
यस्तिष्ठति स तु ब्रह्मन् ! ब्रह्म न ब्रह्मवित् स्वयम् ॥६६॥
जीवन्मुक्तेः परा काष्ठा जीवद्वैतविवर्जनात्।
लभ्यतेऽसावतोऽत्रेदमीशद्वैताद्विवेचितम् ॥ ६७ ॥

इति द्वैतविवेकः समाप्तः।

---

## पञ्चमपरिच्छेदः।

### महावाक्यविवेकः।

येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च।
स्वाद्वस्वादु विजानाति तत् प्रज्ञानमुदीरितम् ॥ १ ॥

---

अत्रापि वसिष्ठवाक्यमुदाहरति दर्शनादर्शने हित्वा इति। यो ब्रह्म जानामि न जानामि इति व्यवहारद्वयं परित्यज्य स्वयमद्वितीयचैतन्यमात्ररूपेणावतिष्ठते सः स्वयं ब्रह्म न तु ब्रह्मविदित्यर्थः ॥ ६६ ॥

उक्तमद्वैतविवेचनमुपसंहरति जीवन्मुक्तेः परा काष्ठा इति। अथोक्तप्रकारा जीवन्मुक्तेः परा काष्ठा निरतिशयपर्य्यवसानभूमिः जीवद्वैतस्य मनोमयप्रपञ्चस्य विवर्ज्जनात् परित्यागात् लभ्यते प्राप्यते अतः कारणादिदं जीवद्वैतमीश्वरसृष्टात् द्वैतात् विवेचितं विविच्य प्रदर्शितमित्यर्थः ॥ ६७ ॥

इति द्वैतविवेकव्याख्या समाप्ता।

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ।
महावाक्यविवेकस्य कुर्वे व्याख्यां समासतः ॥

मुमुक्षोर्नित्यसाधनब्रह्मात्मैक्यावगतिसिद्धये प्रसिद्धानां चतुर्णां महावाक्यानामर्थं क्रमेण निरूपयन् परमकृपालुराचार्य्य आदौ तावदैतरेया-

चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ २ ॥
परिपूर्णः परात्मास्मिन् देहे विद्याधिकारिणि।
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ ३ ॥

---

ऐतरेयकगतप्रज्ञानं ब्रह्म इति महावाक्यस्थप्रज्ञानशब्दस्यार्थमाह येनेक्षते शृणोतीति। येन चक्षुर्द्वारा निर्गतान्तःकरणवृत्त्युपहितचैतन्येन इदं दर्शनयोग्यं रूपजातम् ईक्षते पश्यति पुरुषः तथा श्रोत्रद्वारा निर्गतान्तःकरणवृत्त्युपाधिकेन येन शब्दजातं शृणोति तथैव घ्राणद्वारा निर्गतान्तःकरणवृत्त्युपहितेन औपाधिकेन येन गन्धजातं जिघ्रति येन वागिन्द्रियावच्छिन्नेन व्याकरोति शब्दजातं व्याहरति येन रसनेन्द्रियद्वारा निर्गतान्तःकरणवृत्त्युपाधिकेन स्वाद्वस्वादु रसौ विजानाति अनुक्तसमुच्चयार्थश्च शब्दः तथा च उक्तानुक्तैः सकलेन्द्रियैरन्तःकरणवृत्तिभेदैर्वोपलक्षितं यच्चैतन्यमस्ति तदेवात्र प्रज्ञानमित्युच्यते इत्यर्थः। अनेन येन वा रूपं पश्यतीत्यादेः, सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि इत्यन्तस्यैतरेयवाक्यसन्दर्भस्यार्थः संक्षिप्य प्रदर्शितः ॥ १ ॥

एवं प्रज्ञानशब्दस्यार्थमभिधाय ब्रह्मशब्दस्यार्थमाह चतुर्मुखेन्द्रदेवेष्विति। उत्तमेषु देवादिषु मध्यमेषु मनुष्यादिषु अधमेषु गवाश्वादिषु [illegible] आकाशादिभूतेषु च जगज्जन्मादिहेतुभूतं यदेकं चैतन्यमस्ति तद्ब्रह्मेत्यर्थः। अनेन च एष ब्रह्मैष इन्द्र इत्यादिश्रुत्यन्तस्य वाक्यस्यार्थः संक्षिप्य दर्शितः। इत्थं पदार्थमभिधाय वाक्यार्थमाह अतः प्रज्ञानं ब्रह्म मय्यपीति। यतः सर्वत्रावस्थितं प्रज्ञानं ब्रह्म ततो मय्यपि स्थितं प्रज्ञानं ब्रह्मैव प्रज्ञानत्वाविशेषादित्यर्थः ॥ २ ॥

एवं ऋक्शाखागतं महावाक्यार्थं निरूप्य यजुःशाखायां बृहदारण्यकोपनिषद्गतस्य अहं ब्रह्मास्मीति महावाक्यस्यार्थाविष्करणार्थं अहंशब्दार्थमाह परिपूर्ण इति। परिपूर्णः स्वभावतो देशकाल-

स्वतः पूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः ।
अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥ ४ ॥
एकमेवाद्वितीयं सत् नामरूपविवर्जितम् ।
सृष्टेः पुराधुनाप्यस्य तादृक्त्वं तदितीर्य्यते ॥ ५ ॥
श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् ।
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ ६ ॥

---

वस्तुभिरपरिच्छिन्नः परमात्मा अस्मिन् मायाकल्पिते जगति विद्याधिकारिणि शमादिसाधनसम्पन्नत्वेन विद्यासम्पादनयोग्येऽस्मिन् श्रवणाद्यनुष्ठानवति देहे मनुष्यादिशरीरे बुद्धेर्बुद्ध्युपलक्षितस्य सूक्ष्मशरीरस्य साक्षितया अविकारित्वेनावभासकतया स्थित्वावस्थाय स्फुरन् प्रकाशमानोऽहमितीर्य्यते लक्षणया अहंपदेनोच्यत इत्यर्थः ॥ ३ ॥

ब्रह्मशब्दार्थमाह स्वतः पूर्ण इति । स्वतः परिपूर्णः स्वभावतो देशकालाद्यनवच्छिन्नः पूर्वोक्तः परमात्मा अत्रास्मिन्महावाक्ये ब्रह्मशब्देन ब्रह्मेत्यनेन पदेन वर्णितः लक्षणयोक्त इत्यर्थः । एतद्वाक्यगतेनास्मीति पदेन पदद्वयसामानाधिकरण्यलभ्यं जीवब्रह्मणोरैक्यं परामृश्यते इत्याह अस्मीत्यैक्यपरामर्श इति । फलितमाह तेन ब्रह्म भवाम्यहमिति ॥ ४ ॥

इदानीं छान्दोग्यश्रुतिगतस्य तत्त्वमसीति वाक्यस्यार्थप्रदर्शनाय तत्पदलक्ष्यार्थमाह एकमेवाद्वितीयमिति । सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयमिति वाक्येन सृष्टेः पुरा स्वगतादिभेदशून्यं नामरूपरहितं यत् सद्वस्तु प्रतिपादितम् अस्य सद्वस्तुनोऽधुनापि सृष्ट्युत्तरकालेऽपि तादृक्त्वं विचारदृष्ट्या तथात्वं तदिति पदेनेर्य्यते लक्ष्यते इत्यर्थः ॥ ५ ॥

त्वंपदलक्ष्यार्थमाह श्रोतुर्देहेन्द्रियातीतं वस्त्वत्रेति । श्रोतुः श्रवणाद्यनुष्ठानेन वाक्यार्थप्रतिपत्तुर्देहेन्द्रियातीतं देहेन्द्रियोपवर्जितं

स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ।
अहङ्कारादिदेहान्तात् प्रत्यगात्मेति गीयते ॥ ७ ॥
दृश्यमानस्य सर्व्वस्य जगतस्तत्त्वमीर्य्यते ।
ब्रह्मशब्देन तद् ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ८ ॥

इति महावाक्यविवेकः समाप्तः ।

---

स्थूलादिशरीरत्रयसाक्षितया तद्विलक्षणं यदस्तु तदेव त्वं पदेरितं वाक्यगतेन त्वमिति पदेन कथितमित्यर्थः । एतद्वाक्यस्थेन असीतिपदेन तत्त्वं पदसामानाधिकरण्यलब्धं जीवपरैक्यं विषयं प्रत्याय्यते इत्याह एकता ग्राह्यतेऽसीति । सिद्धमर्थमाह तदैक्यमनुभूयतामिति । तयो-स्तत्त्वं पदार्थयोरैक्यं प्रमाणसिद्धमेकत्वमनुभूयतां मुमुक्षुभिरित्यर्थः ॥६॥

क्रमप्राप्तस्याथर्वणवेदगतस्य अयमात्मा ब्रह्मेति वाक्यस्यार्थं व्या-चिख्यासुरादावयमात्मेति पदद्वयविवक्षितमर्थं क्रमेण दर्शयति स्वप्र-काशापरोक्षत्वमिति । अयमित्युक्तितोऽयमिति शब्देन स्वप्रकाशापरोक्षत्वं स्वयं प्रकाशत्वेनापरोक्षत्वं मतमभिमतम् अहंकारादिवन्नित्यपरोक्षत्वं घटा-दिवत् इदन्त्वञ्च व्यावर्त्तयितुं विशेषणद्वयमिति बोद्धव्यम् । देहादिष्व-प्यात्मशब्दप्रयोगदर्शनात् आत्मशब्देन किं विवक्षितमित्याकाङ्क्षायामाह अहङ्कारादीति । अहङ्कार आदिर्यस्य प्राणमन इन्द्रियदेहरूपस्य तस्य योऽहङ्कारादिः तथा देहोऽन्तो यस्य एतत्संघातस्य स देहान्तः अह-ङ्कारादिश्चासौ देहान्तश्चेति तथा तस्मात् प्रत्यगभिन्नतया साक्षितया च आत्मा आत्मेति गीयते अस्मिन् वाक्ये इत्यर्थः ॥ ७ ॥

ब्रह्मवचनादिष्वपि ब्रह्मशब्दस्य प्रयोगदर्शनात् तद्व्यावर्त्तनायाम विवक्षितमर्थमाह दृश्यमानस्येति । दृश्यत्वेन मिथ्याभूतस्य सर्वस्या-काशादेर्जगतस्तत्त्वमधिष्ठानतया तद्बाधावधित्वेन च पारमार्थिकं सच्चि-दानन्दस्वरूपं वस्त्वस्ति तत् ब्रह्मशब्देनेर्यते इत्यर्थः । वाक्यार्थमाह

तद्ब्रह्मेति। तदुक्तलक्षणं ब्रह्म स्वप्रकाशात्मा रूपं स्वरूपं यस्य तत् स्वप्रकाशात्मरूपकं स एवेत्यर्थः॥ ८॥

इति महावाक्यविवेकव्याख्या समाप्ता।

---

# षष्ठपरिच्छेदः।

## चित्रदीपः।

यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम्।
परमात्मनि विज्ञेयं तथावस्थाचतुष्टयम्॥ १॥
यथा धौतो घट्टितश्च लाञ्छितो रञ्जितः पटः।
चिदन्तर्य्यामि सूत्राणि विराट् चात्मा तथेर्य्यते॥ २॥

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ।
क्रियते चित्रदीपस्य व्याख्या तात्पर्य्यबोधिनी॥

चिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय परमात्मनीति पदेनेष्टदेवतातत्त्वानुसन्धानलक्षणं मङ्गलमाचरन् अस्य ग्रन्थस्य वेदान्तप्रकरणत्वात् तदीयैरेव विषयादिभिस्तद्वत्तासिद्धिं मनसि निधाय अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते इति न्यायमनुसृत्य परमात्मन्यारोपितस्य जगतः स्थितिप्रकारं सदृष्टान्तं प्रतिजानीते यथा चित्रपटे दृष्टमिति। चित्रपटे यथा वक्ष्यमाणानामवस्थानां चतुष्टयं तथैव परमात्मन्यपि वक्ष्यमाणमवस्थाचतुष्टयं ज्ञेयमिति॥ १॥

किन्तदित्याकाङ्क्षायां दृष्टान्तदार्ष्टान्तिकयोरुभयोरप्यवस्थाचतुष्टयं क्रमेणोदाहरति यथा धौत इति। धौतो घट्टितो लाञ्छितो रञ्जित

स्वतः शुभ्रोऽत्र धौतः स्यात् घट्टितोऽन्नविलेपनात् ।
मस्याकारैर्लाञ्छितः स्यात् रञ्जितो वर्णपूरणात् ॥ ३ ॥
स्वतश्चिदन्तर्यामी तु मायावी सूक्ष्मसृष्टितः ।
सूत्रात्मा स्थूलसृष्ट्यैष विराडित्युच्यते परः ॥ ४ ॥
ब्रह्माद्याःस्तम्बपर्य्यन्ताः प्राणिनोऽत्र जड़ा अपि ।
उत्तमाधमभावेन वर्त्तन्ते पटचित्रवत् ॥ ५ ॥
चित्रार्पितमनुष्याणां वस्त्राभासाः पृथक् पृथक् ।
चित्राधारेण वस्त्रेण सदृशा इव कल्पिताः ॥ ६ ॥

---

इत्येवं प्रकाराश्चतस्रोऽवस्थाः यथा चित्रपटे उपलभ्यन्ते तथा परमात्मन्यपि चिदन्तर्यामी सूत्रात्मा विराट् च इत्यवस्थाचतुष्टयं बोद्धव्यमित्यर्थः ॥ २ ॥

दृष्टान्तस्थितानामवस्थानां स्वरूपं क्रमेण व्युत्पादयति स्वतः शुभ्र इति । चतसृष्ववस्थासु मध्ये स्वतो द्रव्यान्तरसम्बन्धं विना शुभ्रो धौत इत्युच्यते अन्नेन लिप्तो घट्टितः मषीमयैराकारैर्युक्तो लाञ्छितः यथायोग्यवर्णैः पूरितो रञ्जितः स्यात् ॥ ३ ॥

दार्ष्टान्तिके ताः व्युत्पादयति स्वतश्चिदन्तर्यामीत्यादिना । परः परमात्मा स्वतः मायातत्कार्यरहितश्चिदित्युच्यते मायायोगादन्तर्यामी अपञ्चीकृतभूतकार्यसमष्टिसूक्ष्मशरीरयोगात् सूत्रात्मा पञ्चीकृतभूतकार्य्यसमष्टिस्थूलशरीरोपाधियोगाद्विराडिति ॥ ४ ॥

ननु परमात्मनः चित्रपटस्थानीयत्वे तदर्पितानि चित्राणि वक्तव्यानीत्यत आह ब्रह्माद्या इति । अत्र परमात्मनि उत्तमाधमभावेन वर्त्तमानं ब्रह्मादिस्तम्बपर्य्यन्तं चेतनात्मकं गिरिनद्यादिजड़जातञ्च चित्रस्थानीयमित्यर्थः ॥ ५ ॥

ब्रह्मादिचेतनवर्गे चाभासं वक्तुं दृष्टान्तमाह चित्रार्पित-

पृथक् पृथक् चिदाभासाश्चैतन्याध्यस्तदेहिनाम् ।
कल्प्यन्ते जीवनामानो बहुधा संसरन्त्यमी ॥ ७ ॥
वस्त्राभासस्थितान् वर्णान् यद्वदाधारवस्त्रगान् ।
वदन्त्यज्ञास्तथा जीवसंसारं चिद्गतं विदुः ॥ ८ ॥
चित्रस्थपर्वतादीनां वस्त्राभासो न लिख्यते ।
सृष्टिस्थमृत्तिकादीनां चिदाभासास्तथा न हि ॥ ९ ॥
संसारः परमार्थोऽयं संलग्नः स्वात्मवस्तुनि ।
इति भ्रान्तिरविद्या स्यात् विद्ययैषा निवर्त्तते ॥ १० ॥

---

मनुष्याणामिति । यथा चित्रलिखितानां मनुष्यादिशरीराणामेव नानावर्णोपेता वस्त्रविशेषा लिख्यन्ते ते च शीताद्यनिवारकत्वात् वस्त्राभासा एव ॥ ६ ॥

दार्ष्टान्तिकमाह पृथक् पृथगिति । एवं परमात्मन्यारोपितानां देवादीनां शरीराणामेव जीवनामानश्चिदाभासाः प्रत्येकं कल्प्यन्ते न पर्वतादीनाम् । तेषां तत्कल्पने कारणमाह बहुधेति । अमी जीवाः देवतिर्यङ्मनुष्यादिशरीरप्राप्त्या बहुधा संसरन्ति न परमात्मा तस्य निर्विकारत्वादित्यभिप्रायः ॥ ७ ॥

ननु सर्वे वादिनो लौकिकाश्चात्मन एव संसार इति वदन्ति तत्र किं कारणमित्याशङ्क्याज्ञानमेव कारणमिति सदृष्टान्तमाह वस्त्राभासस्थितानिति स्पष्टम् ॥ ८ ॥

गिरिमह्यादीनान्तु चिदाभासकल्पनाभावं दृष्टान्तपुरःसरमाह चित्रस्थपर्वतादीनामिति । प्रयोजनाभावादिति भावः ॥ ९ ॥

एवमात्मन्यारोपितस्य संसारस्य ज्ञाननिवर्त्यत्वसिद्धये तन्मूलभूतामविद्यामाह संसार इति ॥ १० ॥

आत्माभासस्य जीवस्य संसारो नात्मवस्तुनः ।
इति बोधो भवेद्विद्या लभ्यतेऽसौ विचारणात् ॥ ११ ॥
सदा विचारयेत्तस्माज्जगज्जीवपरात्मनः ।
जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥ १२ ॥
नाप्रतीतिस्तयोर्बाधः किन्तु मिथ्यात्वनिश्चयः ।
नो चेत् सुषुप्तिमूर्च्छादौ मुच्येता यत्नतो जनः ॥ १३ ॥
परमात्मावशेषोऽपि तत् सत्यत्वविनिश्चयः ।
न जगद् विस्मृतिर्नो चेत् जीवन्मुक्तिर्न सम्भवेत् ॥ १४ ॥
परोक्षा चापरोक्षेति विद्या द्वेधा विचारजा ।
तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते ॥ १५ ॥

---

केयं विद्या तल्लाभोपायश्च क इत्याकाङ्क्षायां विद्यास्वरूपं तल्लाभोपायञ्च दर्शयति आत्माभासस्येति । चिदाभासस्येत्यर्थः ॥ ११ ॥

विचाराल्लभ्यते विद्येत्युक्तं कस्य विचारादित्याशङ्क्याह सदा विचारयेदिति । ननु परमात्मा विचार्यतां मोक्षावस्थायां फलरूपेणावस्थानात् जीवजगतोर्विचारः क्वोपयुज्यते इत्याशङ्क्य तयोरपवादेन परमात्मावशेषणे उपयुज्यत इत्याह जीवभावेति ॥ १२ ॥

ननु विचारेण जीवजगतोर्बाधे तदप्रतीत्या व्यवहारलोपः प्रसज्येत इत्याशङ्क्य बाधशब्देन विवक्षितमर्थं विविच्य दर्शयन्नाह नाप्रतीति-स्तयोर्बाध इति । सुषुप्तिमूर्च्छादौ स्वत एव द्वैतप्रतीत्यभावात् तत्त्वज्ञानं विनापि मुक्तः स्यादित्यर्थः ॥ १३ ॥

आत्मैव शिष्यत इत्यनेनापि परमात्मनः सत्यत्वज्ञानं विवक्ष्यते न तद्व्यतिरिक्तजगद्विस्मृतिः जीवन्मुक्त्यभावप्रसङ्गात् इत्याह परमात्मावशेषोऽपीति ॥ १४ ॥

सदा विचारयेदित्युक्त्या देहपातपर्यन्तं विचारप्रसक्तौ सत्यां तदवधिमाह परोक्षा चेति ॥ १५ ॥

अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत् ।
अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते ॥ १६ ॥
तत् साक्षात्कारसिद्ध्यर्थमात्मतत्त्वं विविच्यते ।
येनायं सर्वसंसारात् सद्य एव विमुच्यते ॥ १७ ॥
कूटस्थो ब्रह्मजीवेशावित्येवं चिच्चतुर्विधा ।
घटाकाश महाकाशौ जलाकाशाभ्रखे यथा ॥ १८ ॥
घटावच्छिन्नखे नीरं यत्तत्र प्रतिबिम्बितः ।
साभ्रनक्षत्र आकाशो जलाकाश उदीर्य्यते ॥ १९ ॥
महाकाशस्य मध्ये यन्मेघमण्डलमीक्ष्यते ।
प्रतिबिम्बतया तत्र मेघाकाशो जले स्थितः ॥ २० ॥

---

विचारजन्या विद्या परोक्षत्वापरोक्षत्वभेदेन द्विधेत्युक्तम् । तयोरुभयोः स्वरूपं क्रमेण दर्शयति अस्तीति ॥ १६ ॥

एवंविधात्मसाक्षात्कारासाधारणकारणमात्मतत्त्वविवेचनं प्रतिजानीते तत्साक्षात्कारेति । येन साक्षात्कारेण पुमान् सद्य एव विमुच्यते तत्साक्षात्कारसिद्ध्यर्थमिति पूर्वेणान्वयः ॥ १७ ॥

चिदात्मनः पारमार्थिकमेकत्वं सिध्यतु व्यवहारदशायां प्रतीयमानं चैतन्यभेदमुपदिशति कूटस्थ इति । एकस्याश्चितेश्चातुर्विध्ये दृष्टान्तमाह घटाकाशेति ॥ १८ ॥

घटावच्छिन्नस्य घटाकाशस्य तदनवच्छिन्नस्य महाकाशस्य च प्रसिद्धत्वात् तौ विहाय अप्रसिद्धं जलाकाशं व्युत्पादयति घटावच्छिन्नेति । घटावच्छिन्ने आकाशे यदुदकमस्ति तत्र जले प्रतिबिम्बितोऽभ्रनक्षत्रसहित आकाशो जलाकाश इत्युच्यते ॥ १९ ॥

अभ्राकाशं व्युत्पादयति महाकाशस्येति । तत्र मेघमण्डले यज्जलं तस्मिन्नित्यर्थः ॥ २० ॥

मेघांशरूपमुदकं तुषाराकारसंस्थितम् ।
तत्र खप्रतिबिम्बोऽयं नीरत्वादनुमीयते ॥ २१ ॥
अधिष्ठानतया देहद्वयावच्छिन्नचेतनः ।
कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते ॥ २२ ॥
कूटस्थे कल्पिता बुद्धिस्तत्र चित् प्रतिबिम्बकः ।
प्राणानां धारणाज्जीवः संसारेण स युज्यते ॥ २३ ॥
जलव्योम्ना घटाकाशो यथा सर्वस्तिरोहितः ।
तथा जीवेन कूटस्थः सोऽन्योन्याध्यास उच्यते ॥ २४ ॥

---

ननु मेघ जलस्यादृश्यमानत्वात् नभसस्तत्र कथं प्रतिबिम्बितत्वज्ञानमित्याशङ्क्याह मेघांशरूपमिति । मेघस्थस्य जलस्य प्रत्यक्षेणानुपलम्भेऽपि वृष्टिलक्षणकार्येण मेघे तदुपादानमुदकं सूक्ष्मावयवरूपमस्तीति अनुमीयते उदकत्वेनैव लिङ्गेन विमतं जलम् आकाशप्रतिबिम्बवत् भवितुमर्हति जलत्वात् घटगतजलवदित्यनुमानेन मेघांशरूपे जलेऽप्याकाशप्रतिबिम्बसद्भावोऽवगम्यत इत्यर्थः ॥ २१ ॥

एवं दृष्टान्तभूतमाकाशचतुष्टयं व्युत्पाद्य दार्ष्टान्तिके प्रथमोद्दिष्टं कूटस्थं व्युत्पादयति अधिष्ठानतयेति । पञ्चीकृतापञ्चीकृतभूतकार्यत्वेन स्थूलसूक्ष्मरूपस्य देहद्वयस्याविद्याकल्पितस्याधारतया वर्त्तमानत्वेन ताभ्यामवच्छिन्ना आत्मा कूटस्थ इत्युच्यते । तत्र कूटस्थशब्दप्रवृत्तौ निमित्तमाह कूटवदिति ॥ २२ ॥

एवं कूटस्थं व्युत्पाद्य जीवस्य कूटस्थे कल्पितबुद्धिप्रतिबिम्बितत्वेन तदध्यासितत्वात् तं व्युत्पादयति कूटस्थ इति । तस्य जीवशब्दाभिधेयत्वे निमित्तमाह प्राणानामिति । कूटस्थातिरिक्तजीवकल्पनप्रयोजनमित्याशङ्क्य अविकारिणः कूटस्थस्य संसाराभावात् तन्निर्वाहार्थं सोऽङ्गीकर्त्तव्य इत्याह संसारेणेति ॥ २३ ॥

ननु जीवातिरिक्तकूटस्थोऽस्ति चेत् किमिति न प्रतिभासते इत्या-

अयं जीवो न कूटस्थं विविनक्ति कदाचन ।
अनादिरविवेकोऽयं मूलाविद्येति गम्यताम् ॥ २५ ॥
विक्षेपावृतिरूपाभ्यां द्विधाविद्या प्रकल्पिता ।
न भाति नास्ति कूटस्थ इत्यापादनमावृतिः ॥ २६ ॥
अज्ञानी विदुषा पृष्टः कूटस्थं न प्रबुध्यते ।
न भाति नास्ति कूटस्थ इति बुद्धा वदत्यपि ॥ २७ ॥
स्वप्रकाशे कुतोऽविद्या तां विना कथमावृतिः ।
इत्यादितर्कजालानि स्वानुभूतिर्ग्रसत्यसौ ॥ २८ ॥

---

शङ्का जीवेन तिरोहितत्वात् इति सदृष्टान्तमाह जलव्योम्नेति । नन्वेतत् तिरोधानं न क्वापि शास्त्रे प्रतिपादितमित्याशङ्क्य तस्यान्यो-ऽन्याध्यासशब्देनाभिधानात् नैवमित्याह योऽन्योऽन्याध्यास इति । भाष्यादिष्विति शेषः ॥ २४ ॥

नन्वयमेवाध्यासश्चेदस्य कारणरूपाविद्या वक्तव्या इत्याशङ्क्य जीव-कूटस्थयोः संसारदशायां भेदाप्रतीतिरेवाविद्येत्याह अयमिति स्पष्टम् ॥२५॥

पूर्वोक्तस्य जीवस्याविद्याकल्पितत्वस्पष्टीकरणाय अविद्यां विभजते विक्षेपावृतिरूपाभ्यामिति । विक्षेपहेतुत्वेनाभ्यर्हितत्वात् आवृतिं प्रथमं कथयति न भातीति । कूटस्थो न भाति न प्रकाशते नास्ति चेति व्यवहारहेतुरावरणमित्यर्थः ॥ २६ ॥

नन्वविद्यायास्तत्कृतावरणस्य च सद्भावे किं प्रमाणमित्याशङ्क्य लोकानुभव एवेत्याह अज्ञानीति । विदुषा कूटस्थं किं जानासीति पृष्टः अज्ञानी न जानामीति अज्ञानमनुभूय वक्ति अयमविद्यानुभवः न केवलमज्ञानानुभवमेव वक्ति अपि तु नास्ति न भाति कूटस्थ इति कूटस्थाभावाभाने च अनुभूय वदति अयमावरणानुभवः अत उभयत्रानु-भवः प्रमाणमिति भावः ॥ २७ ॥

ननु भवन्मते आत्मनः स्वप्रकाशत्वात् तस्मिन्नविद्या नोपपद्यते

अविद्यावृतकूटस्थे देहद्वययुता चितिः ।
शुक्तौ रूप्यवदध्यस्ता विक्षेपाध्यास एव हि ॥ ३३ ॥
इदमंशस्य सत्यत्वं शुक्तिगं रूप्य ईक्ष्यते ।
स्वयंत्वं वस्तुता चैवं विक्षेपे वीक्ष्यतेऽन्यगम् ॥ ३४ ॥
नीलपृष्ठत्रिकोणत्वं यथा शुक्तौ तिरोहितम् ।
असङ्गानन्दताद्येवं कूटस्थेऽपि तिरोहितम् ॥ ३५ ॥
आरोपितस्य दृष्टान्ते रूप्यं नाम यथा तथा ।
कूटस्थाध्यस्तविक्षेपनामाहमिति निश्चयः ॥ ३६ ॥

---

साधकचैतन्यस्यैव तद्विरोधित्वे अविद्याप्रतीतिरेव न स्यादिति भावः तर्ह्यविद्यायाः को विरोधीत्यत आह विवेकस्त्विति । विवेक उपनिषद्विचारजन्यं ज्ञानम् । विवेकस्याविद्याविरोधित्वं क दृष्टमित्यत आह तत्त्वज्ञानिनीति ॥ ३२ ॥

एवमविद्यावरणं दर्शयित्वा विक्षेपाध्यासमाह अविद्यावृतेति । पूर्वोक्ताविद्यावरणवति कूटस्थे प्रत्यगात्मनि आरोपितस्थूलसूक्ष्मशरीरसहितचिदाभासो विक्षेपाध्यास इत्यर्थः ॥ ३३ ॥

अस्य विक्षेपस्याध्यासत्वसिद्धये शुक्तिरजताध्याससाम्यं दर्शयति इदमंशस्येति । शुक्तिकायां स्थितं पुरोदेशादिसम्बन्धित्वमबाध्यत्वञ्च यथारोपिते रजते भासते एवं स्वयंत्वं वस्तुत्वञ्च कूटस्थनिष्ठमारोपिते चिदाभासेऽवभासत इत्यर्थः ॥ ३४ ॥

एवं सामान्यांशप्रतीतिसाम्यं प्रदर्श्य विशेषांशाप्रतीतिसाम्यं दर्शयति नीलपृष्ठत्रिकोणत्वमिति ॥ ३५ ॥

साम्यान्तरं दर्शयति आरोपितस्येति । दृष्टान्ते शुक्तिस्थले आरोपितपदार्थस्य रूप्यं नाम यथा एवं कूटस्थे कल्पितचिदाभासरूपविक्षेपस्य पूर्वोक्तस्याहमिति नामेत्यर्थः ॥ ३६ ॥

इदमंशं स्वतः पश्यन् रूप्यमित्यभिमन्यते ।
तथा स्वञ्च स्वतः पश्यन्नहमित्यभिमन्यते ॥ ३७ ॥
इदन्त्वरूप्यते भिन्ने स्वत्वाहन्ते तथेष्यताम् ।
सामान्यञ्च विशेषश्चेत्युभयत्रापि गम्यते ॥ ३८ ॥
देवदत्तः स्वयं गच्छेत् त्वं वीक्षस्व स्वयन्तथा ।
अहं स्वयं न शक्नोमीत्येवं लोके प्रयुज्यते ॥ ३९ ॥
इदं रूप्यमिदं वस्त्रमिति यद्वदिदन्तथा ।
असौ त्वमहमित्येषु स्वयमित्यभिमन्यते ॥ ४० ॥

---

ननु दृष्टान्ते पुरोवर्तिनि शुक्तिशकले इन्द्रियसंप्रयोगे जाते सति रूप्यमिदमिति तदतिरिक्तरजताभिमानः उपपद्यते नैवं दार्ष्टान्तिके कूटस्थातिरिक्तत्वाभिमानम् इत्याशङ्क्य अत्रापि स्वप्रकाशतया चिदाभासस्याभिमाने तदतिरिक्ताहमित्यभिमान उपलभ्यते अतो न वैषम्यमित्यभिप्रायेणाह इदमंशमिति ॥ ३७ ॥

ननु स्वयमहंशब्दयोरेकार्थत्वात् कथं दृष्टान्तदार्ष्टान्तिकयोः साम्यमित्याशङ्क्य इदंरूप्यशब्दार्थयोः स्वयमहंशब्दार्थयोश्च सामान्यविशेषरूपत्वेन साम्यमस्तीत्याह इदन्त्वरूप्यते भिन्ने इति ॥ ३८ ॥

स्वयंशब्दार्थस्य सामान्यरूपत्वं स्पष्टीकर्तुं लौकिकप्रयोगं दर्शयति देवदत्त इति ॥ ३९ ॥

अस्मिन् प्रयोगे लोके कृतेऽप्येतावता स्वयंशब्दार्थस्य सामान्यरूपत्वमित्याशङ्क्य इदंशब्दार्थवदित्याह इदं रूप्यमिति । यथा रूप्यवस्त्रादौ सर्वत्रेदंशब्दस्य प्रयुज्यमानत्वात् तदर्थस्य सामान्यरूपत्वं तथाऽसौ त्वमहमित्यादौ सर्वत्र स्वयंशब्दप्रयोगात् तदर्थस्यापि सामान्यरूपत्वमवगम्यत इत्यर्थः ॥ ४० ॥

अहन्त्वात् भिद्यतां स्वत्वं कूटस्थे तेन किं तव ।
स्वयंशब्दार्थ एवैष कूटस्थ इति मे भवेत् ॥ ४१ ॥
अन्यत्ववारकं स्वत्वमिति चेदन्यवारणम् ।
कूटस्थस्यात्मतां वक्तुरिष्टमेव हि तद् भवेत् ॥ ४२ ॥
स्वयमात्मेति पर्य्यायस्तेन लोके तयोः सह ।
प्रयोगो नास्त्यतः स्वत्वमात्मत्वञ्चान्यवारकम् ॥ ४२ ॥
घटः स्वयं न जानातीत्येवं स्वत्वं घटादिषु ।
अचेतनेषु दृष्टञ्चेद् दृश्यतामात्मसत्त्वतः ॥ ४४ ॥

---

भवतु स्वयमहंशब्दार्थयोर्लोके भेदः एतावता कूटस्थात्मनि किमायातमिति पृच्छति अहन्त्वादिति । सामान्यरूपः स्वयंशब्दार्थ एव कूटस्थ इतीदमायातमित्याह स्वयंशब्दार्थ इति ॥ ४१ ॥

ननु स्वत्वरूपो धर्मोऽन्यत्वं निवारयति न कूटस्थं बोधयतीति शङ्कते अन्यत्ववारकमिति । स्वयंशब्दार्थस्य कूटस्थस्यैवात्मत्वात् स्वत्वेनान्यत्ववारणमिष्टमेवेति परिहरति अन्यवारणं कूटस्थस्येति ॥ ४२ ॥

ननु स्वयमात्मशब्दयोर्भिन्नप्रवृत्तिनिमित्तयोर्गवाश्वादिशब्दयोरिवार्थैक्याभावात् कथं स्वयंशब्दार्थस्य कूटस्थस्यात्मत्वमित्याशङ्क्य हस्तकरादिशब्दवदेकार्थत्वोपपत्तेर्नैवमिति परिहरति स्वयमात्मेति पर्य्याय इति । पर्य्यायत्वे सहप्रयोगाभावहेतुमाह तेन लोक इति । फलितमाह अतः स्वत्वमिति ॥ ४२ ॥

ननु घटादिष्वचेतनेष्वपि स्वयंशब्दस्य प्रयोगदर्शनात् स्वयन्त्वात्मत्वयोरैकत्वं न घटत इति शङ्कते घटः स्वयमिति । घटादिष्वपि स्फुरणरूपेणात्मचैतन्यस्य सत्त्वात् तेष्वपि स्वयंशब्दस्य प्रयोगो न विरुध्यत इत्याह दृश्यतामिति ॥ ४४ ॥

चेतनाचेतनभिदा कूटस्थात्मकृता न हि ।
किन्तु बुद्धिकृताभासकृतैवेत्यवगम्यताम् ॥ ४५ ॥
यथा चेतन आभासः कूटस्थे भ्रान्तिकल्पितः ।
अचेतनो घटादिश्च तथा तत्रैव कल्पितः ॥ ४६ ॥
तत्त्वेदन्ते अपि स्वत्वमिव त्वमहमादिषु ।
सर्वत्रानुगते तेन तयोरप्यात्मतेति चेत् ॥ ४७ ॥
ते आत्मत्वेऽप्यनुगते तत्त्वेदन्ते ततस्तयोः ।
आत्मत्वं नैव सम्भाव्यं सम्यक्त्वादेर्यथा तथा ॥ ४८ ॥

---

ननु घटादिष्वपि आत्मचैतन्यसत्त्वे चेतनाचेतनविभागो निर्निमित्तकः स्यादित्याशङ्क्य चिदाभाससत्त्वासत्त्वलक्षणकारणसद्भावात् सनिमित्त [illegible] चेतनाचेतनभिदेति ॥ ४५ ॥

ननु चेतन [illegible] चिदाभाससत्त्वासत्त्वयुक्तत्वाभ्युपगमे ऽचेतनस्य [illegible] निष्प्रयोजनः स्यादित्याशङ्क्य चेतनाचेतनविभागं [illegible] कूटस्थानभ्युपगमे ऽप्यचेतनकल्पना [illegible] कूटस्थे [illegible] घटादेस्तत्र कल्पितत्वे दृष्टान्तमाह यथा चेतन [illegible] इति ॥ ४६ ॥

आत्मत्वानयोरप्यस्तीति शङ्कते तत्त्वेदन्ते अपीति । त्वमहमादिषु सर्वत्रानुगतस्य [illegible] सर्वानुगतत्वं तत्त्वेदन्तयोरप्यात्मत्वं किं न स्यादिति भावः ॥ ४७ ॥

तत्त्वेदन्तयोरात्मत्वाधिकरण[illegible]त्वं तु आत्मत्वं न सम्भवतीत्याह ते इति । तत्त्वेदन्ते आत्मत्वमिव यद्यपि त्वमहमादिषु अनुगते तथापि [illegible] आत्मत्वेऽप्यनुगते तदात्मत्वमिदमात्मत्वमित्यादि[illegible] ततस्तयोरात्मत्वादिधर्म[illegible] न सम्भाव्यते । तत्र दृष्टान्तः सम्यक्त्वादेरिति । आत्मत्व [illegible] त्वमहत्व-

तत्त्वेदन्ते स्वतान्यत्वे त्वन्ताहन्ते परस्परम्।
प्रतिद्वन्द्वितया लोके प्रसिद्धे नास्ति संशयः॥ ४९ ॥
अन्यतायाः प्रतिद्वन्द्वी स्वयं कूटस्थ इष्यताम्।
त्वन्तायाः प्रतियोग्येषोऽहमित्यात्मनि कल्पितः॥ ५० ॥
अहन्तास्वत्वयोर्भेदे रूप्यतेदन्तयोरिव।
स्पष्टेऽपि मोहमापन्ना एकत्वं प्रतिपेदिरे॥ ५१ ॥
तादात्म्याध्यास एवात्र पूर्वोक्ताविद्यया कृतः।
अविद्यायां निवृत्तायां तत्कार्य्यं विनिवर्त्तते॥ ५२ ॥

---

रिति व्यवहारवशादात्मन्यप्यनुवर्त्तमानयोः सम्यक्त्वासम्यक्त्वयो-रित्यर्थः ॥ ४८ ॥

एवं प्रासङ्गिकं परिसमाप्य फलितप्रदर्शनाय लोकव्यवहारसिद्धार्थ-मनुवदति तत्त्वेदन्ते इति । तत्त्वप्रतियोगित्वम् इदन्तायास्तदिदमिति स्वत्वप्रतियोगित्वमन्यत्वस्य स्वयमन्य इति त्वन्ताप्रतियोगित्वमहन्तायास्त्व-महमिति लोके प्रतिद्वन्द्वित्वेन प्रयोगदर्शनात् प्रसिद्धमिति भावः ॥ ४९

भवत्वेवं लोके प्रकृते किमायातमित्यत आह अन्यताया इति । अन्यत्वप्रतियोगी स्वयंशब्दार्थः कूटस्थः त्वन्ताप्रतियोग्यहंशब्दार्थश्चिदा-भासः कूटस्थे कल्पित इत्यर्थः ॥ ५० ॥

ननूक्तप्रकारेण जीवकूटस्थयोर्भेदे सत्यपि सर्वैरित्थं किमिति न जानन्तीत्याशङ्क्याह अहन्तास्वत्वयोर्भेद इति । बुद्धिसाक्षिणः कूटस्थस्य बुद्ध्या प्रत्यक्षीकर्तुमशक्यत्वादहं स्वयमिति प्रतिभासमानयोर्जीवकूट-स्थयोर्भ्रान्त्यैकत्वं प्रतिपन्ना इत्यर्थः ॥ ५१ ॥

ननु जीवकूटस्थयोरेकत्वभ्रमस्य किं कारणमित्यपेक्षायामाह तादात्म्येति । अत्रास्मिन् ग्रन्थेऽनादिरविवेकोऽयमित्यनेनोक्तया अवि-द्ययेत्यर्थः । यतोऽविद्याकार्य्यत्वमध्यासस्य अतोऽविद्यानिवर्त्तकतत्त्व-ज्ञानेनैव तन्निवृत्तिरित्यत आह अविद्यायामिति ॥ ५२ ॥

अविद्यावृतितादात्म्ये विद्ययैव विनश्यतः ।
विक्षेपस्य स्वरूपं तु प्रारब्धक्षयमीक्षते ॥ ५३ ॥
उपादाने विनष्टेऽपि क्षणं कार्यं प्रतीक्ष्यते ।
इत्याहुस्तार्किकास्तद्वदस्माकं किं न सम्भवेत् ॥ ५४ ॥
तन्तूनां दिनसंख्यानां तैस्तादृक् क्षण ईरितः ।
भ्रमस्यासंख्यकल्पस्य योग्यः क्षण इहेष्यताम् ॥ ५५ ॥
विना क्षोदक्षमं मानं तैर्वृथा परिकल्प्यते ।
श्रुतियुक्त्यनुभूतिभ्यो वदतां किन्नु दुःशकम् ॥ ५६ ॥

---

ननु अध्यासस्याविद्याकार्यत्वात् तन्निवृत्त्या निवृत्तिरिति तदनुपपन्नं ब्रह्मात्मैकत्वविद्यायामुत्पन्नायामविद्याकार्यस्य देहादेरप्युपलभ्यमानत्वात् इत्यत आह अविद्यावृतितादात्म्य इति । अविद्यैककारणयोरावृतितादात्म्ययोर्विद्ययैव निवृत्तिः कर्मसहिताविद्याजन्यस्य तु विक्षेपस्वरूपस्य कर्मावसानपर्यन्तमवस्थानमित्यविरोध इति भावः ॥ ५३ ॥

ननु प्रारब्धकर्मणो निमित्तमात्रत्वात् तत्सद्भावमात्रेण उपादाने विनष्टेऽपि कथं कार्यानुवृत्तिरित्याशङ्क्य शास्त्रान्तरसिद्धदृष्टान्तेन तदनुवृत्तिं सम्भावयति उपादाने विनष्टेऽपीति ॥ ५४ ॥

ननु तार्किकैः क्षणमात्रं कार्यस्यावस्थानमङ्गीकृतं न चिरकालमित्याशङ्क्याह तन्तूनामिति । संसारस्यानादिकालमारभ्यानुवृत्तत्वात् तत्संस्कारवशेन कुलालचक्रभ्रमिवच्चिरकालानुवृत्तिर्न विरुध्यत इति भावः ॥ ५५ ॥

ननु तार्किकैर्यथा क्षणमात्रमभिहितं तद्वद् भवतापि इत्याशङ्क्य स्वोक्तौ ततो वैषम्यं दर्शयति विना क्षोदक्षममिति । क्षोदक्षमं विचारसहं मानं विना प्रमाणमन्तरेणेत्यर्थः । तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति श्रुतिः कुलालचक्रादिदृष्टान्तो युक्तिः । अनुभूतिर्विद्वदनुभवः एताभ्यः प्रमाणेभ्यः किं वक्तुमशक्यमित्यभिप्रायः ॥ ५६ ॥

आस्तां दुस्तार्किकैः सार्द्धं विवादः प्रकृतं ब्रुवे ।
स्वाहमोः सिद्धमेकत्वं कूटस्थपरिणामिनोः ॥ ५७ ॥
भ्राम्यन्ते पण्डितम्मन्याः सर्वे लौकिकतार्किकाः ।
अनादृत्य श्रुतिं मौर्ख्यात् केवलां युक्तिमाश्रिताः ॥ ५८ ॥
पूर्व्वापरपरामर्शविकलास्तत्र केचन ।
वाक्याभासान् स्वस्वपक्षे योजयन्त्यप्यलज्जया ॥ ५९ ॥
कूटस्थादिशरीरान्तसंघातस्यात्मतां जगुः ।
लोकायताः पामराश्च प्रत्यक्षाभासमाश्रिताः ॥ ६० ॥
श्रौतीकर्त्तुं स्वपक्षन्ते कोशमन्नमयन्तथा ।
विरोचनस्य सिद्धान्तं प्रमाणं प्रतिजज्ञिरे ॥ ६१ ॥

---

प्रकृतमनुसरति आस्तामिति । स्वशब्दाहंशब्दार्थयोः कूटस्थपरिणामिनोः एकत्वं भ्रान्त्या सिद्धम् ॥ ५७ ॥

ननु कूटस्थजीवयोरेकत्वं भ्रान्तिसिद्धञ्चेत् इदं भ्रान्तमिति केऽपि कुतो न जानन्तीत्याशङ्क्य श्रुतितात्पर्य्यपर्य्यालोचनशून्यत्वादित्याह भ्राम्यन्ते पण्डितम्मन्या इति ॥ ५८ ॥

ननु श्रुत्यर्थाश्रयकारोऽपि केचिदित्यं कुतो न जानन्तीत्याशङ्क्य तेषां साकल्येन श्रुत्यर्थपर्य्यालोचनाभावात् इत्याह पूर्व्वापरपरामर्शविकला इति ॥ ५९ ॥

तत्र तावत् प्रत्यक्षैकप्रमाणाभ्युपगमेनातिस्थूलत्वात् लोकायतादिपक्षं प्रथमतोऽनुभाषते कूटस्थादीति । प्रत्यक्षसिद्धत्वे देहादेरात्मत्वं पारमार्थिकं स्यादित्याशङ्क्य उक्तं प्रत्यक्षाभासमिति ॥ ६० ॥

ते प्रत्यक्षैकप्रमाणवादिनोऽपि परव्यामोहनाय स्वमतं श्रुतिसिद्धमिति दर्शयितुं वाक्यमप्युदाहरन्तीत्याह श्रौतीकर्त्तुमिति । कोशमन्नमयमिति शब्देनान्नमयकोशप्रतिपादकं स वा एष पुरुषोऽन्नरसमय इत्यादिवाक्यं लक्ष्यते विरोचनस्य सिद्धान्तमिति तत्सिद्धान्तप्रतिपादकं

जीवात्मनिर्गमे देहमरणस्यात्र दर्शनात् ।
देहातिरिक्त एवात्मेत्याहुर्लोकायताः परे ॥ ६२ ॥
प्रत्यक्त्वेनाभिमताहन्धीर्देहातिरेकिणम् ।
गमयेदिन्द्रियात्मानं वच्मीत्यादिप्रयोगतः ॥ ६३ ॥
वागादीनामिन्द्रियाणां कलहः श्रुतिषु श्रुतः ।
तेन चैतन्यमेतेषामात्मत्वं तत एव हि ॥ ६४ ॥
हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिरे ।
चक्षुराद्यक्षलोपेऽपि प्राणसत्त्वे तु जीवति ॥ ६५ ॥
प्राणो जागर्त्ति सुप्तेषु प्राणश्रैष्ठ्यादिकं श्रुतम् ।
कोषः प्राणमयः सम्यक् विस्तरेण प्रपञ्चितः ॥ ६६ ॥

आत्मेत्यादिवाक्यं उच्यते एतद्वाक्यद्वयं प्रमाणत्वेन प्रतिजानते एव न तूपपादयितुं क्षमाः प्रकरणविरोधादिति भावः ॥ ६१ ॥

चार्वाकमते दोषप्रदर्शनपुरःसरं मतान्तरमुत्थापयति जीवात्मनिर्गम इति ॥ ६२ ॥

कीदृशो देहातिरिक्त आत्मा केन वा प्रमाणेनावगम्यते इत्या-काङ्क्षायामाह प्रत्यक्त्वेनेति अहं वच्मि अहं पश्यामीत्यादिप्रयोग-दर्शनात् देहातिरिक्तत्वबुद्धिगम्यानीन्द्रियाण्येव आत्मेत्यर्थः ॥ ६३ ॥

ननु इन्द्रियाणामचेतनानां कथमात्मत्वमित्याशङ्क्य श्रुतिष्विन्द्रिय-संवादश्रवणाच्चेतनत्वमवगम्यत इत्याह वागादीनामिति । चेतनत्वस्यैवा-त्मलक्षणत्वात् चेतनानामिन्द्रियाणामात्मत्वमुचितमित्याहात्मत्वं तत एवेति ॥ ६४ ॥

मतान्तरमुत्थापयति हैरण्यगर्भा इति ॥ ६५ ॥

प्राणस्यात्मत्वे श्रौतलिङ्गानि दर्शयति प्राणो जागर्तीति । प्राणा-त्मवादिनाम् पुरे कायमतीत्यादिना प्राणप्राधान्यं श्रूयते तद्प्राधा

मन आत्मेति मन्यन्त उपासनपरा जनाः ।
प्राणस्याभोक्तृता स्पष्टा भोक्तृत्वं मनसस्ततः ॥ ६७ ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
श्रुतो मनोमयः कोषस्तेनात्मेतीरितं मनः ॥ ६८ ॥
विज्ञानमात्मेति पर आहुः क्षणिकवादिनः ।
यतोविज्ञानमूलत्वं मनसो गम्यते स्फुटम् ॥ ६९ ॥
अहं वृत्तिरिदं वृत्तिरित्यन्तःकरणं द्विधा ।
विज्ञानं स्यादहंवृत्तिरिदंवृत्तिर्मनो भवेत् ॥ ७० ॥
अहंप्रत्ययबीजत्वमिदंवृत्तेरतिस्फुटम् ।
अविदित्वा स्वमात्मानं बाह्यं वेद न तु क्वचित् ॥ ७१ ॥

---

प्रयत्ने तत उदतिष्ठत् तदुक्थमभवत् तदेतदुक्थमिति प्राणश्चैत्यादिकं श्रूयते अन्योऽन्तर आत्मा प्राणमय इत्यादिना प्राणमयः कोषः प्रपञ्चितः आदिशब्देन प्राणसंवादप्रवेशादिकं ग्राह्यम् ॥ ६६ ॥

प्राणादप्यान्तरस्य मनस आत्मत्ववादिनो मतं दर्शयति मन आत्मेतीति । प्राणस्यानात्मत्वे युक्तिमाह प्राणस्याभोक्तृतेति ॥ ६७ ॥

मनस आत्मत्वे युक्तिप्रतिपादिकां श्रुतिमाह मन एवेति । तस्माद्वा एतस्मात् प्राणमयादन्योऽन्तर आत्मा मनोमय इति श्रुत्यन्तरं दर्शयति श्रुत इति । फलितमाह तेनेति ॥ ६८ ॥

मनसोऽप्यान्तरस्य विज्ञानस्यात्मत्ववादिनो बौद्धस्य मतं दर्शयति विज्ञानमिति । विज्ञानस्यान्तरत्वे युक्तिमाह यत इति ॥ ६९ ॥

विज्ञानमनःशब्दवाच्यस्यान्तःकरणस्यैकत्वात् कथं मनोमयविज्ञानमययोः कार्य्यकारणभाव इत्याशङ्क्य तमुपपादयितुं तयोर्भेदं तावद् दर्शयति अहंवृत्तिरिति ॥ ७० ॥

तयोः कार्य्यकारणमाह अहंप्रत्ययेति । तदेवोपपादयति अवि-

क्षणे क्षणे जन्मनाशावहंवृत्तेर्मितौ यतः ।
विज्ञानं क्षणिकं तेन स्वप्रकाशं स्वतो मितेः ॥ ७२ ॥
विज्ञानमयकोशोऽयं जीव इत्यागमा जगुः ।
सर्वसंसार एतस्य जन्मनाशसुखादिकः ॥ ७३ ॥
विज्ञानं क्षणिकं नात्मा विद्युदभ्रनिमेषवत् ।
अन्यस्यानुपलब्धत्वात् शून्यं माध्यमिका जगुः ॥ ७४ ॥
असदेवेदमित्यादाविदमेव श्रुतन्ततः ।
ज्ञानज्ञेयात्मकं सर्वं जगद्भ्रान्तिप्रकल्पितम् ॥ ७५ ॥
निरधिष्ठानविभ्रान्तेरभावादात्मनोऽस्तिता ।
शून्यस्यापि ससाक्षित्वादन्यथा नोक्तिरस्य ते ॥ ७६ ॥

दित्यर्थः । अहमनुदयाभावे इदंवृत्त्युदयादनयोः कार्य्यकारण-भाव इत्यर्थः ॥ ७१ ॥

तस्य विज्ञानस्य क्षणिकत्वेऽनुभवं प्रमाणयति क्षणे क्षणे इति । क्षणिकत्वमङ्गीकृत्य स्वप्रकाशत्वमुपपादयति स्वप्रकाशं स्वतो मितेरिति । स्वेनैव प्रमितत्वादित्यर्थः ॥ ७२ ॥

विज्ञानस्यात्मत्वे श्रुतिमपि प्रमाणमित्याह विज्ञानमयकोशोऽयमित्यादि । तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः । विज्ञानं यज्ञं तनुते इत्यादि वाक्यं विज्ञानस्यात्मत्वप्रतिपादकमिति भावः ॥ ७३ ॥

बौद्धान्तरभेदस्य शून्यवादिनो मतं दर्शयति विज्ञानमिति ॥ ७४ ॥

तत्र श्रुतिमाह असदेवेदमित्यादाविति । शून्यस्यैव तद्रूपत्वे प्रतीयमानस्य जगतः का गतिरित्यत आह ज्ञानज्ञेयात्मकमिति ॥ ७५ ॥

तदेतन्मतं दूषयति निरधिष्ठानविभ्रान्तेरिति । निःस्वरूपस्य शून्यस्याधिष्ठानत्वासम्भवात् निरधिष्ठानस्य भ्रमस्यानुपपत्तेश्चात्मनः सि-

अन्यो विज्ञानमयत आनन्दमय आन्तरः ।
अस्तीत्येवोपलब्धव्य इति वैदिकदर्शनम् ॥ ७७ ॥
अणुर्महान् मध्यमो वेत्येवं तत्रापि वादिनः ।
बहुधा विवदन्ते हि श्रुतियुक्तिसमाश्रयात् ॥ ७८ ॥
अणुं वदन्त्यान्तरालाः सूक्ष्मनाडीप्रचारतः ।
रोम्णः सहस्रभागेन तुल्यासु प्रचरत्ययम् ॥ ७९ ॥
अणोरणीयानेषोऽणुः सूक्ष्मात् सूक्ष्मतरन्त्विति ।
अणुत्वमाहुः श्रुतयः शतशोऽथ सहस्रशः ॥ ८० ॥

---

ज्ञानस्यात्मनः सत्ताभ्युपगन्तव्या किञ्च शून्यवादिनोऽपि शून्यसाक्षित्वे-
नावश्यम् आत्माभ्युपगन्तव्यः अन्यथा तस्यानभ्युपगमे अस्य शून्यस्योक्तिः
शून्यमित्यभिधानं ते बौद्धस्य तव मते न सिध्येदिति भावः ॥ ७६ ॥

कस्तर्ह्यात्मा इत्यत आह अन्यो विज्ञानमयत इति । तस्माद्वा
एतस्माद् विज्ञानमयादन्योऽन्तर आत्मानन्दमय इति अस्तीत्येवोपलब्ध-
व्यस्तत्त्वभावेनेति च श्रुतिसद्भावादानन्दमय आत्मा अभ्युपगन्तव्य इति
वैदिकदर्शनं वैदिकसिद्धान्तः ॥ ७७ ॥

एवमात्मस्वरूपे विप्रतिपत्तिं प्रदर्श्य तत्परिमाणविशेषेऽपि वादि-
विप्रतिपत्तिं दर्शयति अणुर्महानिति ॥ ७८ ॥

तत्राणुत्ववादिनां मतं दर्शयति अणुं वदन्तीति । अणुत्वाभि-
धाने हेतुमाह सूक्ष्मनाडीति । तदुपपादयति रोम्ण इति । नाडी-
ष्विति शेषः सूक्ष्मासु नाडीषु सञ्चारोऽणुत्वमन्तरेण न घटत इत्यभि-
प्रायः ॥ ७९ ॥

अणुत्वे किं प्रमाणमित्यत आह अणोरणीयानेषोऽणुरिति ।

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेय इति चाहापरा श्रुतिः ॥ ८१ ॥
दिगम्बरा मध्यमत्वमाहुरापादमस्तकम् ।
चैतन्यव्याप्तिसंदृष्टेरानखाग्रश्रुतेरपि ॥ ८२ ॥
सूक्ष्मनाडीप्रचारस्तु सूक्ष्मैरवयवैर्भवेत् ।
स्थूलदेहस्य हस्ताभ्यां कञ्चुकप्रतिमोकवत् ॥ ८३ ॥
न्यूनाधिकशरीरेषु प्रवेशोऽपि गमागमैः ।
आत्मांशानां भवेत् तेन मध्यमत्वं सुनिश्चितम् ॥ ८४ ॥
सांशस्य घटवन्नाशो भवत्येव तथा सति ।

---

अणोरणीयान् महतो महीयान् अणोरणुरात्मा चेतसा वेदितव्यः, सूक्ष्मात् सूक्ष्मतरं नित्यमित्यादि श्रुतय इत्यर्थः ॥ ८० ॥

श्रुत्यन्तरमुदाहरति बालाग्रशतभागस्येति ॥ ८१ ॥

मध्यमपरिमाणवादिनो मतं दर्शयति दिगम्बरा मध्यमत्वमिति । [illegible] आपादेति । स एष इह प्रविष्ट आनखाग्रेभ्य इति श्रुतिरप्यत्र प्रमाणमित्याह आनखाग्रेति ॥ ८२ ॥

ननु मध्यमपरिमाणत्वे श्रुतिसिद्धो नाडीप्रचारो न घटत इत्याशङ्क्याह सूक्ष्मनाडीप्रचारस्त्विति । यथा देहावयवयोर्हस्तयोः कञ्चुकप्रवेशेन देहस्य कञ्चुकप्रवेशः तद्वदात्मावयवानां सूक्ष्माणां नाडीषु प्रचारेणात्मनोऽपि प्रचार उपपद्यत इत्यर्थः ॥ ८३ ॥

ननु आत्मनो नियतमध्यमपरिमाणत्वे कर्मवशात् न्यूनाधिकशरीरप्रवेशो न घटत इत्याशङ्क्य अवयवोपगमापगमाभ्यामात्मनो नियतमध्यमपरिमाणत्वात् देहवत् उभयं न विरुध्यत इत्याह न्यूनाधिकशरीरेष्विति । फलितमाह तेनेति ॥ ८४ ॥

कृतनाशाकृताभ्यागमयोः को वारको भवेत् ॥ ८५ ॥
तस्मादात्मा महानेव नैवाणुर्नापि मध्यमः।
आकाशवत् सर्वगतो निरंशः श्रुतिसम्मतः ॥ ८६ ॥
इत्युक्त्वा तद्विशेषेऽपि बहुधा कलहं ययुः।
अचिद्रूपोऽथ चिद्रूपश्चिदचिद्रूप इत्यपि ॥ ८७ ॥
प्राभाकरास्तार्किकाश्च प्राहुरस्या चिदात्मताम्।
आकाशवत् द्रव्यमात्मा शब्दवत् तद्गुणश्चितिः ॥ ८८ ॥
इच्छाद्वेषप्रयत्नाश्च धर्माधर्मौ सुखासुखे।

---

आत्मनः सावयवत्वे घटादिवदनित्यत्वप्रसङ्गेनैतद्दूषयति सांशश्च घटवदिति। भवतु को दोषस्तत्राह तथा सतीति कृतयोः पुण्यपापयोर्भोगमन्तरेण नाशः कृतनाशः अकृतयोरकस्मात् फलभोक्तृत्वमकृताभ्यागम एतद्दोषद्वयमात्मनो नित्यत्वाभ्युपगमे भवेदिति भावः ॥८५॥

अतः पारिशेष्यादात्मनो विभुत्वं सिद्धमित्याह तस्मादात्मा महानेव नैवाणुर्नापि मध्यम इति। तत्र प्रमाणमाह आकाशवदिति। आकाशवत् सर्वगतश्च नित्यः निष्कलं निष्क्रियमित्याद्यागमः प्रमाणमित्यर्थः ॥ ८६ ॥

एवमात्मनो विभुत्वं प्रसाध्य तस्य चिद्रूपत्वं निषेद्धुं तावत् वादिविप्रतिपत्तिं दर्शयति इत्युक्त्वा तद्विशेषेऽपीति ॥ ८७ ॥

अचिद्रूपत्ववादिनो मतं दर्शयति प्राभाकरा इति। तत्प्रक्रियामनुभाषते आकाशवद्द्रव्यमिति। आत्मा द्रव्यं भवितुमर्हति गुणवत्त्वादाकाशवदित्यनुमानं सूचितम्। आत्मनः पृथिव्यादिभ्यो भेदसाधकं विशेषगुणं दर्शयति शब्दवदिति। आत्मा पृथिव्यादिभ्यो भिद्यते ज्ञानगुणकत्वात् यत् पृथिव्यादिभ्यो न भिद्यते तत् ज्ञानगुणकमपि न भवति यथा पृथिव्यादि इत्यनुमानं द्रष्टव्यम् ॥ ८८ ॥

प्रवृत्तौ वा निवृत्तौ वा देहेन्द्रियमनोधियाम् ।
न किञ्चिदपि वैषम्यमस्त्यज्ञानिविबुद्धयोः ॥ २६७ ॥
व्रात्यश्रोत्रिययोर्वेदपाठापाठकृता भिदा ।
नाहारादावस्ति भेदः सोऽयं न्यायोऽत्र योज्यताम् ॥ २६८ ॥
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ।
उदासीनवदासीन इति ग्रन्थिभिदोच्यते ॥ २६९ ॥
औदासीन्यं विधेयञ्चेद् वच्छब्दव्यर्थता तदा ।
न शक्ता अस्य देहाद्या इति चेद्रोग एव सः ॥ २७० ॥
तत्त्वबोधं क्षयव्याधिं मन्यन्ते ये महाधियः ।
तेषां प्रज्ञातिविशदा किं तेषां दुःशकं वद ॥ २७१ ॥
भरतादेरप्रवृत्तिः पुराणोक्तेति चेत् तदा ।
जक्षत् क्रीडन् रतिं विन्दन्नित्यश्रौषीर्न किं श्रुतिम् ॥ २७२ ॥

---

कारणान्तराभावमेव विशदयति प्रवृत्ताविति ॥ २६७ ॥

उक्तार्थे दृष्टान्तमाह व्रात्येति ॥ २६८ ॥

ज्ञानिनो ग्रन्थिशून्यत्वे गीतावाक्यं प्रमाणयति न द्वेष्टीति । संप्रवृत्तानि प्राप्तानि दुःखानि न द्वेष्टि निवृत्तानि सुखानि न काङ्क्षति उदासीनवद् वर्तत इत्यर्थः । ग्रन्थिभिदा ग्रन्थिभेदः ॥ २६९ ॥

इदं वाक्यमौदासीन्यविधिपरं न तु ग्रन्थिभेदे प्रमाणमिति शङ्कते औदासीन्यमिति । विधिपरत्वे वच्छब्दो व्यर्थः स्यादिति परिहरति वच्छब्देति । ज्ञानिनो देहादेरकार्यक्षमत्वादप्रवृत्तिर्न तु ग्रन्थिभेदादित्याशङ्क्योपहसति न शक्ता इति ॥ २७० ॥

भवतु को दोषस्तत्राह तत्त्वबोधमिति । दुःशकमसाध्यमित्यर्थः ॥ २७१ ॥

ननु स्थाने परिहासोऽयं ज्ञानिनां प्रवृत्त्यभावस्य पुराणसिद्धत्वादित्याशङ्कते भरतादेरिति । श्रुतिमजानन्नेवं वदसीति परिहरति जक्ष-

न ह्याहारादि संत्यज्य भरताद्याः स्थिताः क्वचित् ।
काष्ठपाषाणवत् किन्तु सङ्गभीता उदासते ॥ २७३ ॥
सङ्गी हि बाध्यते लोकैर्निःसङ्गः सुखमश्नुते ।
तेन सङ्गः परित्याज्यः सर्वदा सुखमिच्छता ॥ २७४ ॥
अज्ञात्वा शास्त्रहृदयं मूढो वक्त्यन्यथान्यथा ।
मूर्खाणां निर्णयस्त्वास्तामस्मत्सिद्धान्त उच्यते ॥ २७५ ॥
वैराग्यबोधोपरमाः सहायास्ते परस्परम् ।
प्रायेण सह वर्त्तन्ते वियुज्यन्ते क्वचित् क्वचित् ॥ २७६ ॥

दिति । जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरमिति श्रौतवाक्यं नाश्रौषीरित्यर्थः । जक्षद् भक्षयन् जक्षभक्षहसनयोरिति धातुः, क्रीडन् स्वेच्छया विहरन् रममाणः स्त्र्यादिभिः नोपजनं स्मरन्निदं शरीरमित्युपजनं जनानां समीपे वर्त्तमानमिदं स्वं शरीरं न स्मरन् नानुसन्दधान इत्यर्थः श्लोके रतिं विन्दन्निति श्रौतस्य रममाण इति पदस्य व्याख्यानम् ॥ २७२ ॥

ननु तर्हि पुराणस्य का गतिरित्याशङ्क्य पुराणमप्यौदासीन्यबोधपरं न मर्यादाभङ्गपरमित्यभिप्रेत्याह न ह्याहारादीति ॥ २७३ ॥

सङ्गोऽपि दुःखहेतुरेव इत्यत आह सङ्गी हीति ॥ २७४ ॥

ननु तर्हि शास्त्रवाक्यस्यैव त्याज्यत्वेऽन्तःसङ्गशून्यानां बहिर्व्यवहारवतां ज्ञानिनामपि दोषः कथमुच्यत इत्याशङ्क्य शास्त्रतात्पर्यज्ञानशून्यत्वादित्याह अज्ञात्वेति । अतो मूढवचनं नात्र विचारणीयमित्याह मूर्खाणामिति । तर्हि किमस्त्वस्मिन् विषये शास्त्रहृदयमित्याह अस्मत्सिद्धान्त इति ॥ २७५ ॥

कोऽसावित्यत आह वैराग्येति ॥ २७६ ॥

हेतुस्वरूपकार्याणि भिन्नान्येषामसङ्करः ।
यथावदवगन्तव्यः शास्त्रार्थं प्रविविच्यता ॥ २७७ ॥
दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता ।
असाधारणहेत्वाद्या वैराग्यस्य त्रयोऽप्यमी ॥ २७८ ॥
श्रवणादित्रयं तद्वत् तत्त्वमिथ्याविवेचनम् ।
पुनर्ग्रन्थेरनुदयो बोधस्यैते त्रयो मताः ॥ २७९ ॥
यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः ।
स्युर्हेत्वाद्या उपरतेरित्यसङ्कर ईरितः ॥ २८० ॥
तत्त्वबोधः प्रधानं स्यात् साक्षान्मोक्षप्रदत्वतः ।
बोधोपकारिणावेतौ वैराग्योपरमावुभौ ॥ २८१ ॥

---

वैराग्यादीनामन्योन्यापरिहारेणावस्थानदर्शनादभेदाशङ्कायां तद्धेत्वादीनां भेदात् भेदोऽवगन्तव्य इत्याह हेतुस्वरूपेति ॥ २७७ ॥

तत्र वैराग्यस्य हेत्वादित्रयं दर्शयति दोषदृष्टिरिति ॥ २७८ ॥

इदानीं तत्त्वबोधस्य कारणादीनि दर्शयति श्रवणादीति । आदिशब्देन मनननिदिध्यासने गृह्येते । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यात्मदर्शनसाधनत्वेन श्रवणादिविधानात् श्रवणादीनां हेतुत्वं तत्त्वमिथ्याविवेचनं कूटस्थस्याहङ्कारादेश्च भेदज्ञानं पुनर्ग्रन्थेरनुदयोऽन्योन्याध्यासानुत्पत्तिः ॥ २७९ ॥

उपरतेस्तानि दर्शयति यमादिरिति । आदिशब्देन नियमादयो गृह्यन्ते धीनिरोधश्चित्तवृत्तिनिरोधलक्षणो योगः ॥ २८० ॥

किमेतेषां समप्राधान्यमुत नेत्याशङ्क्याह तत्त्वबोध इति । तमेव विदित्वातिमृत्युमेति । नान्यः पन्था विद्यतेऽयनायेति श्रुतेरित्यर्थः । इतरयोरुपकारित्वं ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं

त्रयोऽप्यत्यन्तपक्वाश्चेन्महतस्तपसः फलम् ।
दुरितेन क्वचित् किञ्चित् कदाचित् प्रतिबध्यते ॥ २८२ ॥
वैराग्योपरती पूर्णे बोधस्तु प्रतिबध्यतु ।
यस्य तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात् ॥ २८३ ॥
पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा ।
मोक्षो विनिश्चितः किन्तु दृष्टदुःखं न नश्यति ॥ २८४ ॥
ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः ।
देहात्मवत् परात्मत्वदार्ढ्ये बोधः समाप्यते ॥ २८५ ॥
सुप्तिवत् विस्मृतिः सीमा भवेदुपरमस्य हि ।
दिशानया विनिश्चेयं तारतम्यमवान्तरम् ॥ २८६ ॥

---

[illegible] शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा-त्मन्येवात्मानं पश्येदिति श्रुतिरप्यनुगम्यते ॥ २८१ ॥

प्रायशः सह वर्तन्ते वियुज्यन्ते क्वचित् क्वचिदित्युक्तं तत्र कारण-माह त्रयोऽपीति । अनेकजन्मार्जितपुण्यपुञ्जपरिपाके त्रयाणां सह-भावो भवति अन्यदा तु प्रतिबन्धकपापानुसारेण पुरुषविशेषे काल-विशेषेण कस्यचित् प्रतिबन्धो भवतीति भावः ॥ २८२ ॥

तत्त्वज्ञानप्रतिबन्धे मोक्षो नास्तीत्याह वैराग्येति । तर्हि वैराग्यादिसम्पादनं निष्फलमित्याशङ्क्य प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः । शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते इति भगवद्वचनात् पुण्यलोकप्राप्तिर्भवतीत्याह पुण्यलोकस्तपोबलादिति ॥ २८३ ॥

वैराग्योपरत्योस्तु प्रतिबन्धे जीवन्मुक्तिसुखं न सिध्यतीत्याह पूर्णे बोध इति ॥ २८४ ॥

इदानीं वैराग्यादीनामवधिं दर्शयति ब्रह्मलोकेति सार्धेन ॥ २८५ ॥

अवान्तरतारतम्यं स्वबुद्ध्या निश्चेयमित्याह दिशेति ॥ २८६ ॥

आरब्धकर्मनानात्वात् बुद्धानामन्यथान्यथा ।
वर्त्तनन्तेन शास्त्रार्थे भ्रमितव्यं न पण्डितैः ॥ २८७ ॥
स्वस्वकर्मानुसारेण वर्त्तन्तां ते यथा तथा ।
अविशिष्टः सर्वबोधः समा मुक्तिरिति स्थितिः ॥ २८८ ॥
जगच्चित्रं स्वचैतन्ये पटे चित्रमिवार्पितम् ।
मायया तदुपेक्ष्यैव चैतन्ये परिशिष्यताम् ॥ २८९ ॥
चित्रदीपमिमं नित्यं येऽनुसन्दधते बुधाः ।
पश्यन्तोऽपि जगच्चित्रं ते न मुह्यन्ति पूर्ववत् ॥ २९० ॥

इति चित्रदीपः समाप्तः ।

---

ननु तत्त्वविदामपि रागादिमत्त्वेन वैषम्योपलम्भात् ज्ञानस्यापि मुक्तिहेतुत्वं न निश्चेतुं शक्यत इत्याशङ्क्य रागादिवैषम्यादेः प्रारब्धकर्मफलत्वान्मुक्तिप्रतिबन्धकत्वमसिद्धमतो न शास्त्रार्थे विप्रतिपत्तव्यमित्याह आरब्धकर्मनानात्वादिति ॥ २८७ ॥

किं तर्हि प्रतिपत्तव्यमित्यत आह स्वस्वेति । सर्वेषां ब्रह्माहमस्मीति ज्ञानमेकाकारं निरवयवब्रह्मरूपेणावस्थानञ्च समानमिति भावः ॥ २८८ ॥

प्रकरणस्य तात्पर्यं संक्षिप्य दर्शयति जगदिति ॥ २८९ ॥

ग्रन्थाभ्यासफलमाह चित्रदीपमिति ॥ २९० ॥

इति चित्रदीपव्याख्या समाप्ता ।

# सप्तमपरिच्छेदः।

## तृप्तिदीपः।

आत्मानञ्चेद् विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ १ ॥
अस्याः श्रुतेरभिप्रायः सम्यगत्र विचार्य्यते ।
जीवन्मुक्तस्य या तृप्तिः सा तेन विशदायते ॥ २ ॥
मायाभासेन जीवेशौ करोतीति श्रुतत्वतः ।
कल्पिताविव जीवेशौ ताभ्यां सर्वं प्रकल्पितम् ॥ ३ ॥

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
क्रियते तृप्तिदीपस्य व्याख्यानं गुर्वनुग्रहात् ॥

तृप्तिदीपाख्यं प्रकरणमारभमाणः श्रीभारतीतीर्थगुरुस्तस्य श्रुति-व्याख्यानरूपत्वात् व्याख्येयां श्रुतिमादौ पठति आत्मानञ्चेदिति ॥ १ ॥

इदानीं चिकीर्षितं विचारं तत्फलञ्च दर्शयति अस्या इति । अत्र तृप्तिदीपाख्ये ग्रन्थे अस्याः आत्मानं चेद् विजानीयादित्यादिकायाः श्रुतेरभिप्रायस्तात्पर्यं सम्यग्विचार्यते, तेनाभिप्रायविचारेण जीवन्मुक्तस्य श्रुतिप्रसिद्धा या तृप्तिः सा विशदायते स्पष्टीभवति ॥ २ ॥

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणमिति व्याख्यानलक्षणप्रसिद्धत्वात् पूरुष इति पद-स्यार्थमभिधातुं तदुपोद्घातत्वेन सृष्टिप्रक्रियां दर्शयति मायाभासेनेति । प्रतिपाद्यार्थं बुद्धौ संगृह्य तदर्थमर्थान्तरवर्णनमुपोद्घातः, अत्र माया-शब्देन चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता सत्त्वरजस्तमोगुणात्मिका

ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता ।
जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः ॥ ४ ॥

---

जगदुपादानभूता प्रकृतिरुच्यते, सा च सत्त्वगुणस्य शुद्ध्यविशुद्धिभ्यां द्विधा भिद्यमाना क्रमेण माया चाविद्या च भवति, तयोर्मायाविद्ययोः प्रतिबिम्बितं ब्रह्मचैतन्यमेवेश्वरो जीवश्चेत्युच्यते, तदिदं तत्त्वविवेकाख्ये ग्रन्थे श्रीमद्विद्यारण्यगुरुभिर्निरूपितं, चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता । तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा । सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते । मायाबिम्बो वशीकृत्य तां स्यात् सर्वज्ञ ईश्वरः । अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा । सा कारणशरीरं स्यात् इति । इममेवार्थं मनसि निधाय जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुतिरपि प्रवृत्ता अतो जीवेश्वरयोर्मायाकल्पितत्वमन्यत् कृत्स्नं जगत् ताभ्यामेव कल्पितम् ॥ ३ ॥

तत्र केन किं कल्पितमित्यत आह ईक्षणादीति । तदैक्षत बहु स्यां प्रजायेयेति श्रुतमीक्षणमादिर्यस्याः ईक्षणादिः अनेन जीवेनात्मनानुप्रविश्येति श्रुतः प्रवेशोऽन्तो यस्याः सा प्रवेशान्ता ईक्षणादिश्चासौ प्रवेशान्ता चेति पश्चात् कर्मधारयः सैवं सृष्टिरीश्वरेण कल्पिता जाग्रदादिः संसारस्यादौ जाग्रदादिः विमोक्षो मुक्तिरन्तो यस्य स विमोक्षान्तः संसारो जीवेन कल्पितस्तदभिमानित्वाज्जीवस्य इत्यर्थः, ते च जाग्रदादय इत्थं श्रूयन्ते, स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् । स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति । स्वप्नेऽपि जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके । सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति । पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः । पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम् । जाग्रत् स्वप्नसुषुप्त्यादिप्रपञ्चं यत् प्रकाशते । तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते इति ॥ ४ ॥

भ्रमाधिष्ठानभूतात्मा कूटस्थासङ्गचिद्वपुः ।
अन्योन्याध्यासतोऽसङ्गधीस्थजीवोऽत्र पूरुषः ॥ ५ ॥
साधिष्ठानो विमोक्षादौ जीवोऽधिक्रियते न तु ।
केवलो निरधिष्ठानविभ्रान्तेः क्वाप्यसिद्धितः ॥ ६ ॥
अधिष्ठानांशसंयुक्तं भ्रमांशमवलम्बते ।
यदा तदाहं संसारीत्येवं जीवोऽभिमन्यते ॥ ७ ॥

---

एवं पुरुषशब्दार्थावबोधोपयोगिनीं श्रुतिमभिधायेदानीं पुरुषशब्दार्थ-माह भ्रमाधिष्ठानेति । यः कूटस्थासङ्गचिद्वपुरविकार्य्यसङ्गचित्स्वरूपः भ्रमाधिष्ठानभूतात्मा भ्रमस्य देहेन्द्रियाद्यध्यासस्याधिष्ठानभूतोऽधिष्ठानत्वेन वर्त्तमानः परमात्माऽस्ति सोऽसङ्ग एवान्योन्याध्यासतः अन्योन्यस्मिन् अन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यास्य इत्याचार्यैर्निरूपितेन तादात्म्या-ध्यासेनासङ्गधीस्थजीवोऽत्र अनेन पारमार्थिकसम्बन्धशून्यायां बुद्धौ वर्त्त-मानो जीवः कथमात्मत्वं श्रुतौ पुरुष इत्युच्यते स वा अयं पुरुषः सर्वासु पूर्षु पुरिशय इति श्रुत्या पुरुषशब्दस्य व्युत्पादितत्वात् पुरुषस्यैव च पुरुष-त्वात् पुरुष एव पुरुषः बुद्ध्यादिकल्पनाधिष्ठानं कूटस्थचैतन्यमेव बुद्धौ प्रतिबिम्बितत्वेन प्राप्तजीवभावं सत् पुरुषशब्देनोच्यते इत्यभिप्रायः ॥ ५ ॥

ननु पुरुषशब्देन केवलचिदाभासरूपो जीव एवोच्यतां किमनेन कूटस्थचैतन्येनाधिष्ठानभूतेनेत्याशङ्क्य तस्य मोक्षाद्यन्वयित्वसिद्धये तदपि जीवत्वमभिमत्याह साधिष्ठानेति । साधिष्ठानोऽधिष्ठानेन कूटस्थचैत-न्येन सहितो जीवो विमोक्षादौ श्रवणादिसाधनानुष्ठानेऽधिक्रियतेऽधि-कारी भवति न तु केवलचिदाभासः । कुत इत्यत आह निरधिष्ठा-नेति । अधिष्ठानरहितस्यारोपितस्य जीवस्य तुच्छत्वादिति भावः ॥ ६ ॥

इदानीं साधिष्ठानस्य तस्यैव संसाराद्यन्वयित्वं लोकदृष्ट्या विशदं दर्शयति अधिष्ठानांशसंयुक्तमिति । जीवो यदाधिष्ठानांशसंयुक्तं कूटस्थ-

भ्रमांशस्य तिरस्कारादधिष्ठानप्रधानता ।
यदा तदा चिदात्माहमसङ्गोऽस्मीति बुध्यते ॥ ८ ॥
नासङ्गेऽहङ्कृतिर्युक्ता कथमस्मीति चेच्छृणु ।
एको मुख्यो द्वावमुख्यावित्यर्थस्त्रिविधोऽहमः ॥ ९ ॥
अन्योन्याध्यासरूपेण कूटस्थाभासयोर्वपुः ।
एकीभूय भवेन्मुख्यस्तत्र मूढैः प्रयुज्यते ॥ १० ॥

---

ईहितं भ्रमांशं चिदाभासोपेतं शरीरद्वयमवलम्ब्य स्वस्वरूपेण स्वीकरोति तदाहं संसारीत्यभिमन्यते ॥ ७ ॥

यदा पुनर्भ्रमांशस्य देहद्वयसहितस्य चिदाभासस्य तिरस्कारान्मिथ्यात्वज्ञानेनानादरणादधिष्ठानप्रधानता अधिष्ठानभूतस्यैव कूटस्थस्य स्वरूपत्वं जीवेन स्वीक्रियते तदाहं चिदात्मासङ्गोऽस्मीति बुध्यते जानाति ॥ ८ ॥

नन्वधिष्ठानचैतन्यस्य जीवस्वरूपत्वस्वीकारे चिदात्माहमसङ्गोऽस्मीति बुध्यत इति यदुक्तं तदनुपपन्नं स्यात् असङ्गचिद्रूपस्य कूटस्थस्याहंप्रत्ययविषयत्वाभावादिति शङ्कते नासङ्ग इति । असङ्गे चिदात्मन्यविषयेऽहंप्रत्ययो न युज्यते यतोऽतः कथमहमस्मीति जानीयात् न कथमपीत्यर्थः । मुख्यया वृत्त्याहंप्रत्ययविषयत्वाभावेऽपि लक्षणया तदस्तीति विवक्षुरहंशब्दार्थं तावत् विभजते शृण्विति । अहमोऽहंशब्दस्येत्यर्थः ॥ ९ ॥

कीदृशो मुख्योऽर्थः इत्याकाङ्क्षायां तं दर्शयति अन्योन्येति । कूटस्थचिदाभासयोः स्वरूपमन्योन्याध्यासेनैक्यं प्राप्तमहंपदस्य वाच्यत्वेन मुख्यार्थो भवति । अस्य कुतो मुख्यत्वमित्यत आह तत्र मूढैरिति । यत इत्यध्याहारः तत्र तस्मिन् अविविक्ते कूटस्थचिदाभासयोः स्वरूपे यतो विवेकज्ञानशून्यैः सर्वैरप्यहंशब्दः प्रयुज्यतेऽतोऽस्य मुख्यत्वमित्यर्थः ॥ १० ॥

पृथगाभासकूटस्थावमुख्यौ तत्र तत्त्ववित्।
पर्यायेण प्रयुङ्क्तेऽहंशब्दं लोके च वैदिके ॥ ११ ॥
लौकिकव्यवहारेऽहं गच्छामीत्यादिके बुधः।
विविच्यैव चिदाभासं कूटस्थात् तं विवक्षति ॥ १२ ॥
असङ्गोऽहं चिदात्माहमिति शास्त्रीयदृष्टितः।
अहंशब्दं प्रयुङ्क्तेऽयं कूटस्थे केवले बुधः ॥ १३ ॥
ज्ञानिताज्ञानिते त्वात्माभासस्यैव न चात्मनः।
तथा च कथमाभासः कूटस्थोऽस्मीति बुध्यताम् ॥ १४ ॥

---

इदानीममुख्यार्थौ द्वौ दर्शयति पृथगिति। आभासकूटस्थौ प्रत्येकमहंशब्दार्थत्वेन यदा विवक्षितौ तदा अमुख्यार्थौ भवतः। अनयोरमुख्यत्वे कारणमाह तत्रेति। अत्रापि यत इत्यध्याहारः तत्त्ववित् यतः तत्र तयोः कूटस्थचिदाभासयोरहंशब्दं लोके लौकिके वैदिके च व्यवहारे पर्यायेण प्रयुङ्क्ते इति योजना, अयमभावः चिदाभासकूटस्थयोरविविक्तरूपस्य सार्वजनीनव्यवहारविषयत्वात् मुख्यार्थत्वं विविक्तरूपस्य तु कतिपयैर्जनैः कदाचिदेव व्यवह्रियमाणत्वादमुख्यार्थत्वमिति ॥ ११ ॥

पर्यायेण प्रयुङ्क्त इत्युक्तमेवार्थं प्रपञ्चयति प्रतिपत्तिसौकर्याय श्लोकद्वयेन लौकिकेत्यादिना। बुधो विद्वानहं गच्छामीत्यादिके लौकिकव्यवहारे कूटस्थाच्चिदाभासं विविच्य तमेवाहंशब्देन विवक्षति वक्तुमिच्छति ॥ १२ ॥

अयमेव बुधः शास्त्रीयदृष्टितो वेदान्तश्रवणजनितज्ञानेन केवले चिदाभासाद् विविक्ते कूटस्थेऽसङ्गोऽहं चिदात्माहमिति अयमहंशब्दं प्रयुङ्क्ते अतो उभयथा अहंशब्दार्थत्वेऽप्यहंप्रत्ययविषयत्वमप्यादस- ङ्गोऽहमस्मीति शास्त्रदृष्ट्यैव इति भावः ॥ १३ ॥

ननु पृथगाभासकूटस्थावहंशब्दस्यामुख्यार्थौ निरूपितौ तयोर्मध्ये कूटस्थः चिदाभासनिष्ठत्वेऽसङ्गोऽस्मीति जानाति किं वा चिदाभासः

नायं दोषश्चिदाभासः कूटस्थैकस्वभाववान् ।
आभासत्वस्य मिथ्यात्वात् कूटस्थत्वावशेषणात् ॥ १५ ॥
कूटस्थोऽस्मीति बोधोऽपि मिथ्या चेन्नेति को वदेत् ।
न हि सत्यतयाभीष्टं रज्जुसर्पविसर्पणम् ॥ १६ ॥
तादृशेनापि बोधेन संसारो विनिवर्त्तते ।
यक्षानुरूपो हि बलिरित्याहुर्लौकिका जनाः ॥ १७ ॥

---

न तावत् कूटस्थः तस्यासङ्गचिद्रूपत्वेन ज्ञानित्वाज्ञानित्वयोरनुपपत्तेः अतश्चिदाभासस्य ज्ञानित्वादिकं वक्तव्यं तथा च सति कूटस्थादन्यश्चिदाभासोऽहं कूटस्थोऽस्मीति न ज्ञातुमर्हतीति शङ्कते ज्ञानितेति ॥ १४ ॥

तत्र कूटस्थादन्यत्वमेवासिद्धमिति परिहरति नायमिति । तत्रोपपत्तिमाह आभासत्वस्येति । यथा दर्पणे प्रतीयमानस्य मुखाभासस्य ग्रीवास्थं मुखमेव तत्त्वं तद्वदिति भावः ॥ १५ ॥

ननु चिदाभासस्य मिथ्यात्वे तदाश्रितं कूटस्थोऽस्मीति ज्ञानमपि मिथ्या स्यादिति शङ्कते कूटस्थ इति । कूटस्थस्वरूपातिरिक्तस्य सर्वस्यापि मिथ्यात्वाभ्युपगमात् तन्मिथ्यात्वमस्माकमिष्टमेवेति परिहरति नेतीति । उक्तमर्थं दृष्टान्तेन स्पष्टयति नहीति । रज्जौ कल्पितस्य सर्पस्य सर्पणादिकमपि प्रतीयमानं वास्तवं नाङ्गीक्रियते यथा तद्वदिति भावः ॥ १६ ॥

ज्ञानस्य मिथ्यात्वे तेन संसारनिवृत्तिर्न स्यादित्याशङ्क्य मिथ्याभूतस्य संसारस्यापि तथात्वात् तन्निवृत्तिरुपपद्यते स्वाप्नव्याघ्रदर्शनेन निद्रानिवृत्तिवदित्यभिप्रायेणाह तादृशेनापीति । तत्र यादृशो यक्षस्तादृशो बलिरिति लौकिकगाथां संवादयति यक्षानुरूपो हीति ॥ १७ ॥

तस्मादाभासपुरुषः सकूटस्थो विविच्य तम् ।
कूटस्थोऽस्मीति विज्ञातुमर्हतीत्यभ्यधात् श्रुतिः ॥ १८ ॥
असन्दिग्धाविपर्यस्तबोधो देहात्मनीष्यते ।
तद्वदत्रेति निर्णेतुमयमित्यभिधीयते ॥ १९ ॥
देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद् यस्य स नेच्छन्नपि मुच्यते ॥ २० ॥
अयमित्यपरोक्षत्वमुच्यते चेत् तदुच्यताम् ।
स्वयंप्रकाशचैतन्यमपरोक्षं सदा यतः ॥ २१ ॥

उपपादितमर्थमुपसंहरति तस्मादिति । यस्मात् कूटस्थ एव चिदाभासस्य निजं स्वरूपं तस्मात् पुरुषशब्दवाच्यः कूटस्थसहितचिदाभासस्तं कूटस्थं मिथ्याभूतात् स्वस्माद् विविच्य तत्त्वतया कूटस्थोऽहमस्मीत्यवगन्तुं शक्नोतीत्यभिप्रायेण श्रुतिरस्मीत्युक्तवतीत्यर्थः ॥ १८ ॥

एवं पुरुषोऽस्मीति पदद्वयप्रयोगाभिप्रायमभिधाय अयमिति पदप्रयोगाभिप्रायमाह असन्दिग्धेति । लौकिकानां प्रसिद्धे देहरूपे आत्मनि संशयविपर्ययरहितोऽयमस्मीति बोधो यद्वदुपलभ्यते अत्र प्रत्यगात्मनि विषये तद्वत् तथाविधं ज्ञानं मुक्तिसिद्धये सम्पाद्यमिति निर्णेतुमयमित्यभिधीयते श्रुत्येति शेषः ॥ १९ ॥

देहात्मेव बोधस्य मोक्षसाधनत्वे आचार्यवाक्यं संवादयति देहात्मेति । अहं मनुष्य इति देहात्मविषयो दृढप्रत्ययो यथैवं प्रमाणात्मन्येव देह एवात्मेत्येवं देहात्मत्वज्ञानबाधनेन ब्रह्माहमस्मीति ज्ञानं यस्य जायते स निरिच्छन्नपि मोक्षेच्छारहितोऽपि मुच्यते संसारहेतोरज्ञानस्य ज्ञानेनापबाधितत्वादिति भावः ॥ २० ॥

अयमिति पदप्रयोगस्याभिप्रायान्तरं ब्रूते अयमिति । यथायं घट इत्यादिप्रयोगेनेन्द्रियद्वारा निर्दिष्टस्य वस्तुन आपरोक्ष्यं दृष्टं तथा-

परोक्षमपरोक्षञ्च ज्ञानमज्ञानमित्यदः।
नित्यापरोक्षरूपेऽपि द्वयं स्याद् दशमे यथा ॥ २२ ॥
नवसंख्याहृतज्ञानो दशमो विभ्रमात् तदा।
न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान् नव ॥२३॥
न भाति नास्ति दशम इति स्वं दशमं तदा।
मत्वा वक्ति तदज्ञानकृतमावरणं विदुः ॥ २४ ॥
नद्यां ममार दशम इति शोचन् प्ररोदिति।
अज्ञानकृतविक्षेपं रोदनादिं विदुर्बुधाः ॥ २५ ॥

---

यमस्तीत्यत्रापीति भावः। तदप्यस्माकमिष्टमेवेत्याह तदुच्यतामिति। कुत इत्यत आह स्वयंप्रकाशेति। साधनान्तरनिरपेक्षतयावभासमानं चैतन्य-स्वरूपत्वकाभावान्नित्यमपरोक्षमित्यस्माभिरभ्युपगतत्वादित्यर्थः ॥२१॥

नन्वात्मनः स्वप्रकाशचिद्रूपत्वेन नित्यापरोक्षत्वाभ्युपगमेऽयमिति पदप्रयोगस्याभिप्रायवर्णनाङ्गीकारकथादागतमात्मनः परोक्षविषयत्वं पूर्वोक्तं ज्ञानाज्ञानाश्रयविषयत्वञ्चानुपपन्नं स्यादित्याशङ्क्य दशम इव सर्वमुपपद्यत इत्याह परोक्षमपरोक्षञ्चेत्येकं युगलं ज्ञानमज्ञानमित्य-परम् इदं द्वयं नित्यापरोक्षरूपेऽप्यात्मनि दशम इव स्यादित्यर्थः ॥ २२ ॥

दृष्टान्तं व्युत्पादयति नवसंख्येति। परिगणनीयपुरुषनिष्ठया नव-संख्ययापहृतविवेकविज्ञानो दशमस्तदा तान् परिगणनीयान् नवसंख्या-कान् वीक्षमाणोऽपि सम्यक् पश्यन्नपि भ्रान्त्या गणनाकर्तारं स्वात्मानं दशमोऽहमस्मीति नैव वेत्तीत्यर्थः ॥ २३ ॥

एवं दशमेऽज्ञानं प्रदर्श्य तत्कार्य्यमावरणं दर्शयति न भातीति। तदा दशमः स्वं दशमं सन्तं दशमो न भाति नास्तीति मत्वा वक्ति अस्य व्याहारस्य यत् कारणं तदज्ञानकृतमज्ञानकार्य्यमावरणं विदुर्बुधा इति शेषः ॥ २४ ॥

अज्ञानस्यैव कार्य्यविशेषं विक्षेपं दर्शयति नद्यामिति ॥ २५ ॥

न स्मृतो दशमोऽस्तीति श्रुत्वाप्तवचनं तदा ।
परोक्षत्वेन दशमं वेत्ति स्वर्गादिलोकवत् ॥ २६ ॥
त्वमेव दशमोऽसीति गणयित्वा प्रदर्शितः ।
अपरोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति ॥ २७ ॥
अज्ञानावृतिविक्षेपद्विविधज्ञानहृष्टयः ।
शोकापगम इत्येते योजनीयाश्चिदात्मनि ॥ २८ ॥
संसारासक्तचित्तः संश्चिदाभासः कदाचन ।
स्वयंप्रकाशकूटस्थं स्वतत्त्वं नैव वेत्त्ययम् ॥ २९ ॥
न भाति नास्ति कूटस्थ इति वक्ति प्रसङ्गतः ।
कर्त्ता भोक्ताहमस्मीति विक्षेपं प्रतिपद्यते ॥ ३० ॥

दशमस्यापरोक्षत्वे [illegible] परोक्षज्ञानमाह न स्मृत इति ॥ २६ ॥

तस्यैवाभासा[illegible]परोक्षज्ञानं दर्शयति त्वमेवेति । स्वेन परिगणितैर्नवभिः सह स्वात्मानं गणयित्वा त्वमेव दशमोऽसीति दर्शितोऽहं दशमोऽस्मीत्यपरोक्षतया ज्ञात्वा हर्षं प्राप्नोति रोदनञ्च त्यजति ॥ २७ ॥

एवं दृष्टान्तगते दशमे प्रदर्शितमवस्थासप्तकमनूद्य दार्ष्टान्तिके चात्मन्यपि तद् योजनीयमित्याह अज्ञानावृतीति । अज्ञानमावृतिश्च विक्षेपश्च द्विविधज्ञानञ्च [illegible] इति द्वन्द्वसमासः ॥ २८ ॥

तत्रात्मन्यज्ञानादिकं क्रमेण दर्शयति संसारासक्तेत्यादिचतुर्भिः । अयं चिदाभासो विषय[illegible]सक्तचित्तः सन् कदाचन श्रुतिविचारात् [illegible] स्वप्रकाशचिद्रूपं कूटस्थं [illegible] न [illegible]ति [illegible] ॥ २९ ॥

[illegible] कूटस्थो [illegible] न [illegible] इति मत्वा [illegible] कर्तृत्वादिकमात्मन्यारोपयति [illegible] चिदाभासो विक्षेपः ॥ ३० ॥

अस्ति कूटस्थ इत्यादौ परोक्षं वेत्ति वार्त्तया ।
पश्चात् कूटस्थ एवास्मीत्येवं वेत्ति विचारतः ॥ ३१ ॥
कर्त्ता भोक्तेत्येवमादिशोकजातं प्रमुञ्चति ।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तुष्यति ॥ ३२ ॥
अज्ञानमावृतिस्तद्वद् विक्षेपश्च परोक्षधीः ।
अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरङ्कुशा ॥ ३३ ॥
सप्तावस्था इमाः सन्ति चिदाभासस्य तास्विमौ ।
बन्धमोक्षौ स्थितौ तत्र तिस्रो बन्धकृतः स्मृताः ॥ ३४ ॥

---

अस्ति कूटस्थ इति । परेण बोधितः कूटस्थोऽस्तीति जानातीदं परोक्षज्ञानं श्रवणादिपरिपाकवशात् कूटस्थोऽहमेवास्मीति जानातीदमपरोक्षज्ञानम् ॥ ३१ ॥

कूटस्थापरोक्षज्ञानानन्तरं कर्तृत्वादिशोकजातं त्यजतीति यदयं शोकापगमः कृत्यं कर्तव्यजातं कृतं निष्पादितं प्रापणीयं फलजातं प्राप्तमिति तुष्यतीयं तृप्तिरित्यर्थः ॥ ३२ ॥

दार्ष्टान्तिकेऽप्युक्तमवस्थासप्तकमनुवदति अज्ञानमिति ॥ ३३ ॥

नन्वुक्तावस्थासप्तकस्यात्मधर्मत्वाङ्गीकारे तस्य कूटस्थत्वं व्याहन्येतेत्याशङ्क्य एताः सप्तावस्थाश्चिदाभासस्यैव न कूटस्थस्येत्याह सप्तावस्था इति । सर्वं वाक्यं सावधारणमिति न्यायेन चिदाभासस्यैवेत्यवगम्यते न कूटस्थस्य । सप्तावस्थानामप्युपन्यासो वृथेत्याशङ्क्य न तथा बन्धमोक्षकारित्वद्योतनपरत्वादुपन्यासस्येत्यभिप्रायेणाह तास्विमाविति । किमासां सप्तानामविशेषेण बन्धमोक्षकारित्वं नेत्याह तत्र तिस्र इति । अज्ञानावरणविक्षेपरूपास्तिस्र इत्यर्थः ॥ ३४ ॥

न जानामीत्युदासीनव्यवहारस्य कारणम्।
विचारप्रागभावेन युक्तमज्ञानमीरितम्॥ ३५॥
अमार्गेण विचार्याथ नास्ति नो भाति चेत्यसौ।
विपरीतव्यवहृतिरावृतेः कार्य्यमिष्यते॥ ३६॥
देहद्वयचिदाभासरूपो विक्षेप ईरितः।
कर्तृत्वाद्यखिलः शोकः संसाराख्योऽस्य बन्धकः॥ ३७॥
अज्ञानमावृतिश्चैते विक्षेपात् प्राक् प्रसिध्यतः।
यद्यप्यथाप्यवस्थे ते विक्षेपस्यैव नात्मनः॥ ३८॥

---

एषां बन्धकारित्वदर्शनाय त्रयाणामपि स्वरूपं प्रत्येकं कार्य्यप्रदर्शनेन स्पष्टीचिकीर्षुरज्ञानस्य स्वरूपं तावद् दर्शयति न जानामीति। आत्मतत्त्वविचारस्य प्रागभावसहितमुदासीनव्यवहारस्य कारणं न जानामीत्यनुभूयमानमज्ञानमीरितमित्यर्थः॥ ३५॥

आवृतेः कार्य्यं दर्शयति अमार्गेणेति। शास्त्रोक्तप्रकारमतिलङ्घ्य स्वैरं तर्केण विचार्यानन्तरं कूटस्थो नास्ति न भाति इत्येवंरूपो विपरीतव्यवहारः आवृतिकार्य्यमित्यर्थः॥ ३६॥

विक्षेपस्य स्वरूपं तत्कार्यञ्च दर्शयति देहद्वयेति। स्थूलसूक्ष्माख्य-शरीरद्वयसहितश्चिदाभास एव विक्षेपः बन्धकः बन्धहेतुः संसाराख्यः कर्तृत्वाद्यखिलः शोकोऽस्य चिदाभासस्य कार्य्यमिति शेषः कर्तृत्वादी-न्यादिपदेन प्रमातृत्वादयो गृह्यन्ते॥ ३७॥

ननु चिदाभासावस्थात्वमनुपपन्नम् अज्ञानावरणयोर्विक्षेपो-त्पत्तेः पुरापि विद्यमानत्वाच्चिदाभासस्य च विक्षेपान्तःपातित्वात् तदवस्थात्वानु-पपत्तेरित्याशङ्क्याह अज्ञानमिति। अनयोर्विक्षेपात् पुरा सिद्धत्वेऽपि नात्मावस्थात्वं तयोरात्मन्यवस्थावत्त्वानुपपत्तेः अतः परिशेषाच्चिदा-भासावस्थात्वमेव तयोरङ्गीकार्य्यमिति भावः॥ ३८॥

विक्षेपोत्पत्तितः पूर्वमपि विक्षेपसंस्कृतिः ।
अस्त्येव तदवस्थात्वमविरुद्धं ततस्तयोः ॥ ३९ ॥
ब्रह्मण्यारोपितत्वेन ब्रह्मावस्थे इमे इति ।
नाशङ्कनीयं सर्वासां ब्रह्मण्येवाधिरोपणात् ॥ ४० ॥
संसार्यहं विबुद्धोऽहं निःशोकस्तुष्ट इत्यपि ।
जीवगा उत्तरावस्था भान्ति न ब्रह्मगा यदि ॥ ४१ ॥
तर्ह्यज्ञोऽहं ब्रह्मसत्त्वभाने मद्दृष्टितो न हि ।
इति पूर्वे अवस्थे च भासेते जीवगे खलु ॥ ४२ ॥

---

अवस्थावतो विक्षेपस्य तदानीमभावात् तदवस्थात्वाभिधानमनुपपन्नमित्याशङ्क्य विक्षेपाभावेऽपि तत्संस्कारस्य तदानीं सत्त्वात् विक्षेपावस्थात्वाभिधानं न विरुध्यत इत्याह विक्षेपेति । ततः कारणात् तयोस्तदवस्थात्ववर्णनमविरुद्धमिति योजना ॥ ३९ ॥

नन्वप्रसिद्धसंस्काराभ्युपगमद्वारा विक्षेपावस्थात्ववर्णनाद् वरम् अधिष्ठानतया प्रसिद्धब्रह्मावस्थात्वकल्पनमित्याशङ्क्यातिप्रसङ्गात् मैवमिति परिहरति ब्रह्मणीति ॥ ४० ॥

ननु ब्रह्मण्यारोपितत्वाविशेषेऽपि विक्षेपोत्पत्त्युत्तरकालभाविनीनां संसारित्वाद्यवस्थानां जीवाश्रितत्वेनानुभूयमानत्वान्न ब्रह्मावस्थात्वमिति शङ्कते संसार्यहमिति । संसारी कर्तृत्वादिधर्मवान् विबुद्धस्तत्त्वसाक्षात्कारवान् निःशोकः शोकरहितः, तुष्टः वक्ष्यमाणकृतकृत्यत्वादिजनितसन्तोषवान् अहमस्मीति उत्तरावस्था जीवगा जीवाश्रिता भान्ति न ब्रह्माश्रिता इत्यर्थः ॥ ४१ ॥

एवं तर्ह्यज्ञानावरणयोरपि जीवाश्रितत्वेनानुभूयमानत्वाज्जीवावस्थात्वमेवेति परिहरति तर्हीति । मद्दृष्टितो ममानुभवेनेत्यर्थः ॥ ४२ ॥

अज्ञानस्याश्रयो ब्रह्मेत्याधिष्ठानतया जगुः ।
जीवावस्थात्वमज्ञानाभिमानित्वाद्वदादियम् ॥ ४३ ॥
ज्ञानद्वयेन नष्टेऽस्मिन्नज्ञाने तत्कृतावृतिः ।
न भाति नास्ति चेत्येषा द्विविधापि विनश्यति ॥ ४४ ॥
परोक्षज्ञानतो नश्येदसत्त्वावृतिहेतुता ।
अपरोक्षज्ञाननाश्या ह्यभानावृतिहेतुता ॥ ४५ ॥
अभानावरणे नष्टे जीवत्वारोपसंक्षयात् ।
कर्तृत्वाद्यखिलः शोकः संसाराख्यो निवर्तते ॥ ४६ ॥

---

ननु तर्ह्यज्ञानाश्रयत्वं ब्रह्मणः पूर्वाचार्यैः कथमुक्तमित्याशङ्क्य तद्विवक्षां दर्शयति अज्ञानस्येति । ब्रह्मणोऽज्ञानाधिष्ठानत्वविवक्षया तदाश्रयत्वमुक्तमित्यर्थः । भवद्भिस्तर्हि किं विवक्षया जीवावस्थात्वमुक्तमित्याशङ्क्य स्वविवक्षां दर्शयति जीवावस्थात्वमिति ॥ ४३ ॥

एवं बन्धहेतुमवस्थात्रयं प्रदर्श्यावशिष्टावस्थासु मध्ये पूर्वोक्ताज्ञानावरणनिवृत्तिद्वारा मुक्तिहेतुमवस्थाद्वयं दर्शयति ज्ञानद्वयेनेति । ज्ञानद्वयेनावरकाज्ञाने नष्टे सति तत्कृतावृतिस्तेनाज्ञानेनोत्पादितं न भाति नास्तीति व्यवहारकारणं द्विविधमप्यावरणं कारणाभावान्नश्यतीति ॥ ४४ ॥

कस्यायस्य केन निवृत्तिरित्यपेक्षायाम् उभयं विभज्य दर्शयति परोक्षज्ञानत इति । कूटस्थोऽस्तीत्येवंरूपात् परोक्षज्ञानात् असत्त्वावरणकारणत्वं निवर्तते कूटस्थोऽस्मीत्यपरोक्षज्ञानेन तु कूटस्थो न भातीत्येवंरूपावरणकारणत्वं निवर्तते ॥ ४५ ॥

इदानीं ज्ञानस्य फलरूपावस्थाद्वयमध्यमावस्थामाह अभानेति । अभानावरणे निवृत्ते सति भ्रान्त्या प्रतीयमानस्य जीवत्वस्यापि निवृत्तत्वात् तन्निमित्तकः कर्तृत्वादिलक्षणः संसाराख्यः शोकः सर्वोऽपि निवर्तत इत्यर्थः ॥ ४६ ॥

निवृत्ते सर्वसंसारे नित्यमुक्तत्वभासनात् ।
निरङ्कुशा भवेत् तृप्तिः पुनः शोकासमुद्भवात् ॥ ४७ ॥
अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे ।
अवस्थे जीवगे ब्रूते आत्मानञ्चेदिति श्रुतिः ॥ ४८ ॥
अयमित्यपरोक्षत्वमुक्तं तद् द्विविधं भवेत् ।
विषयस्वप्रकाशत्वाद्धियाप्येवं तदीक्षणात् ॥ ४९ ॥
परोक्षज्ञानकालेऽपि विषयस्वप्रकाशता ।
समा ब्रह्म स्वप्रकाशमस्तीत्येवं विबोधनात् ॥ ५० ॥

---

एवं शोकापगमरूपावस्थां प्रदर्श्य निरङ्कुशतृप्तिलक्षणां द्वितीयां दर्शयति निवृत्त इति ॥ ४७ ॥

नन्वात्मानञ्चेद् विजानीयादिति मन्त्रव्याख्याने प्रवृत्तत्वात् तद् विहाय मध्येऽज्ञानाद्यवस्थाप्रपञ्चनिरूपणं प्रकृतासङ्गतमित्याशङ्क्य आत्मानञ्चेदित्यस्याः श्रुतेस्तात्पर्यनिर्णयप्रधानत्वेनाभिहितत्वान्न प्रकृतासङ्गतमित्यभिप्रेत्य श्रुतितात्पर्यमाह अपरोक्षेति । चिदाभासनिष्ठं यदवस्थाद्वयम् अस्ति तदपरोक्षज्ञानशोकनिवृत्तिलक्षणमवस्थाद्वयं प्रतिपादयितुमयं मन्त्रः प्रवृत्तः इत्यभिप्रायः ॥ ४८ ॥

अयमित्यपरोक्षत्वमुच्यते चेत् तदुच्यतामित्यत्राह अयमिति पदेनात्मनोऽपरोक्षत्वमुच्यत इत्युक्तं तथा सत्यपरोक्षज्ञानविषयत्वमेव स्यात् न परोक्षज्ञानविषयत्वमित्याशङ्क्य तदुपपादनायापरोक्षज्ञानं विभजते अयमिति । द्वैविध्ये कारणमाह विषयेति । विषयस्य चिद्रूपस्यात्मनः स्वप्रकाशत्वात् स्वव्यवहारे साधनान्तरनिरपेक्षत्वात् धिया बुद्ध्या एवं स्वप्रकाशत्वेन तदीक्षणात् तस्य विषयस्यात्मनोऽवलोकनाच्चेत्यर्थः ॥ ४९ ॥

भवतु द्वैविध्यमेतावता परोक्षज्ञानविषयत्वे किमायातमित्याशङ्क्य विषयस्वप्रकाशत्वं परोक्षज्ञानविषयत्वे विरोधि न भवति इत्याह परो-

अहं ब्रह्मेत्यनुल्लिख्य ब्रह्मास्तीत्येवमुल्लिखेत् ।
परोक्षज्ञानमेतन्न भ्रान्तं बाधानिरूपणात् ॥ ५१ ॥
ब्रह्म नास्तीति मानञ्चेत् स्याद् बाध्येत तदा ध्रुवम् ।
न चैवं प्रबलं मानं पश्यामोऽतो न बाध्यते ॥ ५२ ॥
व्यक्त्यनुल्लेखमात्रेण भ्रमत्वे स्वर्गधीरपि ।
भ्रान्तिः स्याद् व्यक्त्यनुल्लेखात् सामान्योल्लेखदर्शनात् ॥५३॥
अपरोक्षत्वयोग्यस्य न परोक्षमतिर्भ्रमः ।
परोक्षमित्यनुल्लेखादर्थात् पारोक्ष्यसम्भवात् ॥ ५४ ॥

---

चेति । अपरोक्षज्ञानकाल इव परोक्षज्ञानकालेऽपि विषयस्य ब्रह्मणः अप्रकाशमानस्यैव । अत्रोपपत्तिमाह ब्रह्मेति ॥ ५० ॥

प्रत्यगभिन्नब्रह्मगोचरस्य ज्ञानस्य कुतः परोक्षत्वमिति आशङ्क्य प्रत्यगंशापरिग्रहादित्याह अहं ब्रह्मेति । नन्विदं भ्रान्तिज्ञानमित्याशङ्क्य भ्रान्तत्वं किं बाध्यत्वात् उत व्यक्त्यनुल्लेखात् अथवाऽपरोक्षेण ग्रहणयोग्यस्य परोक्षेण ग्रहणात् ब्रह्मांशाग्रहणादिति चतुरो विकल्पान् प्रथमं प्रत्याह एतदिति ॥ ५१ ॥

हेतुं विवृणोति ब्रह्म नास्तीति ॥ ५२ ॥

द्वितीयमतिप्रसङ्गेन दूषयति व्यक्त्यनुल्लेखेति । स्वर्गं स्वर्ग इत्येव-व्यक्त्याकारेण ग्रहणाभावात् किन्तु स्वर्गोऽस्तीत्येवं सामान्याकारेण प्रतीतेः स्वर्गबुद्धेरपि भ्रान्तत्वप्रसङ्ग इत्यर्थः ॥ ५३ ॥

तृतीयं निराकरोति अपरोक्षत्वेति । अपरोक्षत्वेन ग्रहणयोग्यस्य प्रत्यगभिन्नब्रह्मविषयस्य परोक्षज्ञानस्य भ्रमत्वं न सम्भवति । कुत इत्यत आह परोक्षमिति ब्रह्म परोक्षमित्येवमाकारेण ग्रहणाभावात् । कुतस्तर्हि तस्य परोक्षत्वमित्याशङ्क्याह अर्थादिति । इदं ब्रह्मेत्येवं व्यक्त्युल्लेखाभावबलादर्थात् परोक्षत्वसिद्धिरिति भावः ॥ ५४ ॥

अंशाग्रहीतिर्भ्रान्तिश्चेत् घटज्ञानं भ्रमो भवेत् ।
निरंशस्यापि सांशत्वं व्यावर्त्यांशविभेदतः ॥ ५५ ॥
असत्त्वांशो निवर्त्तेत परोक्षज्ञानतस्तथा ।
अभानांशनिवृत्तिः स्यादपरोक्षधिया कृता ॥ ५६ ॥
दशमोऽस्तीत्यविभ्रान्तं परोक्षज्ञानमीक्ष्यते ।
ब्रह्मास्तीत्यपि तद्वत् स्यादज्ञानावरणं समम् ॥ ५७ ॥
आत्मा ब्रह्मेति वाक्यार्थे निःशेषेण विचारिते ।
व्यक्तिरुल्लिख्यते यद्वद् दशमस्त्वमसीत्यतः ॥ ५८ ॥

---

चरममाशङ्कते अंशाग्रहीतिरिति । ब्रह्मांशग्रहणेऽपि प्रत्यगंशाग्रहणात् भ्रमत्वमित्यर्थः । एवं तर्हि घटादिज्ञानस्यापि भ्रमत्वप्रसङ्ग इति परिहरति घटेति अन्तरावयवानामग्रहणादिति भावः । ननु घटस्य सावयवत्वादंशग्रहणेऽप्यंशाग्रहणं सम्भवति ब्रह्मणस्तु निरंशत्वात् कथमंशाग्रहणसम्भव इत्याशङ्क्य व्यावर्त्यांशोपाधिनिमित्तकं सांशत्वं तस्य भविष्यतीत्याह निरंशस्येति ॥ ५५ ॥

तौ कौ व्यावर्त्यांशावित्याकाङ्क्षायामाह असत्त्वांश इति ॥ ५६ ॥

अपरोक्षत्वेन ग्रहणयोग्यविषयं परोक्षज्ञानं भ्रमो न भवतीत्येतद् दृष्टान्तप्रदर्शनेनापि दृढयति दशमोऽस्तीति दशमोऽस्तीत्याप्तवाक्यजन्यं परोक्षज्ञानमभ्रान्तं यथा ब्रह्मास्तीति वाक्यजन्यज्ञानमपि तद्वदभ्रान्तं स्यात् अज्ञानकृतस्यावरणांशस्य समत्वादिति भावः ॥५७॥

ननु वाक्यात् परोक्षज्ञानमुत्पद्यते चेदपरोक्षज्ञानं कुतो जायते इत्याशङ्क्य विचारसहितादेव वाक्यात् इत्याह आत्मा ब्रह्मेतीति । अयमात्मा ब्रह्मेति महावाक्यार्थे सम्यग्विचार्यमाणे पूर्वमस्तीति परोक्षतयाऽवगतस्य ब्रह्मणः प्रत्यगभिन्नत्वं साक्षात् क्रियते । तत्र दृष्टान्तः यद्वदिति । दशमस्त्वमसीत्यतो वाक्यादात्मनि दशमत्वं यथा साक्षात् क्रियते तद्वदित्यर्थः ॥ ५८ ॥

दशमः क इति प्रश्ने त्वमेवेति निराकृते ।
गणयित्वा स्वेन सह स्वमेव दशमं स्मरेत् ॥ ५९ ॥
दशमोऽस्मीति वाक्योत्था न धीरस्य विहन्यते ।
आदिमध्यावसानेषु न नवत्वस्य संशयः ॥ ६० ॥
सदेवेत्यादिवाक्येन ब्रह्मसत्त्वं परोक्षतः ।
गृहीत्वा तत्त्वमस्यादिवाक्याद् व्यक्तिं समुल्लिखेत् ॥ ६१ ॥
आदिमध्यावसानेषु स्वस्य ब्रह्मत्वधीरियम् ।
नैव व्यभिचरेत् तस्मादापरोक्ष्यं प्रतिष्ठितम् ॥ ६२ ॥

विचारपूर्वकतेन वाक्येनापरोक्षज्ञानोत्पत्तिप्रकारं तावद् दृष्टान्ते दर्शयति दशमः क इति त्वया अस्तीति निरूपितो दशमः कः इति प्रश्ने कृते तत्र त्वमेवेति परिहारेऽभिहिते आत्मना सहेतरान् नव गणयित्वाऽहं दशमोऽस्मीति स्वमेव दशमं स्मरेदित्यर्थः ॥ ५९ ॥

अत्र दशमोऽस्मीति ज्ञानस्य विचारपूर्वकवाक्यजनितत्वात् विपर्ययादिरूपत्वाभावं दर्शयति दशमोऽस्मीति । अत्र दशमस्त्वमेव दशमोऽसीति वाक्यात् परिगणनादिरूपविचारपूर्वकादुत्पन्नाहं दशमोऽस्मीति बुद्धिर्न विहन्यते न केनापि ज्ञानेन बाध्यते परिगणनक्रियायां च नवानामादिमध्यावसानेषु परिगणनेऽप्यहं दशमो न वेति संशयश्च न भवेत् अतः सा दृढाऽपरोक्षरूपेत्यर्थः ॥ ६० ॥

एतद् दार्ष्टान्तिके योजयति सदेवेत्यादीति आदिमध्यावसानेष्विति च श्लोकद्वयेन । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिवाक्येन ब्रह्मसद्भावं प्रथमं निश्चित्य तस्य जीवरूपेण प्रवेशादियुक्तिपर्यालोचनया प्रत्यक्त्वं बुद्ध्वा तत् त्वमस्यादिवाक्येनाद्वितीयब्रह्मरूपतामात्मनः ब्रह्मास्मीति साक्षात् कुर्यात् ॥ ६१ ॥

अत इत्थमुत्पन्ना ब्रह्मत्वबुद्धिः पञ्चानां कोशानाम् आदिमध्यावसाने-

जन्मादिकारणत्वाख्यलक्षणेन भृगुः पुरा।
परोक्षेण गृहीत्वाथ विचारात् व्यक्तिमैक्षत ॥ ६३ ॥
यद्यपि त्वमसीत्यत्र वाक्यं नोचे भृगोः पिता।
तथाप्यन्नं प्राणमिति विचार्य्यस्थलमुक्तवान् ॥ ६४ ॥
अन्नप्राणादिकोशेषु सुविचार्य्य पुनः पुनः।
आनन्दव्यक्तिमीक्षित्वा ब्रह्मलक्षाप्ययूयुजत् ॥ ६५ ॥

---

आत्मनो व्यवहारेऽपि नैवान्यथा भवति अतोऽस्या बुद्धेरपरोक्षज्ञानत्वं दुस्त्यजमित्यर्थः ॥ ६२ ॥

नन्वेवं प्रथमतः केवलवाक्यात् परोक्षज्ञानमुत्पद्यते पश्चात् विचार-सहितादपरोक्षज्ञानमित्येतत् कुतोऽवगम्यते इत्याशङ्क्य तैत्तिरीयकादि-श्रुत्यर्थपर्य्यालोचनयेत्याह जन्मादीति। भृगुनामैकः कश्चिदृषिः पुरा यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्य-भिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्मेति वाक्यश्रुतेन जगज्जन्मादि-कारणत्वाख्यलक्षणेन जगत्कारणं ब्रह्म परोक्षतयावगम्य अन्नमयादि-पञ्चकोशविचाराद् व्यक्तिं प्रत्यगात्मनो रूपं ब्रह्म दृष्टवानित्यर्थः ॥ ६३ ॥

नन्वस्मिन् प्रकरणे त्वं ब्रह्मासीत्येवमाद्युपदेशवाक्याभावात् कथं भृगोरात्मतत्त्वसाक्षात्कार इत्याशङ्क्यात्मसाक्षात्कारहेतुविचारयोग्यस्थल-दर्शनादित्याह यद्यपीति ॥ ६४ ॥

नन्वन्नमयादिकोशेषु विचारितेषु प्रतीचः साक्षात्कारो भवतु ब्रह्मणस्तु कथमित्याशङ्क्य प्रतीच एव ब्रह्मत्वात् पञ्चकोशविचारेणा-नन्दात्मव्यक्तिं साक्षात् कृत्वा आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति इत्येवं ब्रह्मलक्षणमपि प्रतीच्यत्र योजितवानित्याह अन्नप्राणादीति ॥ ६५ ॥

सत्यं ज्ञानमनन्तमित्येवं ब्रह्मस्वलक्षणम् ।
उक्त्वा गुहाहितत्वेन कोशेष्वेतत् प्रदर्शितम् ॥ ६६ ॥
पारोक्ष्येण विबुध्येन्द्रो य आत्मेत्यादिलक्षणात् ।
अपरोक्षीकर्त्तुमिच्छंश्चतुर्वारं गुरुं ययौ ॥ ६७ ॥
आत्मा वा इदमित्यादौ परोक्षं ब्रह्म लक्षितम् ।
अध्यारोपापवादाभ्यां प्रज्ञानं ब्रह्म दर्शितम् ॥ ६८ ॥

---

ननु ब्रह्मलक्षणस्यानन्दात्मरूपे प्रतीचि योजनं न घटते ब्रह्मणः तटस्थत्वेन प्रतीचो भिन्नत्वादित्याशङ्क्य न भेदः सत्यादिलक्षणस्य ब्रह्मणः प्रत्यग्रूपेणावस्थानश्रवणादित्याह सत्यं ज्ञानमिति । सत्यं ज्ञानमनन्तं ब्रह्मेत्येवं ब्रह्मस्वलक्षणं ब्रह्मणः स्वरूपलक्षणमभिधाय यो वेद निहितं गुहायां परमे व्योमन्नित्यनेन वाक्येन पञ्चकोशगुहान्तःस्थितत्वेन तस्यैव प्रत्यक्त्वमभिहितमित्यर्थः ॥ ६६ ॥

एवं तैत्तिरीयश्रुतिपर्यालोचनया भृगोः परोक्षज्ञानपूर्वकं विचारजन्यं साक्षात्कारञ्च दर्शयित्वा छान्दोग्यश्रुतिपर्यालोचनयापि तद्दर्शयति पारोक्ष्येणेति । इन्द्रो य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोक इत्यादिवाक्यप्रतिपादितेन लक्षणेनात्मानं परोक्षतयावगम्य विचारात् शरीरात्मत्वनिराकरणेन तत्साक्षात्काराय गुरुं ब्रह्माणं चतुर्वारमुपसन्न इति छान्दोग्योपनिषद्यष्टमाध्याये श्रूयते ॥ ६७ ॥

इदानीमैतरेयश्रुतावपि तद्दर्शयति आत्मेति । आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषदित्यनेन वाक्येन ब्रह्मणो लक्षणमभिधाय स ईक्षत लोकान्नु सृजा इत्युपक्रम्य तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इत्यनेन शरीरात्मनि जगदध्यारोपप्रकारमभिधाय स जातो भूतान्यभिव्यैक्षत् किमिहान्यं वावदिषदिति तदध्यारोपितस्यापवादमभिधाय च पुन

अवान्तरेण वाक्येन परोक्षब्रह्मधीर्भवेत् ।
सर्वत्रैव महावाक्यविचारात्त्वपरोक्षधीः ॥ ६९ ॥
ब्रह्मापारोक्ष्यसिद्ध्यर्थं महावाक्यमितीरितम् ।
वाक्यवृत्तावतो ब्रह्मापारोक्ष्ये विमतिर्नहि ॥ ७० ॥
आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः ।
अन्तःकरणसम्भिन्नबोधः स त्वम्पदाभिधः ॥ ७१ ॥
मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ।
पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ७२ ॥

---

मेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिति प्रत्यगात्मनो ब्रह्मरूपत्व-मभिहितं पुनश्च पुरुषे ह वा इत्यादिना ज्ञानसाधनवैराग्यजननाय गर्भ-वासादिदोषं प्रदर्श्य कोऽयमात्मेति वयमुपास्महे इत्यादिना विचारेण तत्त्वम्पदार्थपरिशोधनपुरःसरं प्रज्ञानं ब्रह्मेति प्रज्ञानरूपस्यात्मनो ब्रह्मत्वं दर्शितमित्यर्थः ॥ ६८ ॥

उक्तन्यायमितरासु श्रुतिष्वप्यतिदिशति अवान्तरेणेति । सर्वत्र सर्वासु श्रुतिष्वित्यर्थः ॥ ६९ ॥

ननु महावाक्यविचारस्यापरोक्षज्ञानजनकत्वं स्वकपोलकल्पितमित्या-शङ्क्य वाक्यवृत्तावाचार्यैस्तथा प्रतिपादितत्वान्मैवमित्याह ब्रह्मापरो-क्ष्येति । अतो महावाक्यात् ब्रह्मापरोक्षज्ञाने विप्रतिपत्तिर्नास्तीत्यर्थः ॥ ७० ॥

वाक्यवृत्त्युपपादनप्रकारं दर्शयति आलम्बनतयेति । यो अन्तः-करणसम्भिन्नबोधोऽन्तःकरणोपाधिकश्चिदात्माऽस्मत्प्रत्ययशब्दयोरहमिति ज्ञानस्याहमिति शब्दस्य चालम्बनतया विषयत्वेन भाति स तथाविधो बोधस्त्वम्पदाभिधस्त्वमिति पदमभिधा वाचकं यस्य स त्वम्पदाभिधः त्वम्पद-वाच्य इत्यर्थः ॥ ७१ ॥

एवं त्वम्पदवाच्यार्थमभिधाय तत्पदवाच्यार्थमाह मायोपाधि-

प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता।
विरुध्येते यतस्तस्माल्लक्षणा संप्रवर्त्तते ॥ ७३ ॥
तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा।
सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ७४ ॥
संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ७५ ॥

रिति। पारोक्ष्यशबलः परोक्षत्वधर्मविशिष्ट इत्यर्थः। एवं तटस्थलक्षणम् अभिधाय स्वरूपलक्षणमाह सत्याद्यात्मक इति। सत्यमादि येषां ज्ञानादीनां ते सत्यादयः आत्मा स्वरूपं यस्य स तथाविधः तत्पदाभिधः तत्पदमभिधा वाचकं यस्य स तत्पदाभिधः तत्पदवाच्य इत्यर्थः ॥७२॥

एवं पदार्थावभिधाय वाक्यार्थबोधाय लक्षणावृत्तिराश्रयणीयेत्याह प्रत्यगिति। प्रत्यक्त्वपरोक्षत्वे सद्वितीयत्वेन सहिता पूर्णतेति मध्यमपदलोपी समासः सद्वितीयपूर्णत्वे चैकस्य वस्तुनो यतो विरुध्येते अतो लक्षणावृत्तिराश्रयणीयेत्यर्थः ॥ ७३ ॥

सा च कीदृशीत्यत आह तत्त्वमस्यादीति। भागलक्षणा भागत्यागेन लक्षणेत्यर्थः। तत्र दृष्टान्तः सोऽयमिति। सोऽयं देवदत्त इति वाक्यस्थयोः सोऽयमिति पदयोर्यथा जहदजहल्लक्षणावृत्तिराश्रिता नापरा न जहल्लक्षणा नाप्यजहल्लक्षणा तद्वदत्रापीत्यर्थः ॥ ७४ ॥

ननु गामानयेत्यादिवाक्येषु लक्षणावृत्त्या विनापि वाक्यार्थबोधो दृश्यते तद्वदत्रापि किं न स्यादित्यत आह संसर्ग इति। यथा लोके गामानयेत्यादौ पदैः अभिहितानामाकाङ्क्षासन्निध्यादिमतां गवादिपदार्थानामन्वयो वाक्यार्थत्वेन स्वीकृतः यथा वा नीलं महत् सुगन्ध्युत्पलम् इत्यादौ नीलत्वादिविशिष्टस्योत्पलस्य वाक्यार्थत्वं स्वीकृतं नैवमत्र महावाक्येषु संसर्गविशिष्टयोरन्यतरस्य वाक्यार्थत्वमभ्युपगम्यते किन्तु अखण्डै-

प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ।
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ७६ ॥
इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ।
तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।
पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ७७ ॥
एवं सति महावाक्यात् परोक्षज्ञानमीर्यते ।
यैस्तेषां शास्त्रसिद्धान्तविज्ञानं शोभतेतराम् ॥ ७८ ॥
आस्तां शास्त्रस्य सिद्धान्तो युक्त्या वाक्यात् परोक्षधीः ।
स्वर्गादिवाक्यवन्नैवं दशमे व्यभिचारतः ॥ ७९ ॥

---

कारणत्वेन स्वगतादिभेदशून्यसुखात्मरूपेण वाक्यार्थो विद्वद्भिरभ्युपेयते अतो लक्षणाश्रयणीयेत्यर्थः ॥ ७५ ॥

अथाखण्डैकरसं वाक्यार्थं दर्शयति प्रत्यग्बोधो य इति । यः प्रत्यग्बोधः सर्वान्तरचिदात्मा आभाति बुद्ध्यादिसाक्षित्वेन स्फुरति सोऽद्वयानन्दलक्षणोऽद्वितीय आनन्दरूपः परमात्मेत्यर्थः अद्वयानन्दरूपश्च तथाविधः परमात्मा प्रत्यग्बोधैकलक्षणश्चिदेकरसः प्रत्यगात्मैवेत्यर्थः ॥ ७६ ॥

एवमखण्डवाक्यार्थबोधेन किं स्यादित्यत आह इत्थमिति । त्वमर्थस्य प्रत्यगात्मनोऽब्रह्मत्वं भ्रान्तिसिद्धा अब्रह्मरूपता तदर्थस्य ब्रह्मणश्च पारोक्ष्यं परोक्षज्ञानैकविषयत्वञ्च निवर्तेत । ततोऽपि किमिति पृच्छति यद्येवमिति । उत्तरमाह शृण्विति ॥ ७७ ॥

ननु वचनबलेन ब्रह्मण परोक्षानुभवसाधनमात्रम् इत्यागमकुशल-मतो वाक्यस्यापरोक्षज्ञानजनकत्वं कथमुच्यत इत्याशङ्क्य सिद्धान्तपरि-ज्ञानशून्योऽयमिति मनसि निधायोपहसति एवं सतीति । एवं वदन्तः सिद्धान्तरहस्यं नैव जानन्तीत्यर्थः ॥ ७८ ॥

स्वतोऽपरोक्षजीवस्य ब्रह्मत्वमभिवाञ्छतः ।
नश्येत् सिद्धापरोक्षत्वमिति युक्तिर्महत्यहो ॥ ८० ॥
वृद्धिमिष्टवतो मूलमपि नष्टमितीरितम् ।
लौकिकं वचनं सार्थं सम्पन्नं त्वत्प्रसादतः ॥ ८१ ॥
अन्तःकरणसम्भिन्नबोधो जीवोऽपरोक्षताम् ।
अर्हत्युपाधिसद्भावान्न तु ब्रह्मानुपाधितः ॥ ८२ ॥
नैवं ब्रह्मत्वबोधस्य सोपाधिविषयत्वतः ।
यावद्विदेहकैवल्यमुपाधेरनिवारणात् ॥ ८३ ॥

---

ननु सिद्धान्ततस्तावत् तिष्ठतु वाक्यस्य परोक्षज्ञानजनकत्वमनुमानसिद्धमिति शङ्कते आस्तामिति । विमतं वाक्यं परोक्षज्ञानजनकं भवितुमर्हति वाक्यत्वात् स्वर्गादिप्रतिपादकवाक्यवत् इत्यनुमानेन परोक्षज्ञानजनकत्वं सिद्धमित्यर्थः । अनैकान्तिकोऽयं हेतुरिति परिहरति नैवमिति । दशमस्त्वमसीति वाक्ये वाक्यार्थे समाने स्वस्यापरोक्षज्ञानजनकत्वस्योपलम्भादिति भावः ॥ ७९ ॥

किञ्च त्वंपदार्थस्य जीवस्यापरोक्षत्वाभावप्रसङ्गादपि न महावाक्यं परोक्षज्ञानजनकमित्यभिप्रायेणाह स्वत इति ॥ ८० ॥

इष्टापत्तिरित्याशङ्क्याह वृद्धिमिति ॥ ८१ ॥

ननु सोपाधिकत्वात् जीवस्यापरोक्षत्वं युक्तं ब्रह्मणस्तु निरुपाधिकस्य तन्न युज्यते इति शङ्कते अन्तःकरणेति ॥ ८२ ॥

ब्रह्मणो निरुपाधिकत्वमसिद्धमिति परिहरति नैवमिति । जीवस्य ब्रह्मरूपताज्ञानं यदस्ति तस्य सोपाधिकवस्तुविषयत्वात् तद्विषयस्य ब्रह्मणोऽपि सोपाधिकत्वं ज्ञानस्य सोपाधिकविषयत्वञ्च ज्ञेयस्य सोपाधिकत्वमन्तरेण न घटत इति भावः । तदेव कुत इत्यत आह यावदिति ॥ ८३ ॥

अन्तःकरणसाहित्यराहित्याभ्यां विशिष्यते ।
उपाधिर्जीवभावस्य ब्रह्मतायाश्च नान्यथा ॥ ८४ ॥
यथा विधिरुपाधिः स्यात् प्रतिषेधस्तथा न किम् ।
सुवर्णलोहभेदेन शृङ्खलत्व न भिद्यते ॥ ८५ ॥
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ।
वेदान्तानां प्रवृत्तिः स्यात् द्विधेत्याचार्य्यभाषितम् ॥ ८६ ॥

---

ननु तर्हि जीवब्रह्मणोर्विलक्षणमुपाधिद्वयं वक्तव्यमित्याशङ्क्याह अन्तःकरणेति । जीवभावब्रह्मभावयोरन्तःकरणसाहित्यराहित्ये एवोपाधी इत्यर्थः ॥ ८४ ॥

नन्वन्तःकरणसम्बन्धस्य भावरूपत्वादुपाधित्वमस्तु नाभावरूपस्य तद्राहित्यस्य तदुचितमित्याशङ्क्य यावत् कार्य्यमवस्थायि भेदहेतोरुपाधितेत्युक्तोपाधिलक्षणस्य साहित्यराहित्ययोरुभयोरपि सत्त्वादुचितमेवोपाधित्वमित्यभिप्रायेण परिहरति यथेति । विधिर्भावरूपोऽन्तःकरणसम्बन्धो यथोपाधिः स्यात् तथा प्रतिषेधोऽभावरूपोऽन्तःकरणवियोग उपाधिः किं न स्यात् किन्तु स्यादेव इत्यर्थः । तथापि भावाभावरूपत्वलक्षणमवान्तरवैलक्षण्यं दृश्यते एवेत्याशङ्क्य तस्याकिञ्चित्करत्वेनानादरणीयत्वमित्यभिप्रेत्य दृष्टान्तमाह सुवर्णेति । पुरुषप्रचारबोधकत्वांशे अनुपयुक्तं सुवर्णत्वलौहत्वादिकं वैलक्षण्यं यद्वदनादरणीयं तद्वदित्यर्थः ॥ ८५ ॥

विधेरिव निषेधस्यापि ब्रह्मबोधोपायत्वेन ब्रह्मोपाधित्वं द्रढयितुं विधिनिषेधयोरपि ब्रह्मबोधोपायत्वमाचार्य्यैर्निरूपितमिति दर्शयति अतद्व्यावृत्तीति । तच्छब्देन ब्रह्माभिधीयते अतच्छब्देन तदतिरिक्तप्राणादि, न तत् अतत् तस्य प्रपञ्चस्य व्यावृत्तिर्निरसनं तदेव रूपमुपायस्तेन साक्षात् विधिमुखेन च विधिर्विधानं साक्षात् वाचकशब्दप्रयोगः सत्यं ज्ञानमनन्तमित्येवमादिरूपस्तेन च विधिमुखेन तद्द्वारेणापीत्यर्थः वेदान्तानामुपनिषदां प्रवृत्तिः प्रवर्त्तनं प्रतिपादनं ब्रह्मणीति शेषः ॥ ८६ ॥

अहमर्थपरित्यागादहं ब्रह्मेति धीः कुतः ।
नैवमंशस्य हि त्यागो भागलक्षणयोदितः ॥ ८७ ॥
अन्तःकरणसंत्यागादवशिष्टे चिदात्मनि ।
अहं ब्रह्मेति वाक्येन ब्रह्मत्वं साक्षिणीक्ष्यते ॥ ८८ ॥
स्वप्रकाशोऽपि साक्ष्येव धीवृत्त्या व्याप्यतेऽन्यवत् ।
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ॥ ८९ ॥
बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ ९० ॥

ननु वेदान्तानाम् अतद्व्यावृत्त्या ब्रह्मबोधकत्वाङ्गीकारेऽहंशब्दार्थस्य कूटस्थस्यापि त्यागप्रसङ्गादहं ब्रह्मास्मीति सामानाधिकरण्येन ज्ञानं नोदेतुमर्हतीति शङ्कते अहमर्थेति । अहमर्थांशस्य सर्वस्यात्यक्तत्वान्नैव-मिति परिहरति नैवमिति । हि यस्मात् कारणात् भागलक्षणया जह-दजहल्लक्षणया अहमर्थैकदेशस्य जडांशस्य त्याग ईरितः न तु कूटस्थस्य अतोऽहं ब्रह्मास्मीति ज्ञानमुपपन्नम् इत्यर्थः ॥ ८७ ॥

भागत्यागेन बोधप्रकारम् अभिनीय दर्शयति अन्तःकरणेति ॥ ८८ ॥

ननु केवलस्य प्रत्यगात्मनः स्वप्रकाशत्वाद् बुद्धिवृत्तिविषयत्वं न घटते इत्याशङ्क्याह स्वप्रकाशोऽपीति । अन्यवत् घटादिवदित्यर्थः । स्वप्रकाशो-ऽप्यज्ञानावृतत्वाद्वृत्तिव्याप्यत्वादिति भावः । तर्ह्यपसिद्धान्तापात इत्याशङ्क्य पूर्वाचार्यैरपि वृत्तिव्याप्यत्वस्याङ्गीकृतत्वान्नायमपसिद्धान्त इति परिहरति फलव्याप्यत्वमिति । अयं वृत्तिप्रतिबिम्बितचिदाभासव्याप्यत्वमेवास्य प्रत्यगात्मनो निराकृतं स्वस्यैव स्फुरणरूपत्वादिति भाव ॥ ८९ ॥

शास्त्रेति फलव्याप्यत्वाभावं दर्शयितुमनात्मनो वृत्त्या फलेन च व्याप्यत्वं दर्शयति बुद्धीति । उभयव्याप्तेः प्रयोजनमाह तत्रेति । तत्र तयोः बुद्धिचिदाभासयोर्मध्ये धिया बुद्धिवृत्त्या प्रमाणभूतया अज्ञानं नश्यति

ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ।
स्वयं स्फुरणरूपत्वान्नाभास उपयुज्यते ॥ ९१ ॥
चक्षुर्दीपावपेक्ष्येते घटादेर्दर्शने तथा ।
न दीपदर्शने किन्तु चक्षुरेकमपेक्ष्यते ॥ ९२ ॥
स्थितोऽप्यसौ चिदाभासो ब्रह्मण्येकीभवेत् परम् ।
न तु ब्रह्मण्यतिशयं फलं कुर्यात् घटादिवत् ॥ ९३ ॥
अप्रमेयमनादिञ्चेत्यत्र श्रुत्येदमीरितम् ।

---

ज्ञानाज्ञानयोर्विरोधात् । आभासेन चिदाभासेन घटः स्फुरेत् जडत्वेन स्वतः स्फुरणाभावादिति भावः ॥ ९० ॥

इदानीमात्मनि ततो वैलक्षण्यं दर्शयति ब्रह्मणीति । प्रत्यक्ब्रह्मणोरैक्यस्याज्ञानेनावृतत्वात् तस्याज्ञानस्य निवृत्तये वाक्यजन्ययाऽहं ब्रह्मास्मीत्येवमाकारया धीवृत्त्या व्याप्तिरपेक्ष्यते स्वस्यैव स्फुरणरूपत्वात् तत्स्फुरणाय चिदाभासो नापेक्ष्यतेऽतो युज्यमानोऽपि चिदाभासो नोपयुज्यत इत्यर्थः ॥ ९१ ॥

उक्तमर्थं दृष्टान्तप्रदर्शनेन विशदयति चक्षुरिति । अन्धकारावृतघटादिदर्शने चक्षुर्दीपावुभावप्यपेक्ष्येते दीपदर्शने न तु तथा किन्त्वेकं चक्षुरेवापेक्ष्यते यथा तथा ब्रह्मण्यज्ञाननाशायेति पूर्वेण सम्बन्धः ॥ ९२ ॥

ननु बुद्धितद्वृत्तीनां चिदाभासवैशिष्ट्यस्यावश्यम्भावात् घटादिष्विव ब्रह्मण्यपि फलव्याप्तिर्बलाद् भवेदित्याशङ्क्याह स्थितोऽपीति । यद्यपि घटाद्याकारवृत्तिवत् ब्रह्मगोचरवृत्तावपि चिदाभासोऽस्ति तथापि नासौ ब्रह्मणो भेदेन भासते किन्तु प्रचण्डातपमध्यवर्त्ति प्रदीपप्रभावत् तेन एकीभूत इव भवति अतो न स्फुरणलक्षणातिशयजनको ब्रह्मणीत्यर्थः ॥ ९३ ॥

ननु ब्रह्मणि फलव्याप्तिर्नास्ति वृत्तिव्याप्तिस्तु विद्यत इत्युक्तं तत्र

मनसैवेदमाप्तव्यमिति धीव्याप्यता श्रुता ॥ ९४ ॥
आत्मानञ्चेद् विजानीयादयमस्मीति वाक्यतः ।
ब्रह्मात्मव्यक्तिमुल्लिख्य यो बोधः सोऽभिधीयते ॥ ९५ ॥
अस्तु बोधोऽपरोक्षोऽत्र महावाक्यात् तथाप्यसौ ।
न दृढः श्रवणादीनामाचार्यैः पुनरीरणात् ॥ ९६ ॥

---

किं प्रमाणमित्याशङ्क्यागमः प्रमाणमित्याह अप्रमेयमिति । निर्विकल्प-मनन्तञ्च हेतुदृष्टान्तवर्ज्जितम् । अप्रमेयमनादिञ्च यज्ज्ञात्वा मुच्यते बुध इत्यसौ अनु मन्त्रे श्रुत्याऽमृतबिन्दूपनिषदा अप्रमेयशब्देनेदं फल-व्याप्यत्वं निराकृतम् । मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चनेति कठ-वल्ल्या धीव्याप्यता श्रुता वृत्तिव्याप्यत्वं श्रुतमित्यर्थः ॥ ९४ ॥

आत्मानञ्चेदु विजानीयादिति मन्त्रेणापरोक्षज्ञानस्याकारनिरूपणाच्च [illegible] अयमभिधीयत इत्युक्तमपरोक्षज्ञानस्याकारनिरूपणं [illegible] इमं अर्थं [illegible] आत्मानञ्चेदिति श्रुतिरित्यनेन ज्ञानेन तत्त्व-निश्चयेनापरोक्षज्ञानमुच्यते इत्याकाङ्क्षायामाह आत्मानञ्चेदिति । ब्रह्मात्मव्यक्तिं सत्यादिलक्षणब्रह्माभिन्नप्रत्यगात्मस्वरूपमुल्लिख्य विषयी-कृत्य यो बोधो जायते ब्रह्माहमस्मीति सोऽभिधीयते अनेन वाक्येने-त्यर्थः ॥ ९५ ॥

ननु तर्हि पूर्वोक्तरीत्या महावाक्यविचारादेवापरोक्षज्ञानसिद्धे-राचार्यस्तदुपदेशादित्यादौ विहितं श्रवणाद्यावर्त्तनमननुष्ठेयं स्यादि-त्याशङ्क्य ज्ञानदार्ढ्याय तदावर्त्तनानुष्ठानस्याचार्यैरभिहितत्वादनुष्ठेय-मेवेत्याह अस्त्विति । अत्र ब्रह्मात्मनि विषये महावाक्यात् सकृच्छ्रुतात् विचारयुक्तादपरोक्षबोधोऽस्तु भवत्येव तथापि असौ दृढोऽतः श्रवणा-द्यावर्त्तनीयं श्रीमच्छङ्कराचार्यैः पुनर्वाक्यार्थज्ञानोत्पत्त्यनन्तरमपि श्रव-णाद्यावर्त्तनाभिधानादित्यर्थः । [illegible] इति वक्ष्यते ॥ ९६ ॥

अहं ब्रह्मेति वाक्यार्थबोधो यावद् दृढीभवेत् ।
शमादिसहितस्तावदभ्यसेत् श्रवणादिकम् ॥ ९७ ॥
बाढं सन्ति ह्यदार्ढ्यस्य हेतवः श्रुत्यनेकता ।
असम्भाव्यत्वमर्थस्य विपरीता च भावना ॥ ९८ ॥
शाखाभेदात् कामभेदात् श्रुतं कर्मान्यथान्यथा ।
एवमत्रापि माशङ्कीत्यतः श्रवणमाचरेत् ॥ ९९ ॥
वेदान्तानामशेषाणामादिमध्यावसानतः ।
ब्रह्मात्मन्येव तात्पर्यमिति धीः श्रवणं भवेत् ॥ १०० ॥

---

आचार्यैः केन वाक्येनाभिहितमित्याशङ्क्य तद्वाक्यं पठति अह-मिति ॥ ९७ ॥

ननु वाक्यप्रमाणजनितस्य ज्ञानस्यादार्ढ्यं कुत इत्याशङ्क्याह बाढ-मिति । हि यस्मात् कारणात् श्रुत्यनेकता श्रुतीनां नानात्वमेको हेतु-रर्थस्यात्मनश्चैकरसस्याद्वितीयब्रह्मरूपस्यालौकिकत्वेनासम्भावितत्वमपरो हेतुः विपरीतभावना च पुनः कर्तृत्वाद्यभिमानरूपा तु तृतीयो हेतुः इत्येवं-त्रिधा अदार्ढ्यस्य हेतवो बाढं सन्ति सर्वथापि विद्यन्ते अतोऽपरोक्षा-नुभवदार्ढ्याय श्रवणादिकमावर्तनीयमिति भावः ॥ ९८ ॥

एवं त्रिविधानदार्ढ्यस्य हेतूनुपन्यस्य श्रुतिनानात्वप्रयुक्तादार्ढ्य-निवृत्तये श्रवणावृत्तिः कर्तव्येत्याह शाखाभेदादिति । यथा शाखा-भेदात् कर्मभेदः श्रूयते बह्वृचैर्होत्रं क्रियते यजुषाध्वर्यवं सामो-द्गीथमिति यथा वा कामभेदात् कारीर्या वृष्टिकामो यजेत शत-कृष्णलमायुष्काम इत्यादिकर्मभेदः श्रुत एवमुपनिषत्स्वपि प्रतिपाद्य-तत्त्वस्य भेदशङ्कायां तन्निवारणाय श्रवणं पुनः पुनः कर्तव्यमित्यर्थः ॥९९॥

किंलक्षणं श्रवणमित्याकाङ्क्षायां तल्लक्षणमाह वेदान्तानामिति । सर्वे-षामप्युपनिषदामुपक्रमोपसंहारादिपर्यालोचनायां ब्रह्मरूपे प्रत्यगा-

समन्वयाध्याय एतत् सूत्रं धीस्वास्थ्यकारिभिः ।
तर्कैः सम्भावनार्थस्य द्वितीयाध्याय ईरिता ॥ १०१ ॥
बहुजन्मदृढ़ाभ्यासाद् देहादिष्वात्मधीः क्षणात् ।
पुनः पुनरुदेत्येवं जगत्सत्यत्वधीरपि ॥ १०२ ॥
विपरीता भावनेयमैकाग्र्यात् सा निवर्त्तते ।
तत्त्वोपदेशात् प्रागेव भवत्येतदुपासनात् ॥ १०३ ॥
उपास्तयोऽतएवात्र ब्रह्मशास्त्रेऽपि चिन्तिताः ।
प्रागनभ्यासिनः पश्चात् ब्रह्माभ्यासेन तद् भवेत् ॥१०४।

तस्यैव तात्पर्यमैदम्पर्यं च पर्यवसानमित्येवरूपो निश्चयः श्रवण-मित्यर्थः ॥ १०० ॥

एवंविधं श्रवणं कुत्र निरूपितमित्यत आह समन्वयेति । एतत् श्रवणं समन्वयाध्याये सूत्रकृद्भिर्व्यासादिभिरिति शेषः । तर्कैः सम्भावना विषयनिश्चयमननन्तु द्वितीयाध्याये निरूपितमित्याह धीस्वास्थ्येति । प्रमेयगतासम्भावनापरिहारद्वारा बुद्धिस्वास्थ्यकारिभिस्तर्कैर्युक्त्याभि-धेयैरर्थस्य सम्भावना सम्भावितत्वानुसन्धानं मननं द्वितीयाध्याये निरूपित-मित्यर्थः ॥ १०१ ॥

इदानीं विपरीतभावनां तन्निवृत्त्युपायञ्च दर्शयति बहुजन्मेति वाक्येन ॥ १०२ ॥

विपरीतभावनानिवर्त्तकं यदैकाग्र्यं तत् कुतो जायत इत्याशङ्क्याह तत्त्वेति । एतदैकाग्र्यं तत्त्वोपदेशात् प्रागेव सगुणब्रह्मोपासनाद् भवति भवेदित्यर्थः ॥ १०३ ॥

नन्वेतत् कुतोऽवगतमित्याशङ्क्योपासनाविचारस्य वेदान्तशास्त्रे कृत-त्वादित्याह उपास्तय इति । अकृतोपासनस्य कुतस्तत्त्वज्ञानं इत्यत आह प्रागिति ॥ १०४ ॥

तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्।
एतदेकपरत्वञ्च ब्रह्माभ्यासं विदुर्बुधाः॥ १०५॥
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।
नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत्॥१०६
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ १०७॥
इति श्रुतिस्मृती नित्यमात्मन्येकाग्रतां धियः।

---

ब्रह्माभ्यासश्च कीदृश इत्याकाङ्क्षायामाह तच्चिन्तनमिति॥ १०५॥

एतदेकपरत्वं विशदयितुं श्रुतिमाह तमेवेति। धीरः ब्रह्मचर्यादिसाधनसम्पन्नः ब्राह्मणः ब्रह्म भवितुमिच्छुः मुमुक्षुस्तमेव प्रत्यग्रूपं परमात्मानमेव विज्ञाय संशयाद्यभावो यथा भवति तथा ज्ञात्वा प्रज्ञां ब्रह्मात्मैकत्वज्ञानसन्ततिरूपामैकाग्र्यं कुर्वीत सम्पादयेत्। अनात्मगोचरान् बहून् शब्दान्नानुध्यायान्न स्मरेत्, ध्यानेनाभिधानमप्युपलक्ष्यते नाभिदध्याद्वाऽन्यथा शब्दध्यानेन वाग्विग्लापनानुपपत्तेः। कुत इत्यत आह वाचो विग्लापनं हि तदिति। हि यस्मात् तदभिधानं अनेन स्मरणमप्युपलक्ष्यते वाच इति मनसोऽप्युपलक्षणं विग्लापयतीति विग्लापनं श्रमहेतुः। अयमभिप्रायः इतरशब्दानुसन्धानं मनसः श्रमो भवति तदभिधाने तु वाच इति॥ १०६॥

एवमैकाग्र्यप्रतिपादिकां श्रुतिमभिधाय स्मृतिमप्याह अनन्या इति। ये जनाः अनन्याः अहं ब्रह्मास्मीति ज्ञानेन मदभिन्नाः सन्तस्तथैव मां चिन्तयन्तः अखण्डानुसन्धानेन चिन्तनं कुर्वन्तः पर्युपासते परितः सर्वेष्वपि कालेषूपासते मद्रूपा एव वर्तन्ते नित्याभियुक्तानां सदा मन्निष्ठानां तेषामहमात्मत्वेनानुसन्धीयमानोऽहं योगक्षेममलब्धलाभलब्धपरिरक्षणरूपौ योगक्षेमौ वहामि सम्पादयामीत्यर्थः॥ १०७॥

उदाहृतयोः श्रुतिस्मृत्योस्तात्पर्यमाह इतीति। एवं श्रुतिस्मृती

विधत्ते विपरीताया भावनायाः क्षयाय हि ॥ १०८ ॥

यद् यथा वर्त्तते तस्य तत्त्वं हित्वान्यथात्वधीः ।
विपरीता भावना स्यात् पित्रादावरिधीर्यथा ॥ १०९ ॥

आत्मा देहादिभिन्नोऽयं मिथ्या चेदं जगत् तयोः ।
देहाद्यात्मत्वसत्यत्वधीर्विपर्य्ययभावना ॥ ११० ॥

तत्त्वभावनया नश्येत् सातो देहातिरिक्तताम् ।
आत्मनो भावयेत् तद्वन्मिथ्यात्वं जगतोऽनिशम् ॥ १११ ॥

किं मन्त्रजपवन्मूर्त्तिध्यानवद्वात्मभेदधीः ।
जगन्मिथ्यात्वधीश्चात्र व्यावर्त्त्या स्यादुतान्यथा ॥ ११२ ॥

---

विपरीतभावनानिवृत्तये आत्मनि सदा चित्तैकाग्र्यं प्रतिपादयन् इत्यर्थः ॥ १०८ ॥

ननु देहाद्यात्मत्वबुद्धेर्जगत्सत्यत्वबुद्धेश्च कुतो विपरीतभावनात्वम् इत्याशङ्क्य तल्लक्षणयोगादिति दर्शयितुं तस्या लक्षणमाह यद्यथेति । यद्वस्तु शुक्त्यादिरूपत्वं परित्यज्य अन्यथात्वधीरन्यथात्वस्य रजतादिरूपत्वस्य धीर्ज्ञानं विपरीतभावना स्यात् अतस्मिंस्तद्बुद्धिरिति यावत् । तत्र दृष्टान्तमाह पित्रादाविति ॥ १०९ ॥

उक्तलक्षणं प्रकृते योजयति आत्मेति । अयमात्मा देहादिभ्यो वस्तुतो भिन्न इदं जगच्च मिथ्या एवं सत्यपि तयोरात्मजगतोर्यथाक्रमं देहादिरूपत्वबुद्धिः सत्यत्वबुद्धिश्च या सा विपरीतभावनेत्यर्थः ॥ ११० ॥

पूर्वमैकाग्र्यात् सा निवर्तेत इति सामान्येनोक्तमर्थं विशेषाकारेणाह तत्त्वभावनयेति । सा देहाद्यात्मत्वजगत्सत्यत्वरूपा विपरीतभावना तत्त्वभावनया आत्मनो देहातिरिक्तत्वस्य जगतो मिथ्यात्वस्य च भावनया निरन्तरध्यानेन नश्येत् अत आत्मनो देहाद्यतिरिक्तत्वं देहादेर्जगतो मिथ्यात्वञ्च सदा भावयेदित्यर्थः ॥ १११ ॥

सदा भावयेदित्युक्तं तत्र जपादाविव नियमोऽस्ति न वेति

अन्यथेति विजानीहि दृष्टार्थत्वेन भुक्तिवत् ।
बुभुक्षुर्जपवत् भुङ्क्ते न कश्चित् नियतः क्वचित् ॥११३॥
अश्नाति वा न वाश्नाति भुङ्क्ते वा स्वेच्छयान्यथा ।
येन केन प्रकारेण क्षुधामपनिनीषति ॥ ११४ ॥
नियमेन जपं कुर्य्यादकृतौ प्रत्यवायतः ।
अन्यथाकरणेऽनर्थः स्वरवर्णविपर्य्ययात् ॥ ११५ ॥

---

पृच्छति किमिति । आत्मभेदधीः आत्मनो देहादिभ्यो विभिन्नत्वं जगतो मिथ्यात्वानुसन्धानञ्च मन्त्रजपदेवताध्यानादिवत् किं नियमेनानुष्ठातव्य उत लौकिकव्यवहारवन्नियममन्तरेणापि कर्त्तुं शक्यत इति ॥ ११२ ॥

दृष्टफलत्वाज्ज्ञाने नियमः कश्चिदस्तीत्याह अन्यथेतीति । अन्यथा नियमं विनेत्यर्थः । तत्र हेतुमाह दृष्टार्थत्वेनेति । तत्र दृष्टान्तमाह भुक्तिवदिति । दृष्टार्थेऽपि भोजने नियमाः श्रुतिस्मृत्योरुपलभ्यन्त इत्याशङ्क्याह बुभुक्षुरिति । क्षुदपनयनाय भोक्तुमिच्छन् पुरुषो जपं कुर्वाण इव न नियमेन भुङ्क्ते अपितु यथा क्षुद्बाधोपशान्तिः स्यात् तथा भोजनं करोतीत्यर्थः ॥ ११२ ॥

एतदेव प्रपञ्चयति अश्नातीति । अश्नाति वा नाश्ने इति कदाचित् भुङ्क्ते न वाश्नाति तत्किञ्चयति क्षुद्बाधाविकारकद्यूतादिचेष्टयाऽनश्नन्नेव कालं नयति अन्यथा वा तिष्ठन् गच्छन् शयानो वा स्वेच्छया भुङ्क्ते एवं येन केन प्रकारेण तात्कालिकीं क्षुधाम् अपनेतुमिच्छति । अयमभिसन्धिः क्षुधानिवृत्तिरूपदृष्टफलाय भोजनमेव कार्य्यं नियमास्तु परलोकफलेतर इति ॥ ११४ ॥

जपादौ भोजनाद्वैलक्षण्यं दर्शयति नियमेनेति । तत्र हेतुमाह अकृतौ प्रत्यवायत इति । अकृते नियमकरणे प्रत्यवायः अन्यथा करणे तु

श्रुत्वैव दुष्टबाधाश्चेद् विपरीता च भावना ।
जेया केनाप्युपायेन नास्त्यत्रानुष्ठितेः क्रमः ॥ ११६ ॥

उपायः पूर्वमेवोक्तस्तच्चिन्ताकथनादिकः ।
एतदेकपरत्वेऽपि निर्बन्धो ध्यानवन्न हि ॥ ११७ ॥

मूर्तिप्रत्ययसान्तत्यमन्यानन्तरितं धियः ।
ध्यानं तत्रातिनिर्बन्धो मनसश्चञ्चलात्मनः ॥ ११८ ॥

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।

न नास्तीत्याशङ्क्याह अन्यथेति । 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्' इत्युक्तत्वादिति भावः ॥ ११५ ॥

ननु सन्देहबाधाया दृष्टबाधहेतुत्वात् तन्निवृत्तये श्रवणनियमेनापि भोक्तव्यमेव विपरीतभावनायास्तु तथात्वाभावात् तन्निवृत्तिकं ध्यानमदृष्टफलाय नियमेनानुष्ठेयमित्याशङ्क्याह श्रुत्वेति । विपरीतभावनाया दु[illegible]हेतुत्वस्यानुभवसिद्धत्वादिति भावः ॥ ११६ ॥

तर्हि स उपायः प्रदर्शनीय इत्याशङ्क्य पूर्वमेव प्रदर्शित इत्याह उपाय इति । ननु तथापि प्राक्श्रुतत्वादिनियमो मा भूत् ध्यानवदितरैकपरत्वलक्षणैकाग्रतानिर्बन्धोऽस्त्वित्याशङ्क्याह एतदिति ॥ ११७ ॥

ननु ध्यानस्य ध्येयचिन्तामात्रात्मकत्वात् तत्र कः निर्बन्ध इत्याशङ्क्य ध्याने निर्बन्धं दर्शयितुं ध्यानस्वरूपं तावदाह मूर्तीति । धियो बुद्धेः सम्बन्धिनां मूर्तिप्रत्ययानां देवतादिमूर्तिगोचराणां प्रत्ययानां यत् सान्तत्यं [illegible] तदन्यप्रत्ययान्तरितमन्येन विजातीयप्रत्ययेनाव्यवहितं यत् ध्यानमित्युच्यते । एवं ध्यानस्वरूपमुक्त्वा तत्र निर्बन्धं दर्शयति तत्रेति । यद्वा पर्यटनशीलस्य [illegible] बन्धनं [illegible] इति भावः ॥ ११८ ॥

मनसश्चाञ्चल्यादौ गीतावाक्यमुपन्यस्यति चञ्चलमिति । प्रमाथि

तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ११९ ॥

अप्यब्धिपानान्महतः सुमेरून्मूलनादपि ।

अपि वह्न्यशनात् साधो विषमश्चित्तनिग्रहः ॥ १२० ॥

कथनादौ न निर्बन्धः शृङ्खलाबद्धदेहवत् ।

किन्त्वनन्तेतिहासाद्यैर्विनोदो नाट्यवद्धियः ॥ १२१ ॥

चिदेवात्मा जगन्मिथ्येत्यत्र पर्य्यवसानतः ।

निदिध्यासनविक्षेपो नेतिहासादिभिर्भवेत् ॥ १२२ ॥

---

प्रमथनशीलं पुरुषस्य व्याकुलत्वकारणं बलवत् समर्थमनिग्राह्यमित्यर्थः । दृढं सत्यपति या विषये लग्नं तत उद्धर्तुमशक्यमित्यर्थः । अतस्तस्य मनसो निग्रहो वायोर्निग्रह इव सुदुष्करः ॥ ११९ ॥

मनसो दुर्निग्रहत्वे वसिष्ठवाक्यमपि प्रमाणयति अप्यब्धिपानादिति ॥ १२० ॥

प्रकृते ततो वैषम्यं दर्शयति कथनादाविति । शृङ्खलाबद्धदेहस्य यथा निर्बन्धो न तथा कथनादावित्यर्थः । आदिशब्देन तच्चिन्तनादिकं गृह्यते न केवलं निर्बन्धाभावः प्रत्युत धियो विनोद इत्याह किन्त्विति । इतिहासः पूर्वेषां कथा आद्या येषां लौकिककथानुकूलयुक्तिदृष्टान्तप्रदर्शनादीनां ते तथा अनन्ताः असंख्याताः अनन्ताश्च ते इतिहासाद्याश्चेति अनन्तेतिहासाद्यास्तैर्धियो बुद्धेर्विनोदः क्रीडाविशेषो भवति । तत्र दृष्टान्तः नाट्यवदिति । तत्त्वकथाविरोधश्च नैवेत्यर्थः ॥ १२१ ॥

ननु कथादिभिरप्येतदेकपरत्वव्याघातः स्यादित्याशङ्क्याह चिदे-वेति । इतिहासादीनामात्मा चिद्रूपो न देहादिरूपो जगच्च मिथ्येत्यस्मिन्नर्थे पर्य्यवसानात् न तैरेतदेकपरत्वभङ्गोऽभिधेयस्य निदि-ध्यासनस्य विक्षेप इत्यर्थः ॥ १२२ ॥

कृषिवाणिज्यसेवादौ काव्यतर्कादिकेषु च ।
विक्षिप्यते प्रवृत्ता धीस्तैस्तत्त्वस्मृत्यसम्भवात् ॥१२३॥
अनुसन्धत्त एवात्र भोजनादौ प्रवर्त्तितुम् ।
शक्यतेऽत्यन्तविक्षेपाभावादाशु पुनः स्मृतेः ॥ १२४ ॥
तत्त्वविस्मृतिमात्रान्नानर्थः किन्तु विपर्ययात् ।
विपर्येतुं न कालोऽस्ति झटिति स्मरतः क्वचित्॥१२५॥
तत्त्वस्मृतेरवसरो नास्त्यन्याभ्यासशालिनः ।
प्रत्युताभ्यासघातित्वाद् बलात् तत्त्वमुपेक्ष्यते ॥ १२६ ॥
तमेवैकं विजानीत ह्यन्या वाचो विमुञ्चथ ।
इति श्रुतं तथाऽन्यत्र वाचो विग्लापनन्त्विति ॥ १२७ ॥

---

ननु तर्हि भोजनादीनामङ्गीकारे कृष्यादेरपि प्रसक्तिः स्यादित्याशङ्क्याह कृषीति ॥ १२३ ॥

कृष्यादीनां तत्त्वानुसन्धानविघातित्वेन त्याज्यत्वे भोजनादेरपि तथा स्यात् तदपि त्याज्यमित्याशङ्क्याह अनुसन्धत्त एवेति । कुत इत्यत आह शक्यत इति । विक्षेपाभावोऽपि कुत इत्यत आह आशु पुनः स्मृतेरिति ॥ १२४ ॥

ननु तदानीं विक्षेपाभावेऽपि तत्त्वविस्मृतिसद्भावात् पुरुषार्थहानिः स्यादित्याशङ्क्याह तत्त्वेति । कुतस्तर्ह्यनर्थ इत्यत आह किन्त्विति । [illegible] यदि विपर्ययोऽपि स्यादित्याशङ्क्याह विपर्येतुमिति ॥ १२५ ॥

ननु भोजनादिकं यथा तथैव तर्काद्यभ्यासप्रसक्तावपि तत्त्वस्मरणं किं न स्यादित्याशङ्क्याह तत्त्वस्मृतेरिति । न केवलं तत्त्वानुसन्धानावसराभाव एव किन्तु काव्यतर्काद्यभ्यासस्य तत्त्वाभ्यासविरोधित्वात् तदानीं स्मृतमपि तत्त्वं बलादुपेक्ष्यते इत्याह प्रत्युतेति ॥ १२६ ॥

तत्त्वानुसन्धानविरोधित्वेन शब्दजालस्य त्याज्यत्वे प्रमाणत्वेन 'तमे-

आहारादि त्यजन् नैव जीवेच्छास्त्रान्तरं त्यजन्।
किं न जीवसि येनैवं करोष्यत्र दुराग्रहम् ॥ १२८ ॥
जनकादेः कथं राज्यमिति चेद् दृढबोधतः।
तथा तवापि चेत् तर्कं पठ यद्वा कृषिं कुरु ॥ १२९ ॥
मिथ्यात्ववासनादार्ढ्ये प्रारब्धक्षयकाङ्क्षया।
अक्लिश्यन्तः प्रवर्त्तन्ते स्वस्वकर्म्मानुसारतः ॥ १३० ॥
अतिप्रसङ्गो माशङ्क्यः स्वकर्मवशवर्त्तिनाम्।
अस्तु वा केन शक्येत कर्म्म वारयितुं वद ॥ १३१ ॥

---

ऽैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" इति श्रुतिवाक्यमर्थतः पठति तमेवैकमिति। "नानुध्यायाद् बहून् शब्दान् वाचो विग्लापनं हि तत्" इत्येतदपि वाक्यं श्रूयत इत्याह तथान्यत्रेति ॥ १२७ ॥

ननु तस्य स्नानातिरिक्तमाहारादि यथा न त्यज्यते एवमितरशास्त्राद्यभ्यासोऽपि क्रियतामित्याग्रहं कुर्वाणं प्रत्याह आहारादीति ॥ १२८ ॥

ननु तर्हि जनकादीनां तत्त्वविदां कथं राज्यपरिपालनादौ प्रवृत्तिरिति शङ्कते जनकादेरिति। दृढापरोक्षज्ञानित्वात् तेषां सा न बाधिकेत्यभिप्रायेण परिहरति दृढेति। तर्हि ममापि दृढबोधोऽस्तीति वदन्तं प्रत्याह तथेति ॥ १२९ ॥

ननु तत्त्वविदः संसारासारतां जानन्तः कथं तत्र प्रवर्तिष्यन्त इत्याशङ्क्य प्रारब्धस्यावश्यम्भाविफलत्वात् भोगेन तत्क्षयाय प्रवृत्तिरित्याह मिथ्येति ॥ १३० ॥

तर्ह्यनाचारेऽपि प्रवृत्तिः स्यादित्याशङ्क्याह अतिप्रसङ्ग इति। प्रारब्धवशादेवातिप्रसङ्गोऽपि स्यादित्याशङ्क्याङ्गीकरोति अस्तु वेति ॥ १३१ ॥

ज्ञानिनोऽज्ञानिनश्चात्र समेऽप्यारब्धकर्मणि ।
न क्लेशो ज्ञानिनो धैर्य्यान्मूढः क्लिश्यत्यधैर्य्यतः ॥१३२॥
मार्गे गन्त्रोर्द्वयोः श्रान्तौ समायामप्यदूरताम् ।
जानन् धैर्य्यात् द्रुतं गच्छेदन्यस्तिष्ठति दीनधीः ॥१३३॥
साक्षात्कृतात्मधीः सम्यगविपर्य्ययबाधितः ।
किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत् ॥ १३४ ॥
जगन्मिथ्यात्वधीभावादाचिष्टौ काम्यकामुकौ ।
तयोरभावे सन्तापः शाम्येन्निःस्नेहदीपवत् ॥ १३५ ॥
गन्धर्व्वपत्तने किञ्चिन्नैन्द्रजालिकनिर्म्मितम् ।

ननु ज्ञान्यज्ञानिनोः प्रारब्धकर्मणि अवश्यभोक्तव्यतया समाने तयोः कुतो वैलक्षण्यमित्याशङ्क्याह ज्ञानिन इति ॥ १३२ ॥

तत्र दृष्टान्तमाह मार्ग इति ॥ १३३ ॥

इत्थमुपपादितमात्मानञ्चेद्विजानीयादिति मन्त्रस्य पूर्वार्द्धमनु-वदन् फलप्रदर्शनपरमुत्तरार्द्धम् अवतारयति साक्षात्कृतात्मधीरिति । सम्यक् साक्षात्कृतात्मेति साक्षात्कृत आत्मा यया सा साक्षात्कृतात्मा तादृशी धीर्यस्य स साक्षात्कृतात्मधीः । अविपर्य्ययबाधितः विपर्य्ययेण देहाद्यात्मत्वबुद्ध्या बाधितो न भवतीत्यविपर्य्ययबाधितः । उभयं हेतुगर्भितं विशेषणम् ॥ १३४ ॥

उक्तमन्त्रार्द्धस्य तात्पर्य्यमाह जगन्मिथ्यात्वधीभावादित्यादिना । काम्यश्च कामुकश्च काम्यकामुकौ तावाचिष्टौ । तद्विचारणे कारणमाह जगन्मिथ्यात्वधीभावादिति । ततः किमित्यत आह तयोरभाव इति । तयोः काम्यकामुकयोरभावे सन्तापः कामनानिमित्तकः कारणाभावात् निःस्नेहदीपवत् शाम्येदित्यर्थः ॥ १३५ ॥

काम्याभावात् कामनाभावः क्व दृष्ट इत्याशङ्क्याह गन्धर्व्वपत्तन

जानन् कामयते किन्तु जिहासति हसन्निदम् ॥१२६॥
आपातरमणीयेषु भोगेष्वेवं विचारवान् ।
नानुरज्यति किन्त्वेतान् दोषदृष्ट्या जिहासति ॥१२७॥
अर्थानामर्जने क्लेशस्तथैव परिरक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थान् क्लेशकारिणः ॥१२८॥
मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।
स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम्॥१२९॥
एवमादिषु शास्त्रेषु दोषाः सम्यक् प्रपञ्चिताः ।
विमृशन्ननिशं तानि कथं दुःखेषु मज्जति ॥ १४० ॥

---

इति । मायाविनिर्मिते पत्तने स्थितं वस्तु किञ्चिदपि इदमैन्द्रजालिकनिर्मितमिति जानन् न कामयते न केवलं कामनाभावः प्रत्युत इदमनृतमिति जानन् जिहासति परित्यक्तुमिच्छति ॥ १२६ ॥

दार्ष्टान्तिके योजयति आपातेति । एवम् आपातरमणीयेषु प्रतीतिमात्ररम्येषु भोगेषु भुज्यन्त इति भोगाः विषयाः स्रक्चन्दनवनितादयः तेषु एवं विचारवान् आपातरमणीयत्वानुसन्धानवान् नानुरज्यति नासक्तिं करोति किन्तु दोषदर्शनेन तान् परित्यक्तुमिच्छति ॥ १२७ ॥

के ते दोषा इत्यत आह अर्थानामिति ॥ १२८ ॥

एवं विषयाणां दुःखहेतुत्वं प्रदर्श्य अशोभनत्वमपि क्वचिद् दर्शयति मांसपाञ्चालिकायामिति । स्नायवः सिराः अस्थीनि प्रसिद्धानि ग्रन्थयो मांसनिचयरूपाः नितम्बस्तनादयः एतैः घटितायाः मांसपाञ्चालिकायाः पुत्तलिकायाः स्त्रियाः यन्त्रलोले यन्त्रवच्चलनशीले अङ्गपञ्जरे अङ्गान्येव पञ्जरं नीडं तस्मिन् शरीरे किं शोभनमस्ति न किमपीत्यर्थः ॥ १२९ ॥

एवमादिष्विति । आदिपदेन त्वङ्मांसरक्तवसाद्यपृथक् [illegible]

क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति।
मिष्टान्नध्वस्ततृड्जानन्नामूढस्तज्जिघत्सति ॥ १४१ ॥
प्रारब्धकर्मप्राबल्याद् भोगेष्विच्छा भवेद् यदि।
क्लिश्यन्नेव तदाप्येष भुङ्क्ते विष्टिगृहीतवत् ॥ १४२ ॥
भुञ्जानास्तानपि बुधाः श्रद्धावन्तः कुटुम्बिनः।
नाद्यापि कर्म नश्छिन्नमिति क्लिश्यन्ति सन्ततम् ॥१४३॥
नायं क्लेशोऽत्र संसारतापः किन्तु विरक्तता।
भ्रान्तिज्ञाननिदानो हि तापः सांसारिकः स्मृतः ॥१४४॥

---

विलोचने। समालोचय इत्यर्थः। किं तदा परिशुष्यतीत्येवमादयो दृष्टान्ते ॥ १४० ॥

विषयदोषदर्शने सति भोगेच्छाभावे युक्तिसहितं दृष्टान्तमाह क्षुधया पीड्यमानोऽपीति। अयममूढः विवेकी मिष्टान्नभोजनेन ध्वस्ता विनष्टा तृट् तृष्णा आकाङ्क्षा यस्य स तथोक्तः इदं विषमित्येवं जानन् तद् विषं न जिघत्सति नात्तुमिच्छतीत्यर्थः ॥ १४१ ॥

ननु प्रारब्धकर्मणः प्रबलत्वात् ज्ञानिनोऽपीच्छा भवेत् इत्याशङ्क्य इच्छायामपि सत्यां प्रीतिपुरःसरं न भुङ्क्ते इत्याह प्रारब्धकर्मप्राबल्यादिति ॥ १४२ ॥

कथमेतदवगम्यत इत्याशङ्क्य लोकदर्शनादित्याह भुञ्जानास्तानपि बुधा इति ॥ १४३ ॥

ननु तत्त्वविदां संसारनिमित्तकक्लेशोऽनुपपन्नः ज्ञानेनैवाज्ञाना-पादितत्वादित्याशङ्क्याह नायमिति अयं क्लेशो नाद्यापि कर्म नश्छिन्नमित्येव-मनुतापात्मकः संसारतापो न भवति किन्त्वयं संसारे विरक्तता चासक्ति-रहितता। तापकत्वाभावे युक्तिमाह भ्रान्तीति। हि यस्मात् कारणात् सांसारिकस्तापो भ्रान्तिज्ञाननिदानः भ्रान्तिज्ञानकारणकः स्मृतः पूर्वा-चार्यैः अयन्तु विवेकज्ञानमूलत्वात् न तथाविध इत्यर्थः ॥ १४४ ॥

विवेकेन परिक्लिश्यन्नल्पभोगेन तृप्यति ।
अन्यथानन्तभोगेऽपि नैव तृप्यति कर्हिचित् ॥ १४५ ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ १४६ ॥
परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ।
विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥ १४७ ॥
मनसो निगृहीतस्य लीलाभोगोऽल्पकोऽपि यः ।
तमेवालब्धविस्तारं क्लिष्टत्वाद् बहु मन्यते ॥ १४८ ॥

---

अयं क्लेशो विवेकमूलोऽविवेकमूलो वेति कुतोऽवगम्यते इत्याशङ्क्य कामनिवर्त्तकत्वाद् विवेकमूल इत्याह विवेकेनेति ॥ १४५ ॥

विवेकिन इवाविवेकिनोऽपि भोगेनैव तृप्तिः स्यात् अतो विवेकोऽप्रयोजक इत्याशङ्क्य भोगस्य तृप्तिहेतुत्वाभावप्रतिपादिकां स्मृतिं पठति न जातु काम इति ॥ १४६ ॥

विवेकपूर्वकस्य भोगस्य तृप्तिहेतुत्वमनुभवसिद्धमित्याह परिज्ञायोपभुक्तो हीति । अयं भोग एतावान् सर्वप्रयाससाध्य इत्येवमनुभवपूर्वकसेवितं तुष्टिहेतुर्भवत इत्यर्थः । ननु तृष्णाहेतोर्भोगस्य विवेकसाहचर्यमात्रेण कथं तुष्टिकरत्वमित्याशङ्क्य सहकारिविशेषवशात् विपरीतकार्यकरत्वं लोके दृष्टमित्याह विज्ञायेति । अयं चोर इति ज्ञात्वा तेन सह वर्त्तमानस्य पुरुषस्य चोरो न चोरतामेति किन्तु मित्रतामेतीत्यर्थः ॥ १४७ ॥

ननु कामनास्वभावत्वात् मनसः कथं अल्पेन भोगेन तृप्तिः स्यादित्याशङ्क्य निदिध्यासनेन निगृहीतस्यातथात्वात् भवत्येव तत्तृप्तिरित्याह मनसो निगृहीतस्येति । निगृहीतस्य योगाभ्यासेन वशीकृतस्य मनसोऽल्पकोऽपि अल्पोऽपि लीलाभोगो लीलानुभवो

बद्धमुक्तो महीपालो ग्राममात्रेण तुष्यति ।
परैर्न बद्धो नाक्रान्तो न राष्ट्रं बहु मन्यते ॥ १४९ ॥

विवेके जाग्रति सति दोषदर्शनलक्षणे ।
कथमारब्धकर्मापि भोगेच्छां जनयिष्यति ॥ १५० ॥

नैष दोषो यतोऽनेकविधं प्रारब्धमीक्ष्यते ।
इच्छानिच्छा परेच्छा च प्रारब्धं त्रिविधं स्मृतम् ॥१५१॥

अपथ्यसेविनश्चौरा राजदाररता अपि ।
जानन्त एव स्वानर्थमिच्छन्त्यारब्धकर्मतः ॥ १५२ ॥

न चात्रैतद् वारयितुमीश्वरेणापि शक्यते ।
यत ईश्वर एवाह गीतायामर्जुनं प्रति ॥ १५३ ॥

---

योऽपि सकलविस्तारमप्राप्तवानप्यं तमेव भोगं क्लिष्टत्वात् दोष-
युक्तत्वाद् बहु मन्यतेऽधिकत्वेन जानातीत्यर्थः ॥ १४८ ॥

निस्पृहीनस्य मनसः स्वल्पेनापि भोगेन तृप्तिर्भवतीत्यत्र दृष्टान्त-
माह बद्धमुक्तो महीपाल इति ॥ १४९ ॥

ननु प्रारब्धकर्मप्राबल्यात् भोगेच्छा भवेद् यदि इत्यत्र कर्म-
बलाद् इच्छा भवेदित्युक्तं तदनुपपन्नम् इच्छाविघातिनि विवेकज्ञाने सति
तदुत्पत्त्यसम्भवात् इति शङ्कते विवेके जाग्रति सतीति ॥ १५० ॥

दोषदर्शने सत्यपीच्छाजनक कर्मविकृति प्रारब्धस्य नानाप्रकार-
त्वादिति परिहरति नैष दोष इति । नानाप्रकारत्वमेव दर्शयति इच्छा-
निच्छेति । इच्छाजनकम्, अनिच्छया भोगप्रदं परेच्छया भोगप्रदं चेति
त्रिविधमित्यर्थः ॥ १५१ ॥

इच्छाप्रारब्धं दर्शयति अपथ्यसेविन इति ॥ १५२ ॥

अपथ्यसेवादाविच्छायाः प्रारब्धकार्यत्वं कुतोऽवगम्यते इत्याशङ्क्या-

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ १५४ ॥
अवश्यम्भाविभावानां प्रतीकारो भवेद् यदि ।
तदा दुःखैर्न लिप्येरन् नलरामयुधिष्ठिराः ॥ १५५ ॥
न चेश्वरत्वमीशस्य हीयते तावता यतः ।
अवश्यम्भाविताप्येषामीश्वरेणैव निर्मिता ॥ १५६ ॥
प्रश्नोत्तराभ्यामेवैतद् गम्यतेऽर्जुनकृष्णयोः ।
अनिच्छापूर्वकञ्चास्ति प्रारब्धमिति तच्छृणु ॥ १५७ ॥

---

परिहार्यत्वादित्यभिप्रेत्याह न चास्तैतद्वारयितुमिति। अस्मिन् लोके अपथ्यादि इच्छन्नीत्येतत् कुत इत्यत आह ईश्वर एवाहेति ॥ १५३ ॥

गीतावाक्यं पठति सदृशं चेष्टते स्वस्या इति। विवेकज्ञानवानपि पुरुषः स्वस्याः स्वकीयायाः प्रकृतेः सदृशमनुरूपं चेष्टते, प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः किमुत मूर्खः, तस्मात् प्रकृतिं यान्ति भूतानि निग्रहः प्रवृत्तिनिवृत्त्योर्निरोधो मया अन्येन वा कृतः किं करिष्यति न किमपीत्यर्थः ॥ १५४ ॥

प्रारब्धस्यापरिहार्यत्वे वचनान्तरसम्मतिमाह अवश्यमिति, अवश्यम्भाविभावानां दुःखादीनामित्यर्थः ॥ १५५ ॥

प्रारब्धस्यापरिहार्यत्वे तत्परिहारासमर्थस्य ईश्वरस्यानीश्वरत्वप्रसङ्ग इत्याशङ्क्याह न चेश्वरत्वमिति। कुत इत्यत आह यत इति। यतः कारणात् एषां दुःखादीनाम् अवश्यम्भाविताऽपि ईश्वरेणैव निर्मिता अतो नानीश्वरत्वप्रसङ्ग इत्यर्थः ॥ १५६ ॥

एवं प्रारब्धम् इच्छाप्रारब्धमभिधायानिच्छाप्रारब्धं वक्तुमारभते प्रश्नोत्तराभ्यामिति। अनिच्छापूर्वकं च प्रारब्धमस्ति एतदर्जुनकृष्णयोः प्रश्नोत्तराभ्यामेव गम्यते ज्ञायते इति योजना, तदभिधानाय प्रारब्धमनिच्छापूर्वकमस्तीति तच्छृणु ॥ १५७ ॥

अथ केन प्रयुक्तोऽयं पापञ्चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ १५८ ॥
काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ १५९ ॥
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥१६०॥
नानिच्छन्तो न चेच्छन्तः परदाक्षिण्यसंयुताः।

---

तत्र अर्जुनस्य प्रश्नं तावद् दर्शयति अथ केनेति। हे वार्ष्णेय वृष्णिवंशोत्पन्न अयं पुरुषः केन प्रयुक्तः प्रेरितः सन् अनिच्छन्नपि इच्छामकुर्वन्नपि राज्ञा बलान्नियोजित इव पापञ्चरति आचरतीति ॥१५८॥

तस्योत्तरमाह काम एष इति। एष पुरुषप्रवर्तकः रजोगुण-समुद्भवः रजोगुणादुत्पन्नत्वाच्च स रजोगुणसमुद्भवः काम एव प्रतिहतोऽयं कामः कदाचित् क्रोधरूपेणापि परिणमते ततः क्रोधः, स पुनः कीदृशः महाशनः महदशनं विषयजातं यस्य स महाशनः महापाप्मा महतः पापस्य हेतुत्वादुपचारान्महापाप्मत्वमस्य, अत इह संसारे एनं कामं क्रोधञ्च एव वैरिणं विद्धि। अयमभिप्रायः प्रारब्धाद्युद्भूतरजोगुणकार्ययोः कामक्रोधयोरन्तरङ्गत्वेन पुरुषप्रवर्तकत्वं न प्रारब्धाया इति ॥ १५९ ॥

अधुना कामक्रोधयोरिव पुरुषप्रवर्तकत्वमुपलभ्यते नानिच्छाप्रारब्धस्येत्याशङ्क्य तस्यैव प्रवर्तकत्वप्रतिपादकं तद् वाक्यं पठति स्वभावजेनेति। हे कौन्तेय! स्वेनैवात्मार्जितेन कृत एव स्वकीयेन प्रारब्धेन कर्मणा निबद्धः सन् यत् कर्तुं नेच्छसि तदपि मोहादविवेकेन अवशः परवशः करिष्यसीति, अतोऽनिच्छाप्रारब्धस्यापि प्रवर्तकत्वमस्तीति भावः ॥ १६० ॥

इदानीं परेच्छाप्रारब्धमुदाहरति नानिच्छन्त इति। अनि-

सुखदुःखे भजन्त्येतत् परेच्छापूर्वकर्म्म हि ॥ १६१ ॥
कथं तर्हि किमिच्छन्नित्येवमिच्छा निषिध्यते ।
नेच्छानिषेधः किन्त्विच्छाबाधो भर्जितबीजवत् ॥१६२॥
भर्जितानि तु बीजानि सन्त्यकार्य्यकराणि च ।
विद्वदिच्छा यथेष्टव्या सत्त्वबोधात् न कार्य्यकृत् ॥१६३॥
दग्धबीजमरोहेऽपि भक्षणायोपयुज्यते ।
विद्वदिच्छाप्यल्पभोगं कुर्य्यान्न व्यसनं बहु ॥ १६४ ॥

---

अनिच्छन्तोऽपि न भवन्ति इच्छन्तोऽपि न भवन्ति किन्तु परदाक्षिण्यसंयुताः सन्तस्तत्प्रीत्यर्थमेव सुखदुःखेऽनुभवन्ति अत एतत् सुखादिभोगहेतुभूत परेच्छापूर्वकं प्रारब्धं हि प्रसिद्धमित्यर्थः । अत एव दोषदर्शने सत्यपि प्रारब्धस्यापरिहार्य्यत्वात् तस्येच्छाजनकत्वं न निवारयितुं शक्नोतीति भावः ॥ १६१ ॥

ननु तत्त्वविदोऽपीच्छाङ्गीकारे किमिच्छन्निति श्रुतिविरोध इति शङ्कते कथं तर्हीति । किमिच्छन्नित्यनेन वाक्येन कथमिच्छाभावो वर्णित इत्यर्थः । अनेन नेच्छाभावोऽभिधीयते किन्तु सत्या अपि तस्याः सामर्थ्यं प्रवृत्तिजनकत्वं नास्तीति बाध्यते इति परिहरति नेच्छानिषेध इति । स्वरूपेण सत्या अपि तस्याः सामर्थ्यराहित्ये दृष्टान्तमाह भर्जितबीजवदिति ॥ १६२ ॥

उक्तमेवार्थं प्रपञ्चयति भर्जितानि त्विति । यथा भर्जितानि बीजानि स्वरूपेण विद्यमानान्यपि नाङ्कुरादिकार्य्यकराणि भवन्ति तथा विद्वदिच्छा स्वयं विद्यमानापि दृश्यमानपदार्थस्यासत्त्वज्ञानेन बाधितत्वात् न व्यसनादिकार्य्यक्षमेत्यर्थः ॥ १६२ ॥

ननु तर्हि विदुष इच्छैव नाङ्गीकर्त्तव्या फलाभावादित्याशङ्क्य फलाभावो विद्वद्भोगजनकत्वपक्षेऽवादीति दृष्टान्तमाह दग्धेति ।

भोगेन चरितार्थत्वात् प्रारब्धं कर्म हीयते ।
भोक्तव्यसत्यताभ्रान्त्या व्यसनं तत्र जायते ॥ १६५ ॥
मा विनश्यत्वयं भोगो वर्द्धतामुत्तरोत्तरम् ।
मा विघ्नाः प्रतिबध्नन्तु धन्योऽस्मास्मादिति भ्रमः ॥१६६॥
यदभावि न तद् भावि भवि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयं बोधो भ्रमनिवर्त्तकः ॥ १६७ ॥
समेऽपि भोगे व्यसनं भ्रान्तो गच्छेन्न बुद्धिमान् ।

इत्थं भर्जितमिति यावत् व्यसनं विपदादिरूपं बहुविधं व्यसनं विपदि भ्रंशे दोषे कामजकोपजे इत्यभिधानात् ॥ १६४ ॥

ननु तर्हि कर्मैव भोगद्वारा व्यसनमपि जनयेदित्याशङ्क्याह भोगेनेति प्रारब्धकर्मणो भोगमात्रहेतुत्वात् न व्यसनजनकत्वमित्यर्थः । कुतस्तर्हि व्यसनस्य जन्मेत्यत आह भोक्तव्यसत्यताभ्रान्त्येति । तत्र तस्मिन् विषये ॥ १६५ ॥

व्यसनहेतुं भ्रमं दर्शयति मा विनश्यत्वयमिति । अयं भोगो मा विनश्यतु एव उत्तरोत्तरम् वर्द्धतां विघ्नाश्चैव मा प्रतिबध्नन्तु अस्य प्रतिबन्धं मा कुर्वन्तु अस्मादेव भोगादहं धन्यः कृतार्थोऽस्मीति एवंरूपो भ्रमो भवति ततश्च व्यसनमित्यर्थः ॥ १६६ ॥

प्रकृतस्य परिहारोपायमाह यदभावीति । यद्वस्तु भवितुमयोग्यं तद् अवश्येन भवितुं योग्यं चेन्न तदन्यथा भवेदिति [illegible] इदं मे श्रेयः कदा भविष्यति इदमनिष्टं कदा निवर्तिष्यते इत्येवमादि चिन्तैव विषम् [illegible] नाशहेतुत्वात् विषम् इदं चिन्तादि [illegible] एवंभूतो यो बोधः सोऽयं भ्रमनिवर्त्तकः [illegible] भ्रमस्य निवर्त्तक इत्यर्थः ॥ १६७ ॥

ननु विद्वदविदुषोरुभयोरपि भोगित्वाविशेषे एकस्य व्यसनम् अपरस्य

अप्रसक्तार्थस्य सङ्कल्पात् भ्रान्तस्य व्यसनं बहु ॥ १६८ ॥

मायामयत्वं भोग्यस्य बुद्ध्वास्थामुपसंहरन् ।

भुञ्जानोऽपि न सङ्कल्पं कुरुते व्यसनं कुतः ॥ १६९ ॥

स्वप्नेन्द्रजालसदृशमचिन्त्यरचनात्मकम् ।

दृष्टनष्टं जगत् पश्यन् कथं तत्रानुरज्यति ॥ १७० ॥

स्वस्वप्नमापरोक्ष्येण दृष्ट्वा पश्यन् स्वजागरम् ।

चिन्तयेदप्रमत्तः सन्नुभावनुदिनं मुहुः ॥ १७१ ॥

चिरं तयोः सर्वसाम्यमनुसन्धाय जागरे ।

सत्यत्वबुद्धिं संत्यज्य नानुरज्यति पूर्ववत् ॥ १७२ ॥

---

ननु तस्यैतत् कुत इत्याशङ्क्य विपरीतज्ञानसत्त्वासत्त्वाभ्यां तद्विशिष्टिरित्याह धर्मेऽपीति । बुद्धिमान् ज्ञानवान् ज्ञानीत्यर्थः । भ्रान्तेः कथं व्यसनहेतुत्वमित्यत आह अप्रसक्तार्थस्येति ॥ १६८ ॥

विवेकिनस्तदभावं दर्शयति मायामयत्वमिति ॥ १६९ ॥

ननु मायामयत्वेऽपि भोगस्य तदानीन्तनसुखहेतुत्वात् कुत आस्थोपसंहार इत्याशङ्क्य सङ्कल्पदोषदर्शनात् इत्याह स्वप्नेन्द्रजाल-सदृशमिति ॥ १७० ॥

ननु स्वप्नेन्द्रजालसादृश्यादिज्ञाने सति आसक्त्यभावो भवेत् तदेव कुतो जायते इत्याशङ्क्य तज्ज्ञानोपायमाह स्वस्वप्नमिति । स्वकीयस्वप्नमपरोक्षतया दृष्ट्वा स्वकीयं जागरमनुभवन् स्वप्नजागरावुभावपि अप्रमत्तः सन् मुहुश्चिन्तयेत् स्वप्नवन्मिथ्यायं जागर इति ॥ १७१ ॥

चिरं तयोरिति । एवं तयोः सर्वसाम्यं तात्कालिकभोगहेतुत्वपरिच्छिन्नविरसत्वविनाशित्वादिलक्षणं चिरमनुसन्धाय जागरितेऽपि सत्यत्व-बुद्धिं परित्यज्य जाग्रद्दुःखसुखेऽपि पूर्ववत् अनात्मज्ञानदशायामिव नानुरज्यति अनुरक्तो न भवतीत्यर्थः ॥ १७२ ॥

इन्द्रजालमिदं द्वैतमचिन्त्यरचनात्वतः ।
इत्यविस्मरतो हानिः का वा प्रारब्धभोगतः ॥ १७३ ॥
निर्बन्धस्तत्त्वविद्याया इन्द्रजालत्वसंस्मृतौ ।
प्रारब्धस्याग्रहो भोगे जीवस्य सुखदुःखयोः ॥ १७४ ॥
विद्यारब्धे विरुध्येते न भिन्नविषयत्वतः ।
जानद्भिरप्यैन्द्रजालो विनोदो दृश्यते खलु ॥ १७५ ॥
जगत्सत्यत्वमापाद्य प्रारब्धं भोजयेद् यदि ।

---

ननु प्रपञ्चगोचरस्य मिथ्यात्वज्ञानस्य विषयसत्यत्वोपजीविनो भोगस्य परस्परविरोधात् मिथ्यात्वज्ञाने सति कथं भोगसिद्धिरित्याशङ्क्य भोगस्य विषयसत्यत्वापेक्षाभावात् न विरोध इति परिहरति इन्द्रजालमिति इदं द्वैतं भोग्यजातम् अचिन्त्यरचनात्वात् इन्द्रजालवन्मिथ्या इति युक्त्या अनुसन्धायाविस्मरतो विदुषः प्रारब्धभोगतः प्रारब्धकर्मफलयोः सुखदुःखयोरनुभवेन मिथ्यात्वानुसन्धानस्य का हानिः वा यद्वा मिथ्यात्वानुसन्धानेन वा भोगस्य का हानिर्भिन्नविषयत्वादिति भावः ॥ १७३ ॥

भिन्नविषयत्वमेव दर्शयति निर्बन्ध इति । तत्त्वविद्याया जगत्तत्त्वगोचरस्य ज्ञानस्य इन्द्रजालवज्जगतो मिथ्यात्वानुसन्धाने निर्बन्धः न तु भोगापलापे प्रारब्धकर्मणो जीवस्य सुखदुःखयोः प्रदाने आग्रहः न तु भोग्यस्य सत्यत्वापादने इति भावः ॥ १७४ ॥

एवं विभिन्नविषयत्वं प्रदर्श्य प्रयोजनमाह विद्यारब्धे इति । विद्याप्रारब्धकर्मणी परस्परं न विरुध्येते विभिन्नविषयत्वात् सम्प्रतिपन्नरूपरसज्ञानवदित्यर्थः । भोग्यमिथ्यात्वज्ञानं भोगबाधकं न भवतीत्यत्र दृष्टान्तमाह जानद्भिरिति । ऐन्द्रजालो विनोद इन्द्रजालसम्बन्धिचमत्कारविशेषः जानद्भिरपीन्द्रजालत्वं जानद्भिरप्यवलोक्यते इति प्रसिद्धमित्यर्थः ॥ १७५ ॥

ननु विद्यारब्धकर्मणोर्विरोधोऽस्तीति वदन् वादी प्रष्टव्यः किं प्रारब्धं

तदा विरोधि विद्याया भोगमात्रान्न सत्यता ॥ १७६ ॥
अन्यूनो जायते भोगः कल्पितैः स्वाप्नवस्तुभिः ।
जाग्रत्वस्तुभिरप्येवमसत्यैर्भोग इष्यताम् ॥ १७७ ॥
यदि विद्यापह्नुवीत जगत्प्रारब्धघातिनी ।
तदा स्यान्न तु मायात्वबोधेन तदपह्नवः ॥ १७८ ॥
अनपह्नुत्य लोकास्तदिन्द्रजालमिदन्त्विति ।

कर्म विद्याविरोधीत्युच्यते उत विद्या प्रारब्धकर्मविरोधिनीति नाद्य इत्याह जगत्सत्यत्वमिति । प्रारब्धं कर्म जगतो भोग्यजातस्य सत्यत्वमबाध्यत्वमापाद्य तस्माद्यदि भोजयेज्जीवस्य सुखदुःखे दद्यात् तदा विद्याविषयस्य मिथ्यात्वस्यापहारात् विद्याया विरोधि स्यात् न च तथा करोति किन्तु भोगमेव प्रयच्छति अतो न विद्याविरोधि प्रारब्धमिति भावः । भोगबलादेव भोग्यस्य सत्यत्वमपि स्यादित्याशङ्क्याह भोगमात्रादिति । विमतं भोग्यं सत्यं भोगहेतुत्वादित्यत्र दृष्टान्ताभाव इति भावः ॥ १७६ ॥

ननु मिथ्यापदार्थैर्भोगो भवति इत्यत्रापि दृष्टान्तो नास्तीत्याशङ्क्याह अन्यून इति ॥ १७७ ॥

नापि द्वितीय इत्याह यदि विद्यापह्नुवीतेति । विद्या यदि जगद्भोग्यजातमपह्नुवीत नेदं रजतमिति निषेधज्ञानवत् प्रतीयमानस्य भोग्यस्य स्वरूपं विलोपयेत् तदा प्रारब्धकर्मभोग्यस्य सुखदुःखानुभवसंसाधनापहारेण प्रारब्धकर्मविघातिनी स्यात् न च तथा करोति किन्तु मिथ्यात्वमेव बोधयति अतो न प्रारब्धकर्मविरोधिनीति भावः । ननु मिथ्यात्वबोधनादेव स्वरूपमपि विलोपयेदित्याशङ्क्याह मायात्वेति । इन्द्रजालादौ स्वरूपविलोपमन्तरेणापि मिथ्यात्वप्रदर्शनादिति भावः ॥ १७८ ॥

एतदेव प्रपञ्चयति अनपह्नुत्येति । लोका जगदिन्द्रजालस्वरूप-

जानन्त्येवानपह्नुत्य भोगं मायात्वधीस्तथा ॥ १७९ ॥
यत्र त्वस्य जगत् सात्मा पश्येत् कस्तत्र केन किम् ।
किं जिघ्रेत् किं वदेद् वेति श्रुतौ तु बहु घोषितम् ॥ १८० ॥
तेन द्वैतमपह्नुत्य विद्योदेति न चान्यथा ।
तथा च विदुषो भोगः कथं स्यादिति चेत् शृणु ॥ १८१ ॥
सुषुप्तिविषया मुक्तिविषया वा श्रुतिस्त्विति ।
उक्तं स्वाप्ययसम्पत्त्योरिति सूत्रे ह्यतिस्फुटम् ॥ १८२ ॥

---

अनपह्नुत्य अनिरस्य इदमिन्द्रजालमिति जानन्त्येव यथा तथा भोगं भोग्यमनपह्नुत्य अविलाप्य मायात्वधीर्जगन्मिथ्यात्वज्ञानं भवतीत्यर्थः ॥ १७९ ॥

यत्र त्वस्य सर्वमात्मैवाभूत् केन कं पश्येत् इत्यादि श्रुतिर्द्वैतदर्शनस्याभावं बोधयन्ती विद्योत्पद्यमाना जगद् विलापयत्येव एवं सति विदुषो भोगः कथं स्यादिति श्रुत्यर्थकथनेन शङ्कते श्लोकद्वयेन यत्र त्वस्येति । यत्र तु यस्यां विद्यावस्थायां तत्त्वज्ञं जगदस्य विदुष आत्मैवाभूत् इदं सर्वं यदयमात्मेति ज्ञानेन स्वरूपमेव भवति तत्र तस्यां दशायां को द्रष्टा केन साधनेन चक्षुषा किं वस्तु रूपजातं पश्येत् एवं घ्राणलक्षणेन किं कुसुमादिकं जिघ्रेत् किं वाक्यं केन वागिन्द्रियेण वदेत् एवमितरेन्द्रियव्यापाराभावद्योतनाय वाशब्दः इत्येवं प्रकारेण श्रुतौ बहु वारमभिहितमित्यर्थः ॥ १८० ॥

ततः किमित्यत आह तेन द्वैतमिति । स्वाप्ययसम्पत्त्योरन्यतरा-पेक्षमाविष्कृतं [illegible] यत्र त्वस्येत्युदाहृताया श्रुतेः सुषुप्ति-मोक्षयोरन्यतरविषयत्वेन ज्ञानकालत्वाभावात् न विद्यया जगदपह्नव इति परिहरति सुषुप्तीति ॥ १८१ ॥

सुषुप्तीति । स्वाप्ययः सुषुप्तिः सम्पत्तिर्मुक्तिरित्यर्थः ॥ १८२ ॥

अन्यथा याज्ञवल्क्यादेराचार्य्यत्वं न सम्भवेत् ।
द्वैतदृष्टावविद्वत्ता द्वैतादृष्टौ न वाग्वदेत् ॥ १८३ ॥
निर्विकल्पसमाधौ तु द्वैतादर्शनहेतुतः ।
सैवापरोक्षविद्येति चेत् सुषुप्तिस्तथा न किम् ॥ १८४ ॥
आत्मतत्त्वं न जानाति सुप्तौ यदि तदा त्वया ।
आत्मधीरेव विद्येति वाच्यं न द्वैतविस्मृतिः ॥ १८५ ॥
उभयं मिलितं विद्या यदि तर्हि घटादयः ।
अर्द्धविद्याभाजिनः स्युः सकलद्वैतविस्मृतेः ॥ १८६ ॥

---

अस्याः श्रुतेः सुषुप्त्यादिविषयत्वानङ्गीकारे बाधकमाह अन्यथा याज्ञवल्क्यादेरिति । तत्रोपपत्तिमाह द्वैतदृष्टाविति । याज्ञवल्क्यादिर्यदि द्वैतं पश्येत् तर्हि तदद्वैतज्ञानाभावादनाचार्य्यो भवेत् अथ द्वैतं न पश्येत् बोध्यशिष्याद्यनुपलम्भात् आचार्य्यवाक्यं शिष्यं प्रतिबोधनाय न प्रवर्त्तेत अतो विद्यासम्प्रदायोच्छेदप्रसङ्ग इति भावः ॥१८३॥

ननु याज्ञवल्क्यादीनामाचार्य्यदशायां विद्यमानस्य ज्ञानस्य विद्यात्वमस्त्येव तथापि तस्य नापरोक्षविद्यात्वं द्वैतप्रतीतिसद्भावात् निर्विकल्पसमाधौ तु द्वैतदर्शनाभावात् सैवापरोक्षविद्येति शङ्कते निर्विकल्पसमाधौ त्विति । द्वैताप्रतीतेरतिप्रसङ्गापादकत्वात् नैवमिति परिहरति सुषुप्तिस्तथा न किमिति ॥ १८४ ॥

अतिप्रसङ्गपरिहारं शङ्कते आत्मतत्त्वं न जानातीति । सुषुप्तौ द्वैतदर्शनाभावेऽपि आत्मगोचरज्ञानाभावात् न विद्यात्वं तस्या इत्यर्थः । तर्हि प्राप्ताप्राप्तविवेकेन ज्ञानस्यैव विद्यात्वं न द्वैतदर्शनाभावस्येत्याह तदा त्वयेति ॥ १८५ ॥

ननु द्वैतादर्शनात्मज्ञानयोरुभयोर्मिलितयोरेव विद्यात्वं न एकैकस्येति शङ्कते उभयमिति । द्वैतविस्मृतेरपि विद्यांशत्वाङ्गीकारे अति-

मशकध्वनिमुख्यानां विक्षेपाणां बहुत्वतः ।
तत्त्वविद्या तथा न स्यात् घटादीनां यथा दृढा ॥१८७॥
आत्मधीरेव विद्येति यदि तर्हि सुखी भव ।
दुष्टचित्तं निरुन्ध्याच्चेन्निरुन्धि त्वं यथासुखम् ॥१८८॥
तदिष्टमिष्टव्यमायामयत्वस्य समीक्षणात् ।
इच्छन्नप्यज्ञवन्नेच्छेत् किमिच्छन्निति हि श्रुतम् ॥१८९॥
रागो लिङ्गमबोधस्य सन्तु रागादयो बुधे ।
इति शास्त्रद्वयं सार्थमेवं सत्यविरोधतः ॥ १९० ॥

---

त्याप्यद्वैतविद्यात्वप्रसङ्ग इति परिहरति तर्हीति । तत्रोपपत्तिमाह एकत्वद्वैतविस्मृतेरिति ॥ १८६ ॥

यद्यप्येवं मते समाधिमतां पुरुषाणामद्वैतविद्यावत्त्वमपि न स्यादिति दोषप्रसङ्गमाह मशकध्वनिमुख्यानामिति । घटादीनां दृढ द्वैतविस्मरणं इव तथा तव समाधौ द्वैतविस्मरणं न सम्भवति मशकध्वन्यादीनामनेकेषां विक्षेपाणां सम्भवादिति भावः ॥ १८७ ॥

नन्वात्मज्ञानस्यैव विद्यात्वं न द्वैतविस्मृतेरिति शङ्कते आत्मधीरेवेति । तद्वादिनमिष्टमभ्युपगमेनाशीर्वादयति तर्हि सुखीभवेति । ननु आत्मधीरेव विद्या सा न दुष्टचित्ते सम्भवति अतश्चित्तदोषपरिहाराय चित्तवृत्तिनिरोधः कार्य इति यद्यभिमन्यसे दुष्टचित्तमिति । तदङ्गीकरोति निरुन्धि त्वमिति ॥ १८८ ॥

तदिष्टमिति । अस्माकमपीति शेषः । कुत इत्यत आह इष्टव्यमायामयत्वस्येति । चित्तदोषोपशमे सति वर्धितात्मज्ञानाय इष्यमाणं जगन्मायामयत्वं सम्यगीक्ष्यते अतः तत् इष्टमित्यर्थः । एवं विविदिषुं मन्वानोऽभिप्रेतमर्थमुपपादयति इच्छन्नप्यज्ञवदिति । इच्छन्नपि अज्ञवन्नेच्छेत् अतः किमिच्छन्निति श्रुतमिति योजना ॥ १८९ ॥

ननु [illegible] रागो लिङ्गमिति । रागो लिङ्ग-

जगन्मिथ्यात्ववत् स्वात्मासङ्गत्वस्य समीक्षणात् ।
कस्य कामायेति वचो भोक्त्रभावविवक्षया ॥ १९१ ॥
पतिजायादिकं सर्वं तत्तद्भोगाय नेच्छति ।
किन्त्वात्मभोगार्थमिति श्रुतावुद्घोषितं बहु ॥ १९२ ॥
किं कूटस्थश्चिदाभासोऽथ वा किमुभयात्मकः ।
भोक्ता तत्र न कूटस्थोऽसङ्गत्वात् भोक्तृतां व्रजेत् ॥१९३॥

---

प्रबोधस्य चित्तव्यायामभूमिषु । कुतः स्वादुफलता तस्य यस्याग्निः कोटरे तरोः । इति तत्त्वविदो रागनिषेधपरं शास्त्रम् । शास्त्रार्थस्य समाप्तत्वान्मुक्तिः स्यात् तावता मुनेः । रागादयः सन्तु कामं न तद्भावोऽपराध्यते इति तस्यैव रागाङ्गीकारपरञ्च शास्त्रम् एवं सति तत्त्वविदो दृढरागाभावे सति शास्त्रद्वयं सार्थमर्थवद् भवति अविरोधतः रागनिषेधपरस्य शास्त्रस्य दृढरागविषयत्वात् तदभ्युपगमपरस्य रागाभासविषयत्वादिति भावः ॥ १९० ॥

एवं किमिच्छन् इत्यंशस्याभिप्रायमुपवर्ण्य कस्य कामायेत्यंशस्याभिप्रायमाह जगन्मिथ्यात्ववदिति । यथा जगन्मिथ्यात्वबोधेन बाध्यबाधकाभावविवक्षया किमिच्छन्नित्युक्तं एवमात्मनोऽसङ्गत्वबोधेन चात्मनो भोक्त्रभावविवक्षया कस्य कामायेति श्रुत्यभिहितमित्यर्थः ॥ १९१ ॥

नन्वात्मनः भोक्तृत्वनिषेधस्तत्प्रसक्तिपूर्वको वक्तव्यः सा तु न विद्यतेऽसङ्गत्वादात्मन इत्याशङ्क्य तस्याः स्वानुभवसिद्धत्वात् नैवमित्यभिप्रेत्य तदनुवादिकां श्रुतिमर्थतोऽनुक्रामति पतिजायादिकमिति । न वा अरे पत्युः कामाय पतिः प्रियो भवतीत्यारभ्य आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यन्तेन वाक्यसन्दर्भेण पतिजायादिप्रपञ्चस्यात्मभोगसाधनत्वं प्रतिपाद्यते तत आत्मनो भोक्तृत्वप्रसक्तिरित्यर्थः ॥ १९२ ॥

इदानीमात्मनो भोक्तृत्वं प्रदर्श्य तदपवादाय भोक्तारं विकल्पयति

सुखदुःखाभिमानाख्यो विकारो भोग उच्यते ।
कूटस्थश्च विकारी चेत्येतन्न व्याहतं कथम् ॥ १९४ ॥

विकारिबुद्ध्यधीनत्वादाभासे विकृतावपि ।
निरधिष्ठानविभ्रान्तिः केवला नहि तिष्ठति ॥ १९५ ॥

उभयात्मक एवातो लोके भोक्ता निगद्यते ।
तादृगात्मानमारभ्य कूटस्थः शेषितः श्रुतौ ॥ १९६ ॥

---

किमिति । किं कूटस्थस्य भोक्तृत्वम् उत चिदाभासस्य किंवोभयात्मकस्येति विकल्पार्थः । तत्र प्रथमं प्रत्याह न कूटस्थ इति ॥ १९३ ॥

अस्तु कूटस्थस्य भोक्तृत्वमस्तु को दोष इत्याशङ्क्याह सुखदुःखाभिमानाख्य इति । सुखित्वदुःखित्वाभिमानलक्षणो विकारो भोगः सोऽसङ्गस्य न युज्यते कूटस्थत्वविकारित्वयोरेकत्र समावेशायोगादित्यर्थः ॥ १९४ ॥

ननु तर्हि विकारिणश्चिदाभासस्य भोक्तृत्वं स्यादित्याशङ्क्य विकारित्वेऽपि निरधिष्ठानस्य तस्यैवासिद्धेर्नैवमिति परिहरति विकारिबुद्ध्यधीनत्वादिति । चिदाभासस्य विकारिबुद्ध्यधीनत्वात् तस्मिन् विकारे सत्यपि तस्यारोपितस्यारोपितस्वरूपस्याधिष्ठानभूतं कूटस्थं विहाय स्वातन्त्र्येणावस्थानासम्भवात् केवलचिदाभासस्यापि भोक्तृत्वं न सम्भवतीति भावः ॥ १९५ ॥

तस्मात् तृतीयः पक्षः परिशिष्यत इत्याह उभयात्मक एवेति । अत एकैकस्य भोक्तृत्वं न सम्भवति अत उभयात्मकः साधिष्ठानचिदाभास एव लोके व्यवहारदशायां भोक्तृत्वमभिधीयते परमार्थतस्तु उभयात्मकत्वमेव न घटत इति भावः । न चक्षुषो ग्राह्यं पुरुष इत्यादावचक्षुष्ट्वेन योऽयं विज्ञानमयः प्राणेष्वित्यादौ बुद्धिवाचित्वस्यापि तद्वशादुभयात्मकं भोक्तृस्वरूपमपि वाक्यादित्वमेव आह लौकिकव्यवहारमात्रविवक्षयाप्युक्त्वा ततोऽन्यं तात्पर्याभावाच्छेषितमित्याह

आत्मा कतम इत्युक्ते याज्ञवल्क्यो विबोधयन्।
विज्ञानमयमारभ्यासङ्गं तं पर्यशेषयत् ॥ १९७ ॥
कोऽयमात्मेत्येवमादौ सर्वत्रात्मविचारतः।
उभयात्मकमारभ्य कूटस्थः शेष्यते श्रुतौ ॥ १९८ ॥
कूटस्थसत्यतां स्वस्मिन्नध्यस्यात्मा विवेकतः।
तात्त्विकीं भोक्तृतां मत्वा न कदाचिज्जिहासति ॥ १९९ ॥

---

तादृगात्मानमारभ्येति। तादृगात्मानं बुद्ध्युपाधिकं भोक्तारमात्मानमारभ्यानूद्य कूटस्थः बुद्ध्यादिकल्पनाधिष्ठानभूतश्चिदात्मा शेषितः बुद्ध्याद्यनात्मनिरसनेन परिशेषितः श्रुतौ बृहदारण्यकादावित्यर्थः ॥ १९६ ॥

तत्र बृहदारण्यकवाक्यार्थं तावत् संक्षिप्य दर्शयति आत्मा कतम इति। अनेन कतम आत्मेत्येवमात्मनि पृष्टे सति याज्ञवल्क्यस्तं विबोधयन् योऽयं विज्ञानमयः प्राणेष्वित्यादिना विज्ञानमयमुपक्रम्य असङ्गो ह्ययं पुरुष इत्यसङ्गं कूटस्थं परिशेषितवानित्यर्थः ॥ १९७ ॥

एवं बृहदारण्यकेऽसङ्गात्मपरिशेषप्रकारं प्रदर्श्य ऐतरेयादिश्रुत्यन्तरेष्वपि तद्दर्शयति कोऽयमात्मेत्येवमादाविति। कोऽयमात्मेति वयमुपास्महे कतरः स आत्मेत्येवमादावात्मविचारेणान्तःकरणोपाधिमात्मानमारभ्य प्रज्ञानमात्रात्मकः कूटस्थः परिशेषितः एवमन्यत्रापि द्रष्टव्यम् एवं दृष्टिश्रुतिपर्यालोचनायाम् उभयात्मकस्य भोक्तुर्मिथ्यात्व पारमार्थिकत्वासङ्गस्य कूटस्थस्याभोक्तृत्वं सिद्धम् ॥ १९८ ॥

[illegible] भोक्तुर्मिथ्यात्वे [illegible] तस्मिन् [illegible] कुतो जायत इत्याह कूटस्थसत्यतामिति। आत्मा लोकप्रसिद्धो भोक्ता विवेकतः स्वात् कूटस्थात् [illegible] कूटस्थनिष्ठ सत्यत्वमात्मन्यध्यस्य तद्द्वारा स्वकीयस्य भोक्तृत्वस्यापि सत्यतां मत्वा भोगं कदाचिदपि न हातुमिच्छति ॥ १९९ ॥

भोक्ता स्वस्यैव भोगाय पतिजायादिमिच्छति।
एष लौकिकवृत्तान्तः श्रुत्या सम्यगनूदितः ॥ २०० ॥
भोग्यानां भोक्तृशेषत्वान्मा भोग्येष्वनुरज्यताम्।
भोक्तर्य्येव प्रधानेऽतोऽनुरागं तं विधित्सति ॥ २०१ ॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥ २०२ ॥

---

ननु तर्हि आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यात्मशेषत्वं भोग्यस्य सर्वं प्रतिपाद्यते इत्याशङ्क्य न कूटस्थस्य शेषत्वं प्रतिपाद्यते किन्तु लोकप्रसिद्धोऽन्यात्मकभोक्तृशेषत्वमेव श्रुत्यानूद्यत इत्याह भोक्ता स्वस्य भोगायेति। लोके यो भोक्ता स स्वस्यैव भोगाय पतिजायादिभोगोपकरणमिच्छतीत्ययं लोकवृत्तान्तः श्रुत्या सम्यगनूदितः नार्थान्तरं प्रतिपाद्यत इत्यर्थः ॥ २०० ॥

अनुवादः किमित्याशङ्क्य भोक्तर्य्येव प्रेमविधानार्थेत्याह भोग्यानामिति। भोग्यानां पतिजायादीनां भोक्तुः स्वस्य भोगोपकरणत्वात् भोग्येष्वनुरागो न कर्त्तव्यः किन्तु प्रधानभूते भोक्तर्य्येवानुरागः कर्त्तव्यः इति विधानार्थेत्यर्थः ॥ २०१ ॥

भोग्येषु प्रेमत्यागपुरःसरमात्मप्रेमकर्त्तव्यतायां दृष्टान्तत्वेनाह प्रेमप्रार्थनापुरःसरं पुराणवचनमुदाहरति या प्रीतिरिति। अविवेकानामात्मज्ञानशून्यानां विषयेष्वनपायिनी दृढा या प्रीतिरस्ति हे नाथ लक्ष्मीपते सा प्रीतिस्त्वामनुस्मरतस्त्वां सदा चिन्तयतो मम हृदयात् मनसः सर्पतु अपगच्छतु मम मनो विषयेभ्योऽपि निवृत्य त्वय्येव तिष्ठतु इत्यर्थः। यद्वा अविवेकिनां विषयेषु या यादृशी दृढा प्रीतिरस्ति सा तादृशी विषयेषु विद्यमाना प्रीतिस्त्वामनुस्मरतो मे हृदयान्मापगच्छतु सदा तिष्ठत्वित्यर्थः ॥ २०२ ॥

इति न्यायेन सर्वस्मात् भोग्यजाताद् विरक्तधीः ।
उपसंहृत्य तां प्रीतिं भोक्तर्य्येवं बुभुत्सते ॥ २०३ ॥
स्रक्चन्दनवधूवस्त्रसुवर्णादिषु पामरः ।
अप्रमत्तो यथा तद्वन्न प्रमाद्यति भोक्तरि ॥ २०४ ॥
काव्यनाटकतर्कादिमभ्यस्यति निरन्तरम् ।
विजिगीषुर्यथा तद्वन्मुमुक्षुः स्वं विचारयेत् ॥ २०५ ॥
जपयागोपासनादि कुरुते श्रद्धया यथा ।
स्वर्गादिवाञ्छया तद्वत् श्रद्दध्यात् स्वे मुमुक्षया ॥ २०६ ॥
चित्तैकाग्र्यं यथा योगी महायासेन साधयेत् ।

---

भवत्वेवं पुराणे श्रुतौ किमायातमित्यत आह इति न्यायेनेति । इत्यनेन पुराणोक्तन्यायेन सर्वस्मात् भोग्यजातात् पतिजायादिलक्षणात् विरक्तधीः विरक्ता धीर्यस्यासौ विरक्तधीः पुरुषः तां भोग्यगोचरां प्रीतिं भोक्तर्य्यात्मन्युपसंहृत्य एवमात्मानं बुभुत्सते बोद्धुमिच्छति ॥ २०३ ॥

एवमात्मन्येव प्रीतिसंचारे फलितं दृष्टान्तमाह स्रक्चन्दनेति । पामरः पृथग्जनः स्रगादिविषये यथा अप्रमत्तः सावधानो भवति एवं मुमुक्षुरपि आत्मनि विषये न प्रमाद्यति अनवधानं न करोति किन्तु तन्निष्ठयैव तिष्ठतीत्यर्थः ॥ २०४ ॥

अनवरतमात्मचिन्तनं दृष्टान्तैः स्पष्टयति काव्यनाटकेति । यथा विजिगीषुः परेषां जयकामः इह लोके प्रधानः पुरुषो निरन्तरं काव्यादीनभ्यस्यति एवं मुमुक्षुरपि सदात्मानं विचारयेत् ॥ २०५ ॥

जपयागेति । यथा वैदिकः स्वर्गार्थी तत्साधनानि जपादीनि श्रद्धापुरःसरम् अनुतिष्ठति तथा मुमुक्षुर्मोक्षेच्छया स्वे [illegible] आत्मनि विश्वासं कुर्यात् ॥ २०६ ॥

चित्तैकाग्र्यमिति । योगी योगाभ्यासवान् अणिमाद्यैश्वर्यकामे-

दृष्ट्वैव पुण्यं पापञ्चेत्येवं श्रुतिषु डिण्डिमः ॥ २११ ॥

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत् प्रकाशते ।
तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ २१२ ॥

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ २१३ ॥

त्रिषु धामसु यत् भोग्यं भोक्ता भोगश्च यद् भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥२१४॥

---

यद्यत्रत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवतीत्यादि वाक्यद्वयमर्थतः पठति स यदिति । स आत्मा तत्र तस्याम् अवस्थायां यत् किञ्चित् भोग्यम् ईक्षते पश्यति तेन दृष्टेनानन्वागतो भवेदननुगतो न भवेत् किन्तु स्वयमेवावस्थान्तरं गच्छतीत्यर्थः पुण्यं पुण्यफलं सुखं पापं तत्फलं दुःखञ्च दृष्ट्वैव नाद्यायेत्यर्थः ॥ २११ ॥

भोक्तृतत्त्वविवेचनपराणि श्रुत्यन्तराणि दर्शयति जाग्रत्स्वप्नेति । यत् सत्यज्ञानानन्दलक्षणं ब्रह्म साक्षिरूपेणावस्थितं सत् जाग्रदादिप्रपञ्चं प्रकाशते प्रकाशयति तत् ब्रह्माहमस्मि बुद्धिचिदाभासाद्यहमस्मीति ज्ञात्वा श्रुत्यनुभवाभ्यां निश्चित्य सर्वप्रतिबन्धैः प्रमातृत्वकर्तृत्वादिभिः प्रमुच्यते प्रकर्षेण सर्वात्मना मुच्यते ॥ २१२ ॥

एक एवात्मेति । जाग्रदाद्यवस्थासु एक एवात्मा मन्तव्यः एवं विवेकज्ञानेन स्थानत्रयव्यतीतस्यावस्थात्रयात् विविक्तस्यात्मनः पुनर्जन्म न विद्यते वर्तमानशरीरपातानन्तरं शरीरान्तरप्राप्तिर्नास्तीत्यर्थः ॥ २१३ ॥

त्रिष्विति । त्रिषु धामसु त्रिष्ववस्थासु यद् भोग्यं स्थूलप्रविविक्तानन्दरूपं यच्च भोक्ता विश्वतैजसप्राज्ञरूपो यच्च भोगस्तदनुभवरूपश्चेति विद्यन्ते तेभ्यः स्थानादिभ्यो विलक्षणो चिन्मात्र-

एवं विवेचिते तत्त्वे विज्ञानमयशब्दितः ।
चिदाभासो विकारी यो भोक्तृत्वं तस्य शिष्यते ॥२१५॥
मायिकोऽयं चिदाभासः श्रुतेरनुभवादपि ।
इन्द्रजालं जगत् प्रोक्तं तदन्तःपात्ययं यतः ॥ २१६ ॥
विलोपोऽस्य सुषुप्त्यादौ साक्षिणा ह्यनुभूयते ।
एतादृशं स्वस्वभावं विविनक्ति पुनः पुनः ॥ २१७ ॥

---

रूपः साक्षी सदाशिवः निरतिशयानन्दरूपत्वेन सर्वदा शोभनः परमात्मास्ति सोऽहमस्मीत्यर्थः ॥ २१४ ॥

एवं विवेकेनात्मतत्त्वेऽसङ्गे निश्चिते सति भोक्तृत्वं कस्य इत्यत आह एवमिति । यो विज्ञानमयशब्देनाभिधीयमानः चिदाभासस्तस्य विकारित्वात् भोक्तृत्वमित्यर्थः ॥ २१५ ॥

ननु चिदाभासस्य भोक्तृत्वाङ्गीकारे कस्य आभासेति यतो भोक्तृभावं व्यवस्थापयेति पूर्वोक्तं विरुध्येत इत्याशङ्क्य तस्य वचनस्य पारमार्थिकभोक्तृभावपरत्वमभिप्रेत्य भोक्तुश्चिदाभासस्य मिथ्यात्वं साधयति मायिकोऽयमिति । अयं चिदाभासो मायिको मृषात्मकः श्रुतेः जीवेशावाभासेन करोतीति श्रुतेः अनुभवादपि दृश्यादिमतयमध्यवर्तित्वेनानुभूयमानत्वादपीत्यर्थः । तदेवोपपादयति इन्द्रजालमिति । इन्द्रजालधर्मिवन्मायाभूतं जगत्तन्मध्यभूतत्वादस्यापि मिथ्यात्वं तत्त्वतोऽनुभूयते विद्वद्भिरिति शेषः । यस्मादन्तःपाती इत्यतो मृषेति योजना ॥ २१६ ॥

अस्य जगत इव विनाशित्वानुभवादपि मृषात्वमित्याह विलोपोऽस्येति । सुषुप्त्यादिरादिशब्दार्थः । भवतु मृषात्वं ततः किमित्यत आह एतादृशमिति । यदा कूटस्थात् विवेचितश्चिदाभासो मायिको ज्ञातस्तदा स्वस्वभावं स्वतत्त्वम् एतादृशं मृषात्मकं पुनः पुनर्विविनक्ति कूटस्थात् विविच्य जानाति ॥ २१७ ॥

विविच्य नाश्यं निश्चित्य पुनर्भोगं न वाञ्छति ।
मुमूर्षुः शायितो भूमौ विवाहं कोऽभिवाञ्छति ॥२१८॥
जिह्रेति व्यवहर्त्तुं च भोक्ताहमिति पूर्ववत् ।
छिन्ननास इव ह्रीतः क्लिश्यन्नारब्धमश्नुते ॥ २१९ ॥
यदा स्वस्यापि भोक्तृत्वं मन्तुं जिह्रेत्ययं तदा ।
साक्षिण्यारोपयेदेतदिति कैव कथा वृथा ॥ २२० ॥
इत्यभिप्रेत्य भोक्तारमाक्षिपत्यविशङ्कया ।
कस्य कामायेति ततः शरीरानुज्वरो न हि ॥ २२१ ॥

---

ततोऽपि किमित्यत आह विविच्य नाश्यमिति । स्वविभागनिश्चये भोगेच्छाभावे दृष्टान्तमाह मुमूर्षुरिति ॥ २१८ ॥

किञ्च पूर्ववदहं भोक्तेति व्याहर्त्तुमपि लज्जत इत्याह जिह्रेतीति । तर्हि ज्ञानोत्पत्त्यनन्तरं प्रारब्धक्षयपर्यन्तं कथं व्याहरतीत्यत आह छिन्ननास इति । ह्रीतो लज्जितः क्लिश्यन्निदानीमपि कर्म क्षीयत इति क्लेशमनुभवन् प्रारब्धमश्नुते प्रारब्धकर्मफलं भुङ्क्ते इत्यर्थः ॥ २१९ ॥

इदानीं ज्ञानानन्तरं साक्षिणो भोक्तृत्वाभावः कैमुतिकन्यायसिद्ध इत्याह यदेति । यदा चिदाभासः स्वस्यापि भोक्तृत्वं मन्तुम् अहं भोक्तेति ज्ञातुं जिह्रेति विलज्जते यदा तदा एतत् स्वगतं भोक्तृत्वं साक्षिण्य-सङ्गे आरोपयेदिति वृथा कथार्थशून्या कैव न कापीत्यर्थः ॥ २२० ॥

उक्तमर्थं श्रुत्यारूढं करोति इत्यभिप्रेत्येति । कस्य कामायेति श्रुतिरित्यर्थः, कूटस्थस्य चिदाभासस्य वा पारमार्थिकभोक्तृत्वाभावमभि-प्रेत्याविशङ्कया शङ्काराहित्येन भोक्तारमाक्षिपति निराकरोति । भवत्वेवं भोक्त्राक्षेपः ततः किमित्यत आह तत इति । ज्वरो ज्वरस्य सन्तापः ॥ २२१ ॥

स्थूलं सूक्ष्मं कारणञ्च शरीरं त्रिविधं स्मृतम्।
अवश्यं त्रिविधोऽस्त्येव तत्र तत्रोचितो ज्वरः ॥ २२१ ॥
वातपित्तश्लेष्मजन्या व्याधयः कोटिशस्तनौ।
दुर्गन्धत्व कुरूपत्वं दाहभङ्गादयस्तथा ॥ २२३ ॥
कामक्रोधादयः शान्तिदान्त्याद्या लिङ्गदेहगाः।
ज्वराद्द्वयेऽपि बाधन्ते प्राप्त्यप्राप्त्या नरं क्रमात् ॥ २२४ ॥
स्वं परञ्च न वेत्त्यात्मा विनष्ट इव कारणे।
आगामिदुःखबीजञ्चेत्येतदिन्द्रेण दर्शितम् ॥ २२५ ॥
एते ज्वराः शरीरेषु त्रिषु स्वाभाविका मताः।
वियोगे तु ज्वरैस्तानि शरीराण्येव नासते ॥ २२६ ॥

---

तत्त्वविदः शरीरानुज्वराभावं दर्शयितुं शरीरभेदं तत्र तत्र ज्वर-सद्भावञ्च दर्शयति स्थूलमिति ॥ २२१ ॥

तत्र स्थूलशरीरे ज्वरांस्तावदाह वातपित्तेति ॥ २२२ ॥

सूक्ष्मशरीरे ज्वरान् दर्शयति कामेति। कामादीनां शान्त्यादीनाञ्च ज्वरत्वमुपपादयति द्वये इति। द्वयेऽपि द्विधा अपि क्रमेण प्राप्त्य-प्राप्तिभ्यां नरं बाधन्ते अतो ज्वरत्वात् ज्वरा इत्युच्यन्त इत्यर्थः ॥ २२४ ॥

कारणशरीरगतो ज्वरः छान्दोग्यश्रुतावुक्त इत्याह स्वं परञ्चेति। नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति वाक्येन स्वपरज्ञानशून्यत्वलक्षणे नष्टप्रायत्वं परोक्षमागामिदुःखबीजत्वमावज्ञा-नञ्च इन्द्रेण मिलित्वा गुरोः प्रजापतेः पुरतो निवेदितमित्यर्थः ॥ २२५ ॥

एवं त्रिष्वपि शरीरेषु ज्वरानभिधाय तेषामपरिहार्यत्वमाह एत इति। त्रिष्वपि शरीरेषु प्रतीयमाना एते ज्वराः शरीरैः सहोत्पन्नत्वेन स्वाभाविकाः सम्मताः। स्वाभाविकत्वं व्यतिरेकमुखेन दर्शयति वियो-

तन्तोर्वियुज्येत पटो बालेभ्यः कम्बलो यथा ।
मृदो घटस्तथा देहो ज्वरेभ्योऽपीति दृश्यताम् ॥ २२७ ॥
चिदाभासे स्वतः कोऽपि ज्वरो नास्ति यतश्चितः ।
प्रकाशैकस्वभावत्वमेव दृष्टं न चेतरत् ॥ २२८ ॥
चिदाभासेऽप्यसम्भाव्या ज्वराः साक्षिणि का कथा ।
एवमेवैकतां मेने चिदाभासो ह्यविद्यया ॥ २२९ ॥
साक्षिसत्यत्वमध्यस्य स्वेनोपेते वपुस्त्रये ।
तत् सर्वं वास्तवं स्वस्य स्वरूपमिति मन्यते ॥ २३० ॥

---

नेति । यतः कारणात् एभिर्ज्वरैस्त्रयाणां शरीराणां वियोगे तानि शरीराणि भासते एव नैव भवन्ति अतः स्वाभाविका इत्यर्थः ॥ २२६ ॥

तत्र दृष्टान्तमाह तन्तोरिति ॥ २२७ ॥

इदानीं कूटस्थे ज्वराभावं कैमुतिकन्यायेन दिदर्शयिषुश्चिदाभासे तावज्ज्वराभावं दर्शयति चिदाभासे इति । चिदाभासे स्वतः शरीरत्रयगतज्वरसम्बन्धमन्तरेण न कोऽपि ज्वरः विद्यते । कुत इत्यत आह यतश्चित इति । चितः प्रकाशैकस्वभावस्य विद्वदनुभवसिद्धत्वात् तत्प्रतिबिम्बितस्यापि चिदाभासस्य तथात्वमेष्टव्यमित्यभिप्रायः ॥ २२८ ॥

यदर्थं चिदाभासे ज्वराभाव उपपादितस्तदिदानीं दर्शयति चिदाभास इति । यदा चिदाभासेऽपि ज्वरा न सम्भाव्यन्ते तदा न साक्षिणि सम्भवन्तीति किमुत वक्तव्यमिति भावः । ननु तर्हि ज्वराभोक्त्रनुभवस्य का गतिरित्यत आह एवमिति ॥ २२९ ॥

एकतां मेने इति सङ्क्षेपेणोक्तमर्थं प्रपञ्चयति साक्षीति । चिदाभासः स्वेन संहते शरीरत्रये साक्षिगतं सत्यत्वम् अध्यस्य तत् सर्वं ज्वरवत् शरीरत्रयं स्वस्य वास्तवं रूपम् इति मन्यत इत्यर्थः ॥ २३० ॥

एतस्मिन् भ्रान्तिकालेऽयं शरीरेषु ज्वरत्स्वथ ।
स्वयमेव ज्वरामीति मन्यते हि कुटुम्बिवत् ॥ २११ ॥
पुत्रदारेषु तप्यत्सु तप्यामीति यथा तथा ।
मन्यते पुरुषस्तद्वदाभासोऽप्यभिमन्यते ॥ २१२ ॥
विविच्य भ्रान्तिमुज्झित्वा स्वमप्यगणयन् सदा ।
चिन्तयन् साक्षिणं कस्मात् शरीरमनुसञ्ज्वरेत् ॥ २१३ ॥
अयथावस्तुसर्पादिज्ञानं हेतुः पलायने ।
रज्जुज्ञानेऽहिधीध्वस्तौ कृतमप्यनुशोचति ॥ २१४ ॥

---

एवं भ्रान्तिज्ञाने सति किं भवतीत्यत आह एतस्मिन्निति । अत्र चिदाभासः अस्यां भ्रान्तिदशायां शरीरनिष्ठं ज्वरं स्वात्मन्यारोपयतीत्यर्थः । तत्र दृष्टान्तमाह कुटुम्बिवदिति ॥ २११ ॥

दृष्टान्तं विशदयति पुत्रेति ॥ २१२ ॥

एवमविवेकदशायां चिदाभासे भ्रान्त्या ज्वरं प्रदर्श्य विवेकदशायां तदभावं दर्शयति विविच्येति । चिदाभासः कूटस्थं स्वात्मानं शरीराणि च विविच्य भेदेन ज्ञात्वा इदं सर्वं मम वास्तवरूपमिति मन्यते इत्युक्तां भ्रान्तिं परित्यज्य स्वस्याभासरूपत्वज्ञानेन स्वमप्यगणयन् स्वस्य निजं रूपं ज्वरादिरहितं साक्षिणं सदा चिन्तयन् कथं तु शरीरमनुसञ्ज्वरेत् इति ज्वरवत् शरीरमनुसृत्य स्वयं कस्मात् सञ्ज्वरेत् न संज्वरेदेवेत्यर्थः ॥ २१३ ॥

भ्रान्तिज्ञानतत्त्वज्ञानयोर्ज्वरतदभावकारणत्वं दृष्टान्तप्रदर्शनेन स्पष्टयति अयथावस्त्विति रज्ज्वादौ कल्पितस्य सर्पादेर्ज्ञानं पलायने कारणं भवति पश्चाद्यत्नेन [illegible] रज्ज्वादिज्ञानेन सर्पादिबुद्धिनिवृत्तौ तदपि पलायनमनुशोचति यथा कृतं भयेनानुतप्यत इत्यर्थः ॥ २१४ ॥

मिथ्याभियोगदोषस्य प्रायश्चित्तत्वसिद्धये ।
समापयन्निवात्मानं साक्षिणं शरणं गतः ॥ २३५ ॥
आवृत्तपापनुत्त्यर्थं स्नानाद्यावर्त्यते यथा ।
आवर्तयन्निव ध्यानं सदा साक्षिपरायणः ॥ २३६ ॥
उपस्थकुष्ठिनी वेश्या विलासेषु विलज्जते ।
जानतोऽग्रे तथाभासः स्वप्रख्यातौ विलज्जते ॥ २३७ ॥
गृहीतो ब्राह्मणो म्लेच्छैः प्रायश्चित्तं चरन् पुनः ।
म्लेच्छैः सङ्कीर्यते नैव तथाभासः शरीरकैः ॥ २३८ ॥
यौवराज्ये स्थितो राजपुत्रः साम्राज्यवाञ्छया ।
राजानुकारी भवति तथा साक्ष्यनुकार्ययम् ॥ २३९ ॥

---

साक्षिणं सदा चिन्तयतीत्युक्तं दृष्टान्तेन स्पष्टयति मिथ्याभि-योगदोषस्येति । यथा लोके मिथ्याभियोगकर्त्ता तद्दोषस्य प्रायश्चित्तार्थं पुनः पुनः समापयति एवमयं चिदाभासोऽपि साक्षिण्यसङ्गात्मनि भोक्तृत्वाद्यारोपेण कृतमिथ्याभियोगदोषप्रायश्चित्तार्थं साक्षिणमात्मानं समापयन्निव शरणं गतः ॥ २३५ ॥

तत्रैव दृष्टान्तान्तरमाह आवृत्तपापनुत्त्यर्थमित्यादि । यथा पाप-कारिणा पुरुषेणावृत्तपापनुत्त्यर्थमभ्यस्तपापापनोदनाय विहितं स्नाना-दिकं प्रायश्चित्तमावर्त्यते पुनः पुनरनुष्ठीयते तथायमपि चिरं साक्षिणि संसारित्वारोपणदोषपरिहाराय ध्यानं परिवर्त्तयन्निव सदा साक्षि-परायणो भवति ॥ २३६ ॥

एवं साक्षिपरत्वं दृष्टान्तैरुपपाद्य स्वगुणप्रख्यापने लज्जावत्त्वं दृष्टान्तेनाह उपस्थेति ॥ २३७ ॥

इदानीं शरीरत्रयात् विविक्तस्य चिदाभासस्य पुनस्तैः सह तादा-त्म्याभावे दृष्टान्तमाह गृहीत इति ॥ २३८ ॥

न केवलं स्वापराधनिवृत्तये साक्ष्यनुसरणं किन्तु महत्प्रयोजन-

यो ब्रह्म वेद ब्रह्मैव भवत्येष इति श्रुतिम् ।
श्रुत्वा तदेकचित्तः सन् ब्रह्म वेत्ति न चेतरत् ॥ २४० ॥
देवत्वकामा ह्यग्न्यादौ प्रविशन्ति यथा तथा ।
साक्षित्वेनावशेषाय स्वविनाशं स वाञ्छति ॥ २४१ ॥
यावत् स्वदेहदाहं स नरत्वं नैव मुञ्चति ।
यावदारब्धदेहं स्यान्नाभासत्वविमोचनम् ॥ २४२ ॥

---

चिदप्यर्थमपीति सिंहावलोकनन्यायेन दृष्टान्तमाह यौवराज्य इति । राजानुकारी भवति राजेव प्रजानुरञ्जनादिगुणवान् भवतीत्यर्थः ॥२३९॥

ननु युवराजस्य राजानुसरणे राज्याख्यं फलं दृश्यते नैवं शास्त्रानुसरणे कथं प्रवर्त्तत इत्याशङ्क्याह यो ब्रह्म वेदेति । स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित् कुले भवति तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तो ऽमृतो भवतीति श्रुतौ ब्रह्मभावादिरूपस्य फलस्य श्रवणात् तत्फलवाञ्छया शास्त्रानुसरणे प्रवर्त्तनं युक्तमित्यर्थः ॥ २४० ॥

ननु ब्रह्मज्ञानेन ब्रह्मभावप्राप्तौ चिदाभासत्वमेव विनश्येत् अतः स्वनाशाय कथं प्रवर्त्तत इत्याशङ्क्याह देवत्वकामा ह्यग्न्यादाविति । यथा लोके देवत्वप्राप्तिकामा मनुष्याः भृग्वग्निपतनजलप्रवेशादौ प्रवर्त्तन्ते एवं चाभिलषितब्रह्मत्वावस्थानरूपस्याधिकफलस्य विद्यमानत्वात् चिदाभासत्वापगमहेतौ ब्रह्मज्ञानेऽपि प्रवर्त्तत एवेत्यर्थः ॥ २४१ ॥

ननु तत्त्वज्ञानेन चाभासत्वमपगच्छति चेत् कथं तत्त्वविदां जीवत्वव्यवहार इत्याशङ्क्य प्रारब्धकर्मक्षयपर्यन्तं तदुपपत्तिं दृष्टान्तमाह यावदिति । यथाऽग्न्यादौ प्रविष्टः पुरुषः दाहादिना स्वदेहनाशपर्यन्तं नरत्वं नरत्वव्यवहारयोग्यत्वं नैव मुञ्चति एवं प्रारब्धकर्मक्षयपर्यन्तं चिदाभासत्वव्यवहारो न निवर्त्तत इत्यर्थः ॥ २४२ ॥

रज्जुज्ञानेऽपि कम्पादिः शनैरेवोपशाम्यति ।
पुनर्मन्दान्धकारे सा रज्जुः क्षिप्तोरगोभवेत् ॥ २४३ ॥
एवमारब्धभोगोऽपि शनैः शाम्यति नो हठात् ।
भोगकाले कदाचित् तु मर्त्योऽहमिति भासते ॥ २४४ ॥
नैतावतापराधेन तत्त्वज्ञानं विनश्यति ।
जीवन्मुक्तिव्रतं नेदं किन्तु वस्तुस्थितिः खलु ॥ २४५ ॥
दशमोऽपि शिरस्ताडन् रुदन् बुद्ध्वा न रोदिति ।
शिरोव्रणस्तु मासेन शनैः शाम्यति नो तदा ॥ २४६ ॥

---

ननु भोक्तृत्वादिभ्रमोपादानस्याज्ञानस्य निवृत्तत्वात् पुनः कथं भोगानुवृत्तिः कथं वा मर्त्योऽहमिति विपरीतप्रतीतिरित्याशङ्क्य दृष्टान्तप्रदर्शनेन एतत् समाधत्ते रज्जुज्ञानेऽपीति ॥ २४३ ॥

दार्ष्टान्तिके योजयति एवमारब्धभोगोऽपीति ॥ २४४ ॥

ननु पुनर्मर्त्यत्वबुद्ध्युदये तत्त्वज्ञानं बाध्येत इत्याशङ्क्याह नैतावतेति । कदाचिदहं मर्त्य इत्येव विज्ञानोदयमात्रेणागमप्रमाणजनितं तत्त्वज्ञानं न बाध्यते । कुत इत्यत आह जीवन्मुक्तीति । दृढ मर्त्यत्वबुद्ध्यकरणलक्षणं जीवन्मुक्तिव्रतं नियमेनानुष्ठेयं न भवति किन्तु सम्यक् ज्ञानेन भ्रान्तिज्ञाननिवृत्तिरित्ययं वस्तुस्वभावः अतः कदाचिन्मर्त्यत्वबुद्ध्युदयेऽपि पुनस्तत्त्वज्ञानान्तरेण तस्या एव बाध्यत्वमिति भावः ॥ २४५ ॥

भवतु रज्जुसर्पादिस्थले विपरीतज्ञाननिवृत्तावपि तत्कार्यकम्पाद्यनुवृत्तिः प्रकृतदृष्टान्ते दशमे दशमस्त्वमसीति वाक्यविचारजन्यज्ञानेन भ्रमनिवृत्तौ तत्कार्यानुवृत्तिर्नोपलभ्यते इत्याशङ्क्याह दशमोऽपीति । दशमोऽस्मीति ज्ञानोदयेऽपि शिरस्ताडनपूर्वकं रोदनमात्रं निवर्तते ताडनजन्यव्रणस्तु अनुवर्तत एवेत्यर्थः ॥ २४६ ॥

दशमाप्तिलाभेन जातो हर्षो व्रणव्यथाम् ।
तिरोधत्ते मुक्तिलाभस्तथा प्रारब्धदुःखिताम् ॥ २४७ ॥
व्रताभावात् यदाध्यासस्तदा भूयो विविच्यताम् ।
रससेवी दिने भुङ्क्ते भूयोभूयो यथा तथा ॥ २४८ ॥
शमयत्यौषधेनायं दशमः स्वव्रणं यथा ।
भोगेन शमयित्वैतत् प्रारब्धं मुच्यते तथा ॥ २४९ ॥
किमिच्छन्निति वाक्योक्तः शोकमोक्ष उदीरितः ।
आभासस्य ह्यवस्थैषा षष्ठी तृप्तिस्तु सप्तमी ॥ २५० ॥

---

ननु प्राग्भोगकालेऽपि ज्वराद्यनुवृत्तौ मुक्तेः कुतः पुरुषार्थता इत्याशङ्क्य मुक्तिलाभजन्यहर्षस्य दुःखाच्छादकत्वस्य सत्त्वात् पुरुषार्थतेति दृष्टान्तपूर्वकमाह दशमाप्तिलाभेन जात इति ॥ २४७ ॥

जीवन्मुक्तिव्रतं नेदमित्युक्तं तत्र व्रतत्वाभावे किमायातमित्यत आह व्रताभावादिति । पुनः पुनर्विचारकरणे दृष्टान्तमाह रससेवीति । यथा रससेवी नरः कस्मिंश्चित् दिने क्षुधापरिहाराय पुनः पुनः भुङ्क्ते तद्वदध्यासनिवृत्तये पुनः पुनर्विवेकः क्रियतामित्यर्थः ॥ २४८ ॥

ज्ञानेनानिवृत्तस्य प्रारब्धकर्मफलस्य केन तर्हि निवृत्तिरित्याशङ्क्य व्रणजन्यव्यथाया औषधेनेव भोगेनैव निवृत्तिरित्याह शमयत्यौषधेनायमिति ॥ २४९ ॥

अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे । अवस्थे जीवगे ब्रूते आत्मानञ्चेदिति श्रुतिः । इत्यनेन जीवेन आत्मानञ्चेद्विजानीयादहमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत् । इत्यस्मिन् मन्त्रे अपरोक्षज्ञानशोकनिवृत्त्याख्ये जीवावस्थे द्वे अभिहिते इत्युक्तम् इदानीं तदभिधानोचितां जीवस्य सप्तमीं तृप्तिरूपाम् अवस्थां तदनुकीर्तनपूर्वकं वक्तुमारभते किमिच्छन्निति । किमिच्छन्नि-

साङ्कुशा विषयैस्तृप्तिरियं तृप्तिर्निरङ्कुशा ।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तृप्यति ॥ २५१ ॥
ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये ।
बहुकृत्यं पुरास्याभूत् तत् सर्वमधुना कृतम् ॥ २५२ ॥
तदेतत् कृतकृत्यत्वं प्रतियोगिपुरःसरम् ।
अनुसन्दधदेवायमेवं तृप्यति नित्यशः ॥ २५३ ॥

---

पूर्वार्द्धेनाभिहितो यः शोकमोक्षः स एतावत्पर्यन्तसन्दर्भेण उदीरितः अभिहितः । एवं अज्ञानमावृतिस्तद्वद्विक्षेपश्च अपरोक्षधीः अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरङ्कुशा इत्यनेन श्लोकेनाभिहितासु सप्तसु जीवावस्थासु षष्ठ्यवस्था आभासस्य भवतीति । तृप्तिस्त्विति सप्तमी व्याख्यायते इति शेषः ॥ २५० ॥

अपरोक्षज्ञानजन्यायास्तृप्तेर्निरङ्कुशत्वं प्रतियोगिप्रदर्शनपुरःसरं प्रतिजानीते साङ्कुशेति । विषयज्ञानजन्यायास्तृप्तेर्विषयान्तरकामनया कुण्ठितत्वात् साङ्कुशत्वम् अस्यास्तु तदभावान्निरङ्कुशत्वं तदेव दर्शयति कृतं कृत्यमिति ॥ २५१ ॥

कृतकृत्यत्वमेवोपपादयति ऐहिकामुष्मिकेति । अस्य विदुषस्तत्त्वज्ञानोदयात् पूर्वमिह लोके दृष्टप्राप्तयेऽनिष्टनिवृत्तये वाणिज्यकृष्यादिकं स्वर्गादिफलसिद्धये यागोपासनादिकं मोक्षसाधनज्ञानसिद्धये श्रवणादिकञ्चेति बहुविधकर्त्तव्यमासीत् इदानीन्तु तत्तत्फलेच्छाभावात् ब्रह्मानन्दप्राप्त्या कार्यस्य सिद्धत्वाच्च तत् सर्वं कृषिवाणिज्ययागादिकं कृतं कृतप्रायमभूत् इतः परम् अनुष्ठेयत्वाभावादित्यर्थः ॥ २५२ ॥

एवं कृतकृत्यत्वमुपपाद्य तदनुसन्धानेन तृप्तिं दर्शयति तदेतदिति । कृतकृत्यत्वमिति । [illegible] प्रतियोगिपुरःसरं प्रतियोग्यनुसन्धानपूर्वकं यथा भवति तथा एवं [illegible] बुद्ध्या तृप्यति ॥ २५३ ॥

दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया ।
परमानन्दपूर्णोऽहं संसरामि किमिच्छया ॥ २५४ ॥
अनुतिष्ठन्तु कर्म्माणि परलोकयियासवः ।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥ २५५ ॥
व्याचक्षतान्ते शास्त्राणि वेदानध्यापयन्तु वा ।
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥ २५६ ॥
निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ।
द्रष्टारश्चेत् कल्पयन्ति किं मे स्यादन्यकल्पनात् ॥ २५७ ॥
गुञ्जापुञ्जादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्म्मानेवमहं भजे ॥ २५८ ॥

---

तदेवानुसन्धानं प्रपञ्चयति दुःखिनोऽज्ञा इत्यादिना कृतकृत्यतया प्राप्तप्राप्यतया पुनरित्यनेन पद्येन । तत्र तावदैहिकफलार्थिभ्यो वैलक्षण्यं स्वस्य दर्शयति दुःखिनोऽज्ञा इति ॥ २५४ ॥

स्वर्गाद्यर्थं कर्मानुष्ठातृभ्यो वैलक्षण्यमाह अनुतिष्ठन्तु कर्माणीति ॥ २५५ ॥

ननु स्वार्थप्रवृत्त्यभावेऽपि परार्थप्रवृत्तिः किं न स्यादित्याशङ्क्य अधिकाराभावात् साऽपि नास्ति इत्याह व्याचक्षतान्ते शास्त्राणीति ॥ २५६ ॥

ननु शरीरनिर्वाहार्थं भिक्षाचरणादिकं परलोकार्थं स्नानादिकञ्च त्वया क्रियमाणमुपलभ्यते अतोऽक्रियत्वमसिद्धमित्याशङ्क्य तदपि मद्दृष्ट्या नैवास्ति किन्त्वन्यैरेव कल्पितमित्याह निद्राभिक्षे इति ॥ २५७ ॥

अन्यकल्पनयापि बाधोऽस्त्वित्याशङ्क्य तदभावे दृष्टान्तमाह गुञ्जापुञ्जादीति ॥ २५८ ॥

शृण्वन्त्वज्ञाततत्त्वास्ते जानन् कस्मात् शृणोम्यहम् ।
मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ॥ २५९ ॥
विपर्यस्तो निदिध्यासेत् किं ध्यानमविपर्यये ।
देहात्मत्वविपर्यासं न कदाचिद् भजाम्यहम् ॥ २६० ॥
अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम् ।
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ २६१ ॥
प्रारब्धकर्मणि क्षीणे व्यवहारो निवर्त्तते ।
कर्माक्षये त्वसौ नैव शाम्येत् ध्यानसहस्रतः ॥ २६२ ॥
विरलत्वं व्यवहृतेरिष्टञ्चेत् ध्यानमस्तु ते ।
अबाधिकां व्यवहृतिं पश्यन् ध्यायाम्यहं कुतः ॥२६३॥

---

ननु फलान्तरेच्छाभावे कर्मानुष्ठानं मा भूत् तत्त्वसाक्षात्काराय श्रवणादिकं कर्तव्यमेव इत्याशङ्क्य अज्ञानाद्यभावात् श्रवणादिकर्तृत्वमपि नास्तीत्याह शृण्वन्त्विति । अज्ञाततत्त्वा अज्ञातं ब्रह्मात्मैकत्वलक्षणं तत्त्वं यैस्ते तथाभूताः श्रवणं कुर्वन्तु तत्त्वमित्थमन्यथा वेति संशयवन्तो मननं कुर्वन्तु मम तु तदुभयाभावान्नोभयत्र प्रवृत्तिरित्यर्थः ॥ २५९ ॥

मा भूतां श्रवणमनने विपर्ययनिरासार्थं निदिध्यासनं कर्तव्यमित्याशङ्क्य देहादौ आत्मबुद्धिलक्षणस्य विपर्ययस्याभावात् तदपि नानुष्ठेयमित्याह विपर्यस्त इति ॥ २६० ॥

ननु विपर्ययाभावात् अहं मनुष्य इति व्यवहारः कथं घटेत इत्याशङ्क्य वासनावशात् भवतीत्याह अहं मनुष्य इत्यादीति ॥ २६१ ॥

तर्ह्यस्य व्यवहारस्य निवृत्तिसिद्धये ध्यानं कर्तव्यमित्याशङ्क्य प्रारब्धक्षयमन्तरेणास्य निवृत्तिर्नास्तीत्याह प्रारब्धकर्मणीति ॥ २६२ ॥

ननु प्रारब्धनिमित्तकस्यापि व्यवहारस्य विरलत्वाय ध्यानं कर्तव्यमेव इत्याशङ्क्य व्यवहारस्याबाधकत्वदर्शनात् तन्निवृत्तये न ध्यानमनुष्ठेयमित्याह विरलत्वमिति ॥ २६३ ॥

विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ।
विक्षेपो वा समाधिर्वा मनसः स्याद् विकारिणः ॥२६४॥
नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥ २६५ ॥
व्यवहारो लौकिको वा शास्त्रीयोऽप्यन्यथापि वा ।
ममाकर्त्तुरलेपस्य यथारब्धं प्रवर्त्तताम् ॥ २६६ ॥
अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ।
शास्त्रीयेणैव मार्गेण वर्त्तेऽहं का मम क्षतिः ॥ २६७ ॥
देवार्चनस्नानशौचभिक्षादौ वर्त्ततां वपुः ।
तारं जपतु वाक् तद्वत् पठत्वाम्नायमस्तकम् ॥२६८॥

ननु तस्य कर्तव्यत्वेऽपि विक्षेपपरिहाराय समाधिः कर्तव्य इत्या- शङ्क्य विक्षेपसमाधानयोर्मनोधर्मत्वात् न विक्षेपनिवारकोऽपि समाधि- र्ममाविकार इत्याह विक्षेपो नास्तीति ॥ २६४ ॥

ननु तथापि समाधिफलमनुभवः सम्पादनीय इत्याशङ्क्य तस्य मम स्वरूपत्वान्न सम्पाद्य इत्याह नित्यानुभवरूपस्येति । उपपादितं कृत- कृत्यत्वं निगमयति कृतं कृत्यमिति ॥ २६५ ॥

एवं सर्वकर्तव्यताभ्युपगमेऽनियतस्थितित्वं प्रसक्तमित्याशङ्क्य प्रारब्धकर्मवशात् प्राप्तमनियतस्थितित्वमङ्गीकरोति व्यवहारो लौकिको वेति । लौकिको भिक्षाचारादिः शास्त्रीयो जपध्यानादिरन्यथापि वा प्रतिषिद्धहिंसादिर्व्यवहारः कर्तृत्वभोक्तृत्वरहितस्य मम प्रारब्धकर्मानति- क्रमेण प्रवर्ततामित्यर्थः ॥ २६६ ॥

एवं वस्तुतत्त्वमभिधाय पक्षान्तरेणाह अथवेति । लोकानुग्रह- काम्यया प्राणिनामनुग्रहेच्छया इत्यर्थः ॥ २६७ ॥

शास्त्रीयमार्गप्रवर्तनाप्रकारं दर्शयन् तदभिमानशून्यो विकारस्तु

विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम्।
साक्ष्यहं किञ्चिदप्यत्र न कुर्वे नापि कारये॥ २६९ ॥
एवञ्च कलहः कुत्र सम्भवेत् कर्मिणो मम।
विभिन्नविषयत्वेन पूर्वापरसमुद्रवत्॥ २७० ॥
वपुर्वाग्धीषु निर्बन्धः कर्मिणो न तु साक्षिणि।
ज्ञानिनः साक्ष्यलेपत्वे निर्बन्धो नेतरत्र हि॥ २७१ ॥
एवञ्चान्योन्यवृत्तान्तानभिज्ञौ बधिराविव।
विवदेतां बुद्धिमन्तो हसन्त्येव विलोक्य तौ॥ २७२ ॥
यं कर्मी न विजानाति साक्षिणं तस्य तत्त्ववित्।
ब्रह्मत्वं बुध्यतां तत्र कर्मिणः किं विहीयते॥ २७३ ॥
देहवाग्बुद्धयस्त्यक्ता ज्ञानिनानृतबुद्धितः।
कर्मी प्रवर्त्तयत्वाभिर्ज्ञानिनो हीयतेऽत्र किम्॥ २७४ ॥

अत एव ध्यानमप्याह देवार्चनेत्यादिना श्लोकद्वयेन। तारं प्रणवम्
ध्यायमध्यात्मं वेदान्तशास्त्रम् ॥ २६८ ॥

विष्णुं ध्यायत्विति धीर्देहेति सुगमम् ॥ २६९ ॥

फलितमाह एवञ्चेति ॥ २७० ॥

विभिन्नविषयत्वमेव स्पष्टयति वपुर्वाग्धीष्विति निर्बन्ध इति ॥ २७१ ॥

तथापि यौ ज्ञानिकर्मिणौ कलहं कुर्वाते तौ विद्वद्भिः परिहस-
नीयावित्याह एवञ्चेति ॥ २७२ ॥

कथं परिहास्यत्वमित्याशङ्क्य निर्विषयकलहकारित्वादित्याह यं
कर्मी न विजानाति इति। कर्मी यं साक्षिणं कर्मानुष्ठानोपयोगिदेह-
व्यतिरिक्तं प्रत्यगात्मानं न विजानाति तत्त्वविदा तस्य ब्रह्मत्वे
बुद्धे कर्मिणः कर्मानुष्ठाने किं हीयते ॥ २७३ ॥

ज्ञानिना मिथ्यात्वबुद्ध्या परित्यक्ताभिर्देहवाग्बुद्धिभिः कर्मानुष्ठाने

प्रवृत्तिर्नोपयुक्ता चेन्निवृत्तिः क्वोपयुज्यते ।
बोधे हेतुर्निवृत्तिश्चेद् बुभुत्सायां तथेतरा ॥ २७५ ॥
बुद्धश्चेन्न बुभुत्सेत नाप्यसौ बुध्यते पुनः ।
अबाधादनुवर्त्तेत बोधो न त्वन्यसाधनात् ॥ २७६ ॥
नाविद्या नापि तत्कार्य्यं बोधं बाधितुमर्हति ।
पुरैव तत्त्वबोधेन बाधिते ते उभे यतः ॥ २७७ ॥
बाधितं दृश्यतामक्षैस्तेन बाधो न शक्यते ।
जीवन्नाखुर्न मार्जारं हन्ति हन्यात् कथं मृतः ॥ २७८ ॥

ध्यानिभो वा किं क्रियते अतो निर्विषयकत्वकारिणोः परिहरणीयत्व-मित्यर्थः ॥ २७४ ॥

कर्मानुष्ठानं प्रयोजनशून्यत्वात् न ज्ञानिनाभ्युपगम्यते इति शङ्कते प्रवृत्तिरिति । उपयोगाभावो निवृत्तावपि समान इति परिहरति निवृत्तिरिति । निवृत्तेर्बोधहेतुत्वात् नोपयोगाभाव इति शङ्कते बोधे हेतुरिति । तर्हि प्रवृत्तिरपि बुभुत्साहेतुत्वादुपयोगवतीत्याह बुभुत्सायामिति ॥ २७५ ॥

ननु बुद्धस्य बुभुत्साभावात् प्रवृत्तेरनुपयोगित्वमिति पुनः शङ्कते बुद्धश्चेदिति । तर्हि बुद्धस्य पुनर्बोधाभावात् तद्धेतुर्निवृत्तिरपि बुद्धं प्रत्यनुपयोगिनीत्याह नाप्यसाविति । उत्पन्नस्य बोधस्य स्थिरत्वाय निवृत्तिरपेक्ष्यते इत्याशङ्क्य स्थिरत्वं बाधकाभावमपेक्षते न साधनान्तर-मित्याह अबाधादिति । वाक्यप्रमाणजन्यज्ञानस्य प्रबलतरप्रमाणेन बाधा-भावादनुवृत्तिः स्यादेव अतो न साधनान्तरं तदर्थमनुष्ठेयमित्यर्थः ॥ २७६ ॥

ननु प्रमाणान्तरेण बाधाभावेऽप्यविद्यया तत्कार्येण कर्तृत्वाद्यध्या-सेन वा बाधः स्यादित्याशङ्क्याह नाविद्येति । तत्र हेतुमाह पुरै-वेति ॥ २७७ ॥

यद्यविद्याया बाधितत्वेऽपि तत्कार्यस्य प्रतीयमानस्य बाधितत्वा-

अपि पाशुपतास्त्रेण विद्धश्चेन्न ममार यः।
निष्फलेषुविद्धाङ्गो नश्यतीत्यत्र का प्रमा ॥ २७९ ॥
आदावविद्यया चित्रैः स्वकार्य्यैर्जृम्भमाणया।
युद्ध्वा बोधोऽजयत् सोद्य सुदृढो बाध्यतां कथम् ॥२८०॥
तिष्ठन्त्वज्ञानतत्कार्य्यशवाबोधेन मारिताः।
न हानिर्बोधसम्राजः कीर्त्तिः प्रत्युत तस्य तैः ॥२८१॥
य एवमतिशूरेण बोधेन न वियुज्यते।
निवृत्त्या वा प्रवृत्त्या वा देहादिगतयास्य किम् ॥२८२॥

---

स्मात् तेन बोधस्य बाधो भवेदित्याशङ्क्य उपादाननिवृत्त्यैव तस्यापि र्ति तत्वात् न तेनापि बा[illegible] प्रत्युत तस्य तेनैव बाधितं दृश्यतामिति। तत्र दृष्टान्तमाह जीवन्मुक्तिरिति। आत्मर्षिकः ॥ २७८ ॥

इतदर्शनेन तत्त्वबोधस्य बाधाभावं कैमुतिकन्यायदर्शनेन दृढयितुं तदनुकूल दृष्टान्तमाह अपीति। यः अर्जुनः पाशुपतास्त्रेण विद्धोऽपि न ममार चेत् किन्तु स निष्फलेषुविद्धाङ्गः शल्यरहितेनेषुणा व्यथित-देह सन् नश्यतीति नाशं प्राप्स्यतीत्यत्र प्रमा प्रमाणं नास्तीत्यर्थः ॥२७९॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति आदावविद्ययेति। आदौ विद्याभ्याससमये चित्रैः बहुविधैः स्वकार्य्यैः प्रमातृत्वभोक्तृत्वकर्तृत्वादि-भिर्जृम्भमाणया वर्द्धमानयाऽविद्यया बोधो युद्ध्वा युद्धं कृत्वा तामजयत् स एवाभ्यासपाटवेन सुदृढः इदानीमविद्यानिवृत्तौ सत्यां निर्मूलेन तत्का-र्य्येणाध्यासेन कथं बाध्यतां न कथमपि बाध्यते इत्यर्थः ॥ २८० ॥

उपपादितमर्थं श्लोकद्वयेनोपसंहरति तिष्ठन्त्विति ॥२८१॥

भवत्वेवं प्रकृते किमायातमित्याह य एवमिति। यः पुमानेवमुक्त-प्रकारेणाविद्यातत्कार्यघातकेन ब्रह्मात्मैकत्वज्ञानेन न वियु-

प्रवृत्तावाग्रहो न्याय्यो बोधहीनस्य सर्वथा ।
स्वर्गाय वापवर्गाय योजितव्यं यतो नृभिः ॥ २८३ ॥
विद्वांश्चेत् तादृशां मध्ये तिष्ठेत् तदनुरोधतः ।
कायेन मनसा वाचा करोत्येवाखिलाः क्रियाः ॥२८४॥
एष मध्ये बुभुत्सूनां यदा तिष्ठेत् तदा पुनः ।
बोधायैषां क्रियाः सर्व्वा दूषयंस्त्यजतु स्वयम् ॥ २८५ ॥
अविद्वदनुसारेण वृत्तिर्बुद्धस्य युज्यते ।
स्तनन्धयानुसारेण वर्त्तते तत्पिता यतः ॥ २८६ ॥

---

...त्या न कदापि वियुक्तो भवति अस्य पुंसो देहादिनिवृत्त्या निवृत्त्या वा प्रवृत्त्या वा किं न किमपि इष्टमनिष्टं चेत्यर्थः ॥ २८२ ॥

तर्हि ज्ञानिवदज्ञानिनोऽपि प्रवृत्तावाग्रहो न युक्त इत्याशङ्क्याह प्रवृत्ताविति । तत्रोपपत्तिमाह स्वर्गाय वेति ॥ २८३ ॥

विदुष आग्रहो न युक्त इत्युक्तं तर्हि कर्मिणां मध्ये वर्त्तमानेन तेन कथं व्यवहर्त्तव्यमित्यत आह विद्वानिति तादृशानां कर्मिणां मध्ये तिष्ठेच्चेत् तदनुरोधतः तेषामनुसारेण शरीरादिभिः सर्वाः क्रियाः करोत्येव तान् कर्मणो न निवारयेदित्यर्थः ॥ २८४ ॥

अथैवं तत्त्वबुभुत्सूनां मध्येऽवस्थितस्य आचारमाह एष इति । एष विद्वान् बुभुत्सूनां मध्ये यदा तिष्ठेत् तदा एषां बुभुत्सूनां बोधाय तत्त्वज्ञानजननाय ताः क्रिया दूषयन् स्वयमपि त्यजतु ॥२८५॥

कुत एवं वर्त्तव्यमित्याह अविद्वदनुसारेणेति । अज्ञान्यनुसारेण ज्ञानिनो वर्त्तनमुचितं कृपालुत्वात् तेषामनुकम्पनीयत्वाच्चेति भावः । तत्र दृष्टान्तमाह स्तनन्धयेति । स्तनन्धयाः स्तन्यपानकर्त्तारः पितुरिव इत्यर्थः ॥ २८६ ॥

अधिक्षिप्तस्ताडितो वा बालेन स्वपिता तदा ।
न क्लिश्यति न कुप्येच्च बालं प्रत्युत लालयेत् ॥ २८७ ॥
निन्दितः स्तूयमानो वा विद्वानज्ञैर्न निन्दति ।
न स्तौति किन्तु तेषां स्याद् यथा बोधस्तथाचरेत् ॥ २८८ ॥
येनायं नटनेनात्र बुध्यते कार्यमेव तत् ।
अज्ञप्रबोधान्नैवान्यत् कार्य्यमस्त्यत्र तद्विदः ॥ २८९ ॥
कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ॥ २९० ॥
धन्योऽहं धन्योऽहं नित्यं स्वात्मानमञ्जसा वेद्मि ।
धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम् ॥ २९१ ॥

---

पितुः स्वमन्यथानुचारित्वमेव दर्शयति अधिक्षिप्त इति ॥ २८७ ॥

दार्ष्टान्तिके योजयति निन्दित इति । विद्वानज्ञैर्निन्दितः स्तूय-मानो वा स्वयं न निन्दति न स्तौति किन्तु एषामज्ञानिनां यथा बोध उपजायते तथाचरेत् ॥ २८८ ॥

एवमाचरणे निमित्तमाह येनायमिति । अयमज्ञानी अस्मात् किल लोके विदुषो येन यादृशेन नटनेनाचरणेन बुध्यते तत्त्वमवगच्छति तथा-चरणं तेन कर्तव्यमेव । तर्हि तद्वदेव कार्यान्तरमपि प्रसज्येत इत्यत आह अज्ञप्रबोधादिति । अतस्तद्विदस्तत्त्वविदः अत्र लोके अज्ञप्रबोधा-दन्यत् कर्तव्यं नैवास्ति अतस्तदनुसारेण तत्त्वबोधनं कर्तव्यमित्यर्थः ॥ २८९ ॥

इतरलिङ्गमात्मयोर्मननमाह कृतकृत्यतयेति । असौ विद्वान् पूर्वोक्तप्रकारेण, कृतकृत्यतया कृतं कृत्यं येनासौ कृतकृत्यस्तस्य भावस्तत्ता तया तृप्तः सन् पुनर्वक्ष्यमाणप्रकारेण प्राप्तप्राप्यतया प्राप्तं प्राप्यं येन स प्राप्तप्राप्यस्तस्य भावस्तत्ता तया तृप्यन् स्वमनसा निरन्तरमेवं मन्यते ॥ २९० ॥

किं मन्यते तदित्यत आह धन्योऽहमिति । धन्यः कृतकृत्यः स्याद-

धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य।
धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि॥२९२॥
धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किञ्चित्।
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमद्य सम्पन्नम्॥ २९३॥
धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके।
धन्योऽहं धन्योऽहं धन्यो धन्यो धन्यः पुनः पुनः॥२९४॥
अहो पुण्यमहो पुण्यं फलितं फलितं दृढम्।
अस्य पुण्यस्य सम्पत्तेरहो वयमहो वयम्॥ २९५॥

रूपां दीप्तां नित्यमनवरतं स्वात्मानं स्वस्य निजं रूपं देशाद्यनवच्छिन्नं नन्दमात्मानमञ्जसा साक्षात् यतो वेद्मि जानाम्यतो धन्य इत्यर्थः। एव-मात्मज्ञानलाभनिमित्तां तुष्टिमभिधाय तत्फललाभनिमित्तां तां दर्श-यति धन्योऽहमिति। ब्रह्मानन्दं ब्रह्मभूतानन्दः मे स्पष्टं विभाति स्पष्टं यथा भवति तथा स्फुरतीत्यर्थः॥ २९१॥

एवमिष्टप्राप्तौ तुष्टिमभिधायानिष्टनिवृत्त्यापि तुष्यतीत्याह धन्यो-ऽहमिति। अद्य इदानीं दुःखं दुःखरूपं संसारं न वीक्षे न पश्यामि अतः कृतार्थ इत्यर्थः। दुःखाप्रतीतौ कारणमाह धन्योऽहमिति। अनेकवासनाजालमज्ञानं क्वापि पलायितं नष्टमित्यर्थः॥ २९२॥

अज्ञाननिवृत्तिफलं कृतकृत्यत्वं प्राप्तप्राप्यत्वं च दर्शयति धन्योऽह-मिति॥ २९३॥

इदानीं कृतकृत्यत्वमित्यादिना ज्ञातायास्तृप्तेर्निरतिशयत्वमाह धन्योऽहमिति। इतः परं ब्रह्मव्यादर्शनात् तृप्तिरेव परिस्फुरतीति दर्शयति धन्योऽहमिति॥ २९४॥

अस्य सर्वस्य कारणभूतपुण्यपुञ्जपरिपाकमनुस्मृत्य तुष्यतीत्याह अहो पुण्यमिति। एवंविधपुण्यस्यादृष्टमात्मानमनुस्मृत्य तुष्यतीत्याह अहो पुण्यस्येति॥ २९५॥

अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ।
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥ २९६ ॥
तृप्तिदीपमिमं नित्यं येऽनुसन्दधते बुधाः ।
ब्रह्मानन्दे निमज्जन्तस्ते तृप्यन्ति निरन्तरम् ॥ २९७ ॥

इति तृप्तिदीपः समाप्तः ।

---

## अष्टमपरिच्छेदः ।

### कूटस्थदीपः ।

---

आदित्यदीपिते कुड्ये दर्पणादित्यदीप्तिवत् ।
कूटस्थभासितो देहो धीस्थजीवेन भास्यते ॥ १ ॥

---

इदानीं सम्यग्ज्ञानसाधनं शास्त्रं तदुपदेष्टारमाचार्यं चानुस्मृत्य तुष्यन्नाह अहो शास्त्रमिति । पुनश्च शास्त्रजन्यज्ञानं तज्जन्यसुखं चानुस्मृत्य सन्तुष्यन्नाह अहो ज्ञानमिति ॥ २९६ ॥

ग्रन्थाभ्यासफलमाह तृप्तिदीपमिति ॥ २९७ ॥

इति तृप्तिदीपव्याख्या समाप्ता ।

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
कुर्वे कूटस्थदीपस्य व्याख्यां तात्पर्यदीपिकाम् ॥

मुमुक्षोर्मोक्षसाधनब्रह्मात्मैकत्वज्ञानस्य त्वंपदार्थशोधनपूर्वकत्वात् त्वंपदार्थशोधनपरं कूटस्थदीपाख्यं ग्रन्थमारभमाण आचार्योऽस्य ग्रन्थस्य वेदान्तप्रकरणत्वेन तदीयैरेव विषयादिभिस्तद्वत्तासिद्धिमभिप्रेत्य त्वंपद-

अनेकदर्पणादित्यदीप्तीनां बहुसन्धिषु।
इतरा व्यज्यते तासामभावेऽपि प्रकाशते ॥ २ ॥
चिदाभासविशिष्टानां तथानेकधियामसौ।
सन्धिं धियामभावञ्च भासयन् प्रविविच्यताम् ॥ ३ ॥

---

कथ्यमानौ कूटस्थजीवौ दृष्टान्तं भेदेन निर्दिशति आदित्येति। आदित्यदीपिते ये आदित्यः आदित्यः प्रसिद्धः सूर्य्य इत्यर्थः तेन च तत्सम्बन्ध्यालोको लक्ष्यते, तेन दीपिते प्रकाशिते कुड्ये दर्पणादित्यदीप्ति वत् दर्पणेषु निपत्य पर्य्यावृत्तैः कुड्यसम्बद्धैरादित्यरश्मिभिस्तत्प्रकाशन-मिव कूटस्थभासितः कूटस्थेनाविकारिचैतन्येन भासितः प्रकाशितो देहः धीस्थजीवेन बुद्धिस्थचिदाभासेन भास्यते प्रकाश्यते अनेन सामान्यतो विशेषतश्च कुड्यावभासकादित्यप्रकाशद्वयमिव देहावभासकचैतन्यद्वयमस्तीति प्रतिज्ञातं भवति ॥ १ ॥

ननु तत्र दर्पणादित्यदीप्तिव्यतिरेकेण आदित्यदीप्तिर्नोपलभ्यते इत्या-शङ्क्य तामव्यक्तां विविच्य दर्शयति अनेकेति। अनेका बहुदर्पणजन्याः कुड्ये तत्र तत्र मण्डलाकारविशेषप्रभा इष्यन्ते तासां सन्धौ मध्ये इतरा सामान्यप्रकाशरूपा आदित्यप्रभा व्यज्यते अभिव्यक्तोपलभ्यते तासां दर्पण-जन्याभासानामभावे दर्पणापगमादिना अपसृते च स्वयं सैव प्रका-शते ॥ २ ॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके दर्शयति चिदाभासविशिष्टानामिति। तथा तेनैव प्रकारेण चिदाभासविशिष्टानां चित्प्रतिबिम्बयुक्तानाम् अनेकधियामनेकासां बुद्धिवृत्तीनां घटज्ञानादिशब्दवाच्यानां सन्धिमन्त-रालं जाग्रदादौ धियां तासामेव बुद्धिवृत्तीनाम् अभावञ्च सुषुप्त्यादौ भासयन् प्रकाशयन्नसौ कूटस्थः प्रविविच्यतां ताभ्यो भेदेन ज्ञायता-मित्यर्थः ॥ ३ ॥

घटैकाकारधीस्था चित् घटमेवावभासयेत् ।
घटस्य ज्ञातता ब्रह्मचैतन्येनावभास्यते ॥ ४ ॥
अज्ञातत्वेन भातोऽयं घटो बुद्ध्युदयात् पुरा ।
ब्रह्मणैवोपरिष्टात् तु ज्ञातत्वेनेत्यसौ भिदा ॥ ५ ॥
चिदाभासान्तधीवृत्तिर्ज्ञानं लोहान्तकुन्तवत् ।
जाड्यमज्ञानमेताभ्यां व्याप्तः कुम्भो द्विधोच्यते ॥ ६ ॥
अज्ञातो ब्रह्मणा भास्यो ज्ञातः कुम्भस्तथा न किम् ।

---

इदानीं देहान्तःकूटस्थचिदाभासयोर्भेदप्रदर्शनाय देहाद् बहिरपि चिदाभासब्रह्मणी विभज्य दर्शयति घटैकाकारधीस्थेति । घटैकाकार-धीस्था चित् घटस्यैकस्याकार इवाकारो यस्याः सा घटैकाकारा तथा-विधायां बुद्धौ वर्त्तमानचिदाभासः घटमेकमेवावभासयेत् तस्य घटस्य ज्ञातताख्यो धर्मः घटो ज्ञात इति व्यवहारहेतुर्यः स घटकल्पनाधि-ष्ठानेन ब्रह्मचैतन्येन साधनभूतेनावभास्यते प्रकाश्यत इत्यर्थः ॥ ४ ॥

ननु ज्ञाततावभासकचैतन्येनैव घटप्रतीतिसम्भवात् बुद्धिः किमर्थे-त्याशङ्क्य घटस्य ज्ञाततादिभेदविवक्षयेत्याह अज्ञातत्वेनेति । बुद्ध्यु-दयात् पुराऽयं घटो ब्रह्मणैवाज्ञातत्वेन प्रकाशितो बुद्ध्युत्पत्तौ सत्यां ज्ञातत्वेन ब्रह्मणैव प्रकाश्यत इतीयानेव भेदः नान्य इत्यर्थः ॥ ५ ॥

नन्वेकस्यैव घटस्य ज्ञातत्वाज्ञातत्वलक्षणं द्वैरूप्यं कथं सम्भवतीत्या-शङ्क्य तदवबोधनाय ज्ञातताज्ञाततानिमित्तयोर्ज्ञानाज्ञानयोः स्वरूपं तावद् दर्शयति चिदाभासान्तधीवृत्तिरिति । चिदाभासश्चित्प्रतिबिम्बः धीऽन्ते पुरोभागे यस्याः सा धीवृत्तिर्ज्ञानम् इत्युच्यते बोधो धीवृत्तिरिति आचार्य्यैरभिधानात् । तत्र दृष्टान्तो लोहान्तकुन्तवदिति । जाड्यं स्वतः स्फूर्त्तिरहितत्वमज्ञानमित्युच्यते एताभ्यां पर्यायेण व्याप्तः सन्ततः सम्बद्धः कुम्भोऽज्ञातो ज्ञात इति चोच्यत इत्यर्थः ॥ ६ ॥

ननु अज्ञातस्य कुम्भस्याज्ञानव्याप्तत्वाद्भवतु ब्रह्मावभास्यत्वं ज्ञात-

ज्ञातत्वजननेनैव चिदाभासपरिक्षयः ॥ ७ ॥
आभासहीनया बुद्ध्या ज्ञातत्वं नैव जन्यते ।
तादृग् बुद्धेर्विशेषः को मृदादेः स्याद् विकारिणः ॥८॥
ज्ञात इत्युच्यते कुम्भो मृदा लिप्तो न कुत्रचित् ।
धीमात्रव्याप्तकुम्भस्य ज्ञातत्वं नेष्यते तथा ॥ ९ ॥
ज्ञातत्वं नाम कुम्भेऽस्मिंश्चिदाभासफलोदयः ।
न फलं ब्रह्मचैतन्यं मानात् प्रागपि सत्त्वतः ॥ १० ॥

---

अज्ञातस्य च ज्ञातस्य कुम्भस्य कुतो ब्रह्मचैतन्यावभास्यत्वमित्याशङ्क्य ज्ञानस्या-ज्ञातताजनने इव ज्ञानस्यापि ज्ञातताजननमात्रोपक्षीणत्वादज्ञातकुम्भवत् ज्ञातस्यापि ब्रह्मावभास्यत्वं भवतीत्याह अज्ञातो ब्रह्मणा भास्य इति । यथा अज्ञातः कुम्भो ब्रह्मावभास्यस्तथा ज्ञातः कुम्भो न किं ब्रह्माव-भास्यो भवति किन्तु भवत्येवेत्यर्थः । कुत इत्यत आह ज्ञातत्वेति ॥७॥

ननु ज्ञातताजननाया ज्ञानमिव ज्ञातताजननायापि बुद्ध्यैवालं किम-नेन चिदाभासेनेत्याशङ्क्य चिदाभासरहिताया बुद्धेर्घटादिवदप्रकाशरूपत्वेन ज्ञातताजननं न सम्भवतीत्याह आभासहीनयेति ॥ ८ ॥

चिदाभासरहितबुद्धिव्याप्तस्य घटस्य ज्ञातत्वाभावं दृष्टान्तप्रदर्शनेन उपपादयति ज्ञात इत्युच्यत इति । लोके कुत्रचिदपि घटः मृदा शुक्लरक्तरूपया लिप्तो लेपनं प्राप्तो ज्ञात इति नोच्यते यथा तथा चिदाभासरहित-बुद्धिव्याप्तस्य घटस्य ज्ञातत्वं नाभ्युपगन्तव्यमिति भावः ॥ ९ ॥

फलितमाह ज्ञातत्वमिति । यतः केवलाया बुद्धेर्ज्ञातत्वजनना-सामर्थ्यमतः कुम्भे चिदाभासलक्षणस्य फलस्योत्पत्तिरेव ज्ञातत्वं नाम प्रसिद्धमित्यर्थः । ननु तथापि चिदाभासो न कल्पनीयः ब्रह्मचैतन्यस्यैव फलस्य सद्भावादित्याशङ्क्याह न फलमिति । ब्रह्मचैतन्यं फलं घटादि-स्फुरणं न भवतीति । कुत इत्यत आह मानात् प्रागिति । प्रमाण-

परागर्थप्रमेयेषु या फलत्वेन सम्मता ।
संवित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥
इति वार्त्तिककारेण चित्साद‍ृश्यं विवक्षितम् ।
ब्रह्मचित्फलयोर्भेदः साहस्र्यां विश्रुतो यतः ॥ ११ ॥
आभास उदितस्तस्मात् ज्ञातत्वं जनयेद् घटे ।
तत् पुनर्ब्रह्मणा भास्यमज्ञातत्ववदेव हि ॥ १२ ॥
धीवृत्त्याभासकुम्भानां समूहो भास्यते चिता ।
कुम्भमात्रफलत्वात् स एक आभासतः स्फुरेत् ॥ १३ ॥

---

प्रवृत्तेः पूर्वमपि विद्यमानत्वात् फलस्य तु तदुत्तरकालीनत्वनियमादिति भावः ॥ १० ॥

नन्विदं परागर्थप्रमेयेष्वित्यादिसुरेश्वरवार्त्तिकविरुद्धमित्याशङ्क्य तद्विरोधानभिज्ञातस्य चोद्यमिति परिहरति परागर्थप्रमेयेष्विति । अस्य वार्त्तिकस्यायमर्थः परागर्था बाह्या घटादयः पदार्थास्तेषु प्रमेयेषु प्रमाणविषयेषु सत्सु या प्रमाणफलत्वेनाभ्युपेता संविदस्ति सैवेहास्मिन् शास्त्रे वेदान्तोक्तिप्रमाणतः वेदान्तवाक्यलक्षणप्रमाणेन मेयोऽर्थः ज्ञातव्योऽर्थः इतीति हन्तानेन वार्त्तिकेन ब्रह्मचैतन्यमहङ्कारस्थचिदाभासः प्रमाणफलत्वेन विवक्षितो न ब्रह्मचैतन्यमिति भावः । वार्त्तिककाराणामीदृशी विवक्षेति कुतोऽवगम्यते इत्याशङ्क्य तद्गुरुभिः श्रीमदाचार्य्यैरुपदेशसाहस्र्यां ब्रह्मचैतन्यचिदाभासयोर्भेदस्य प्रतिपादितत्वात् इत्याह ब्रह्मचित्फलयोरिति । ब्रह्मचिच्च फलञ्च ब्रह्मचित्फले तयोरिति विग्रहः ॥ ११ ॥

एवञ्च सति प्रकृते किमायातमित्यत आह आभास इति । यस्मात् ब्रह्मचित्फलयोर्भेदः सिद्धस्तस्मात् घटे उदितः उत्पन्नः आभासस्तत्र घटे ज्ञातत्वं जनयेत् उत्पादयेत् तज्ज्ञातत्वं पुनरज्ञातत्ववत् ब्रह्मणैव भास्यं भवति हि प्रसिद्धमित्यर्थः ॥ १२ ॥

एवं ब्रह्मचिदाभासयोर्भेदमुपपादितं विषयभेदप्रदर्शनेन स्पष्टयति

चैतन्यं द्विगुणं कुम्भे ज्ञातत्वेन स्फुरेत् ततः ।
अन्येऽनुव्यवसायाख्यमाहुरेतद् यथोदितम् ॥ १४ ॥
घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः ।
विज्ञातो घट इत्युक्तिर्ब्रह्मानुग्रहतो भवेत् ॥ १५ ॥
आभासब्रह्मणी देहात् बहिर्यद्वद् विवेचिते ।
तद्वदाभासकूटस्थौ विविच्येतां वपुष्यपि ॥ १६ ॥
अहङ्कर्त्ता चिदाभासः कामक्रोधादिकास्तु च ।
संव्याप्य वर्त्तते तप्ते लोहे वह्निर्यथा तथा ॥ १७ ॥

---

णैकत्र्येति । चिता ब्रह्मचैतन्येनेत्यर्थः चिदाभासस्य कुम्भमात्रनिष्ठफल-रूपत्वात् तेनाभासेन घट एक एव स्फुरेत् भासते इत्यर्थः ॥ १३ ॥

कुम्भस्य चिदाभासब्रह्मोभयभास्यत्वे सिद्धमाह चैतन्यमिति । ततो घटस्य ब्रह्मचिदाभासोभयभास्यत्वात् कुम्भे ज्ञातत्वेन द्विगुणं चैतन्यं भाति इदमेव घटज्ञाततावभासकं चैतन्यं तार्किकैर्नामान्तरेण व्यवह्रियते इत्याह अन्येऽनुव्यवसायाख्यमिति । यथोदितं यथोक्तमेतदेव ब्रह्मचैतन्यमन्ये तार्किका अनुव्यवसायाख्यं नामान्तरं प्राहुरिति योजना ॥ १४ ॥

अयं घट इति ज्ञातो घट इति च व्यवहारभेदादपि चिदाभासब्रह्मणोर्भेदोऽवगन्तव्य इत्याह घटोऽयमित्यसाविति ॥ १५ ॥

देहाद् बहिश्चिदाभासब्रह्मणी विविच्येते यथा तथा देहान्तश्चिदाभासकूटस्थौ विवेचनीयावित्याह आभासब्रह्मणी देहादिति ॥ १६ ॥

ननु देहाद् बहिश्चिदाभासस्य व्याप्यघटाकारवृत्तिवद्देहान्तर्विषयगोचरवृत्त्यभावात् कथं तद्व्यापकचिदाभासोऽभ्युपगम्यते इत्याशङ्क्य विषयगोचरवृत्त्यभावेऽपि कामादिवृत्तिसद्भावात् तद्व्यापकचिदाभासोऽभ्युपगन्तुं शक्यते इति दृष्टान्तेनाह अहंकर्त्तेति ॥ १७ ॥

स्वमात्रं भासयेत् तस्मं सोऽहं नान्यत् कदाचन ।
एवमाभाससहिता वृत्तयः स्वस्वभासिकाः ॥ १८ ॥
क्रमाद् विच्छिद्य विच्छिद्य जायन्ते वृत्तयोऽखिलाः ।
सर्व्वा अपि विलीयन्ते सुप्तिमूर्च्छासमाधिषु ॥ १९ ॥
सन्धयोऽखिलवृत्तीनामभावाश्चावभासिताः ।
निर्विकारेण येनासौ कूटस्थ इति गीयते ॥ २० ॥
घटे द्विगुणचैतन्यं यथा बाह्ये तथान्तरे ।
वृत्तिष्वपि ततस्तत्र वैशद्यं सन्धितोऽधिकम् ॥ २१ ॥
ज्ञातताज्ञातते न स्तो घटवद् वृत्तिषु क्वचित् ।

---

अहमादिवृत्तीनामेव चिदाभासभास्यत्वं दृष्टान्तप्रदर्शनेन स्पष्टयति स्वमात्रमिति ॥ १८ ॥

एवं चिदाभासं व्युत्पाद्य कूटस्थस्वरूपं व्युत्पादयितुं तदुपयोगिनं वृत्त्यभावावसरं दर्शयति क्रमाद् विच्छिद्येति ॥ १९ ॥

भवत्वेवं सुषुप्त्यादौ वृत्तिविलयोऽनेन कथं कूटस्थोऽवगम्यते इत्याशङ्क्य वृत्त्यभावसाक्षित्वेनावगम्यत इत्याह सन्धयोऽखिलवृत्तीना-मिति । वृत्तिसन्धयो वृत्त्यभावाश्च येन चैतन्येनावभास्यन्ते स कूटस्थोऽव-गन्तव्य इत्यर्थः ॥ २० ॥

एवं सति किं फलितमित्यत आह घटे द्विगुणेति । बाह्ये घटे यथा घटव्याप्तावभासकचिदाभासः घटस्य ज्ञाततावभासकं ब्रह्मचैतन्यञ्चेति चैतन्यद्वैगुण्यं तथान्तरेऽहङ्कारादिवृत्तिष्वपि कूटस्थचैतन्यं वृत्त्यवभासक-चिदाभासश्चेति द्विगुणं चैतन्यमस्ति । ततोऽपपत्तिमाह ततस्तत्र वैशद्य-मिति । यतो द्विगुणं चैतन्यमस्ति ततः सन्धितः सन्धिभ्यस्तत्र वृत्तिषु वैशद्यमधिकं दृश्यत इति शेषः ॥ २१ ॥

ननु इतो घटादिष्विव ज्ञातताभासकत्वेन कूटस्थ किं नेष्यत

स्वस्य स्वेनागृहीतत्वात् ताभिश्चाज्ञाननाशनात् ॥२२॥
द्विगुणीकृतचैतन्ये जन्मनाशानुभूतितः ।
अकूटस्थं तदन्यत् तु कूटस्थमविकारितः ॥ २३ ॥
अन्तःकरणतद्वृत्तिसाक्षीत्यादावनेकधा ।
कूटस्थ एव सर्व्वत्र पूर्व्वाचार्य्यैर्विनिश्चितः ॥ २४ ॥
आत्माभासाश्रयाश्चैवं मुखाभासाश्रया यथा ।
गम्यन्ते शास्त्रयुक्तिभ्यामित्याभासश्च वर्णितः ॥ २५ ॥

---

इत्याशङ्क्य तत्र ज्ञातताद्यभावार्थेत्याह ज्ञातताज्ञाततेनेति । तत्रोपपत्तिमाह स्वस्य स्वेनागृहीतत्वादिति । ज्ञानाज्ञानव्याप्तिभ्यां ज्ञातताज्ञातते भवतः वृत्तीनान्तु स्वप्रकाशत्वेन ज्ञानव्याप्तिर्नास्ति ताभिः वृत्तिभिश्चोत्पत्तिमात्रेण स्वगोचराज्ञानस्य निवर्त्तितत्वात् अज्ञानस्य व्याप्तिर्नास्तीति भावः ॥ २२ ॥

ननु कूटस्थचिदाभासयोरुभयोरपि चित्त्वे समाने एकस्य कूटस्थत्वमपरस्याकूटस्थत्वमित्येतत् कुत इत्याशङ्क्य चिदाभासनिष्ठयोर्जन्मनाशयोरनुभूयमानत्वादस्याकूटस्थत्वं इतरस्य विकारित्वे प्रमाणाभावात् कूटस्थत्वमित्याह द्विगुणीकृतेति ॥ २३ ॥

चिदाभासव्यतिरिक्तकूटस्थाभ्युपगमः स्वकपोलकल्पित इत्याशङ्क्याचार्य्यैश्च कूटस्थस्योपपादितत्वान्नैवमित्याह अन्तःकरणेति । अन्तःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः । आनन्दरूपः सत्यः सन् किं नात्मानं प्रपद्यसे इत्यादावित्यर्थः ॥ २४ ॥

कूटस्थातिरिक्तचिदाभासोऽपि तैर्वर्णित इत्याह आत्माभासेति । आत्मा च आत्माभासश्च आश्रयश्च आत्माभासाश्रयाः इति द्वन्द्वसमासः । मुखाभासाश्रया इत्यत्रापि तथा मुखं प्रतिबिम्बाभासो मुखप्रतिबिम्बाश्रयो दर्पणादिश्चेति त्रयं यथा प्रत्यक्षेणावगम्यते एवमात्मा कूटस्थ

बुद्ध्यवच्छिन्नकूटस्थो लोकान्तरगमागमौ ।
कर्तुं शक्तो घटाकाश इवाभासेन किं वद ॥ २६ ॥
शृण्वसङ्गः परिच्छेदमात्राज्जीवो भवेन्न हि ।
अन्यथा घटकुड्याद्यैरवच्छिन्नस्य जीवता ॥ २७ ॥
न कुड्यसदृशी बुद्धिः स्वच्छत्वादिति चेत् तथा ।
अस्तु नाम परिच्छेदे किं स्वाच्छ्येन भवेत् तव ॥ २८ ॥
प्रस्थेन दारुजन्येन कांस्यजन्येन वा न हि ।
विक्रेतुस्तण्डुलादीनां परिमाणं विशिष्यते ॥ २९ ॥

---

आभासश्चिदाभास आश्रयोऽन्तःकरणादिरिति द्वयोरपि शास्त्रयुक्तिभ्या-मवगम्यत इत्यर्थः । अत्र च आभासशब्देन कूटस्थातिरिक्तचिदाभासो विवक्षित इति भावः मनसः साक्षी बुद्धेश्च साक्षीति बुद्धिसाक्षिणः प्रति-पादकं शास्त्रं रूपं रूपं प्रतिरूपो बभूव इति चिदाभासप्रतिपादकं, विकारित्वाविकारित्वादिरूपा युक्तिः पूर्वमेवोक्तेति भावः ॥ २५ ॥

तत्र चिदाभासमाक्षिपति बुद्ध्यवच्छिन्नेति । त्वन्मते कल्पनया बुद्ध्यवच्छिन्नः कूटस्थ एव घटद्वारा घटाकाश इव बुद्धिद्वारा लोका-न्तरे गमनागमने कर्तुं शक्नोति अतश्चिदाभासकल्पनायां गौरवमिति भावः ॥ २६ ॥

असङ्गस्य कूटस्थस्य बुद्ध्यवच्छेदमात्रेण जीवत्वं न घटतेऽन्यथाति-प्रसङ्गादिति परिहरति शृण्वसङ्ग इति ॥ २७ ॥

बुद्धिकुड्ययोः स्वाच्छ्यास्वाच्छ्याभ्यां वैषम्यं शङ्कते न कुड्यसदृशीति । उक्तं स्वच्छत्वं परिच्छेदप्रयोजकं न भवतीत्याह तथेति ॥ २८ ॥

उक्तमर्थं दृष्टान्तेन स्पष्टयति प्रस्थेनेति । दारुकांस्यजन्ययोः प्रस्थयोः स्थितेऽपि स्वच्छत्वास्वच्छत्वे तण्डुलपरिमाणे न्यूनाधिकभावहेतु-र्न भवत इत्यर्थः ॥ २९ ॥

परिमाणाविशेषेऽपि प्रतिबिम्बो विशिष्यते।
कांस्ये यदि तदा बुद्धावप्याभासो भवेद्बलात् ॥ ३० ॥
ईषद्भासनमाभासः प्रतिबिम्बस्तथाविधः।
बिम्बलक्षणहीनः सन् बिम्बवद्भासते स हि ॥ ३१ ॥
ससङ्गत्वविकाराभ्यां बिम्बलक्षणहीनता।
स्फूर्त्तिरूपत्वमेतस्य बिम्बवद्भासनं विदुः ॥ ३२ ॥
न हि धीभावभावित्वादाभासोऽस्ति धियः पृथक्।
इति चेदल्पमेवोक्तं धीरप्येवं स्वदेहतः ॥ ३३ ॥

---

कांस्यमये तत्तुल्यपरिमाणाधिक्याभावेऽपि प्रतिबिम्बलक्षणमाधिक्यमस्तीत्याशङ्क्य तर्हि बुद्धावपि चिदाभासो भवत्वेवाङ्गीकृतः स्यादित्याह परिमाणाविशेषेऽपीति ॥ ३० ॥

प्रतिबिम्बाङ्गीकारे चिदाभासः कथमुच्यत इत्याशङ्क्य प्रतिबिम्बाभासशब्दाभ्यामभिधेयस्यार्थस्यैक्यादित्याह ईषद्भासनमाभास इति। प्रतिबिम्बस्याभासत्वं कथमित्याशङ्क्याभासलक्षणयोगादित्याह बिम्बलक्षणहीन इति। हि यस्मात् कारणात् प्रतिबिम्बो बिम्बलक्षणरहितोऽपि बिम्बवदवभासते अतो बिम्बाभास इति भावः ॥ ३१ ॥

आभासलक्षणयोर्विषयमेव स्पष्टयति ससङ्गत्वविकाराभ्यामिति। एतस्य चिदाभासस्य ससङ्गत्वविकारित्वाभ्यां बिम्बभूतादसङ्गाविकारिचैतन्यलक्षणहीनत्वं स्फुरणरूपत्वं बिम्बवदवभासमानत्वमित्यर्थः, चैतन्यलक्षणरहितो चैतन्यवदवभासमानो चैतन्याभास इतिवत् ॥ ३२ ॥

एवं चिदाभासस्यापरोक्षत्वं निरूप्य इदानीं तस्य बुद्धेः पृथक् सत्त्वं साधयितुं पूर्वपक्षमाह न हि धीभावभावित्वादिति। यथा मृदि सत्त्वामेव भवन् घटो न मृदो भिद्यते तद्वदिति भावः। नन्वेवं तर्हि

देहे मृतेऽपि बुद्धिश्चेत् शास्त्रादस्ति तथा सति ।
बुद्धेरन्यश्चिदाभासः प्रवेशश्रुतिषु श्रुतः ॥ २४ ॥
धीयुक्तस्य प्रवेशश्चेन्नैतरेये धियः पृथक् ।
आत्मा प्रवेशं सङ्कल्प्य प्रविष्ट इति गीयते ॥ २५ ॥
कथं न्विदं साक्षदेहं मदृते स्यादितीरणात् ।
विदार्य्य मूर्ध्नः सीमानं प्रविष्टः संसरत्ययम् ॥ २६ ॥
कथं प्रविष्टोऽसङ्गश्चेत् सृष्टिर्वास्य कथं वद ।
मायिकत्वं तयोस्तुल्यं विनाशश्च समस्तयोः ॥ २७ ॥

---

देहातिरिक्ता धीरपि न सिध्येदिति प्रतिबन्द्या परिहरति बुद्धिमेवोक्त-मिति ॥ २३ ॥

प्रतिबन्दीमेवोपपादयति देहे मृतेऽपीति । देहव्यतिरिक्ताया बुद्धेः बहिर्गमनं भवतीत्यादिकं तत्र स्वस्यापि समत्वमिति भावः । ननु श्रुति-बलात् देहातिरिक्ता बुद्धिरभ्युपगम्यते चेत् तर्हि प्रवेशश्रुतिबलात् बुद्ध्य-तिरिक्तचिदाभासोऽप्यभ्युपेय इत्याह तथा सतीति ॥ २४ ॥

ननु बुद्ध्युपाधिकस्यैव प्रवेशो युज्यते नेतरस्येति शङ्कते धीयुक्तस्य प्रवेशश्चेदिति । ऐतरेयश्रुतौ बुद्ध्यतिरिक्तस्यैव प्रवेशश्रवणात् नैवमिति परिहरति नैतरेय इति ॥ २५ ॥

श्रुतिमर्थतः पठति कथं न्विदमिति । अयं परमात्मा साक्षदेहस्य ममापि च देहाद्यध्यक्षस्य यद्वा वर्तते इति साक्षदेहमिदं सङ्घातं मदृते चेतनं मां विहाय कथं नु स्यात् कथमपि न सिध्येदिति विचार्य्य मूर्ध्नः सीमानं कपालत्रयमध्यदेशं विदार्य्य स्वशक्तिविशेषेणैव भित्त्वा प्रविष्टः सन् संसरति जाग्रदादिकमनुभवतीत्यर्थः ॥ २६ ॥

ननु असङ्गस्यात्मनः प्रवेशो न युक्त इति शङ्कते कथं प्रविष्ट इति । इदं चोद्यं सृष्टावपि समानमित्याह सृष्टिर्वेति । सृष्टिवत्प्रवेशोऽपि मायिक-

समुत्थायैव भूतेभ्यस्तान्येवानुविनश्यति ।
विस्पष्टमिति मैत्रेय्यै याज्ञवल्क्य उवाच हि ॥ ३८ ॥
अविनाश्ययमात्मेति कूटस्थः प्रविवेचितः ।
मात्रासंसर्ग इत्येवमसङ्गत्वस्य कीर्त्तनात् ॥ ३९ ॥
जीवापेतं वाव किल शरीरं म्रियते न सः ।
इत्यत्र न विमोक्षोऽर्थः किन्तु लोकान्तरे गतिः ॥ ४० ॥

---

स्यात् न दोष इत्याशङ्क्यायं परिहारः प्रवेशेऽपि समान इत्याह मायि-कत्वमिति । अनयोर्मायिकत्वे हेतुश्च सम इत्याह विनाशश्च समस्तयो-रिति ॥ ३७ ॥

प्रज्ञानघन एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति औपाधिकरूपविनाशप्रतिपादिकां श्रुतिं दर्शयति समुत्था-येति । एष प्रज्ञानघन आत्मा एतेभ्यो देहेन्द्रियादिरूपेभ्यः पञ्चभूत-कार्येभ्यो निमित्तभूतेभ्य उपाधिभ्यः समुत्थाय जीवत्वाभिमानं प्राप्य तान्येव देहादीनि विनश्यन्ति अनुविनश्यति तेषु विनश्यत्सु तद्गतं जीवत्वाभिमानं जहाति एवं प्रकारेण सोपाधिकरूपस्य विनाशित्वं याज्ञवल्क्यो मैत्रेय्यै उक्तवानित्यर्थः ॥ ३८ ॥

अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा इति श्रुत्या कूटस्थ-स्ततो विभिन्नः प्रदर्शित इत्याह अविनाश्ययमात्मेति । मात्रासंसर्गस्त्वस्य भवतीति श्रुत्या अविनाशित्वे हेतुमसङ्गत्वमुक्तवानित्याह मात्रेति । भौतिका इति मात्रा देहादयस्तैरस्यात्मनोऽसंसर्गो भवतीत्यर्थः ॥ ३९ ॥

ननु जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते इति श्रुत्याप्यौ-पाधिकस्याप्यविनाशित्वं प्रतिपादितम् इत्याशङ्क्य तस्याः श्रुतेर्देहान्तर-प्राप्तिविषयतया नात्यन्तिकनाशाभावपरत्वमित्याह जीवापेतमिति । जीवापेतं जीवरहितं जीवेन त्यक्तमिति यावत् वाव एव स जीवो न म्रियते इत्यर्थः ॥ ४० ॥

नाहं ब्रह्मेति बुध्येत स विनाशीति चेन्न तत्।
सामानाधिकरण्यस्य बाधायामपि सम्भवात्॥ ४१॥
योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव।
ब्रह्मास्मीति धिया शेषा ह्यहंबुद्धिर्निवर्त्तते॥ ४२॥
नैष्कर्म्यसिद्धावप्येवमाचार्य्यैः स्पष्टमीरितम्।
सामानाधिकरण्यस्य बाधार्थत्वं ततोऽस्तु तत्॥ ४३॥
सर्वं ब्रह्मेति जगता सामानाधिकरण्यवत्।
अहं ब्रह्मेति जीवेन सामानाधिकृतिर्भवेत्॥ ४४॥

---

ननु जीवस्य विनाशित्वेऽहं ब्रह्मास्मीत्यविनाशिब्रह्मतादात्म्यज्ञानं न घटत इत्याह नाहं ब्रह्मेतीति। विनाशी स जीवोऽहं ब्रह्मेति ब्रह्मरूपेणात्मानं न बुध्येत न जानीयात् विनाश्यविनाशिनोरैक्य-विरोधादिति चेत् मुख्यसामानाधिकरण्याभावेऽपि बाधायां सामाना-धिकरण्यसम्भवात् जीवभावबाधेन ब्रह्मभावोऽवगन्तुं शक्यते इत्याह न तदिति॥ ४१॥

बाधायां सामानाधिकरण्येन वाक्यार्थप्रतिपत्तिप्रकारो वार्त्तिककारैः स्पष्टमभिहित इतीममर्थं तद्वाक्योदाहरणपूर्वकं दर्शयति योऽयं स्थाणुरिति। अयं स्थाणुरेव पुमान् इत्यस्मिन् वाक्ये पुरुषत्वबोधेन स्थाणुत्वबुद्धिर्यथा निवर्त्तते एवमहं ब्रह्मास्मीति बोधेनाहंबुद्धिः कर्त्ता-हमस्मीति एवमादिरूपा सर्वा निवर्त्त्या स्यात् इति॥ ४२॥

नैष्कर्म्येति। एतदुक्तेन प्रकारेणाचार्य्यैर्वार्त्तिककारैर्नैष्कर्म्यसिद्धौ सामानाधिकरण्यस्य बाधार्थत्वं स्पष्टमीरितमिति। फलितमाह ततो-ऽस्त्विति। ततः कारणात् ब्रह्माहमस्मीति वाक्ये तद्रूपसामानाधि-करण्यस्य बाधार्थत्वमस्त्वित्यर्थः॥ ४३॥

नन्वेवमपि श्रुतिषु बाधायां सामानाधिकरण्यं न क्वापि दृष्ट-

सामानाधिकरण्यस्य बाधार्थत्वं निराकृतम् ।
प्रयत्नतो विवरणे कूटस्थत्वविवक्षया ॥ ४५ ॥
शोधितस्त्वम्पदार्थो यः कूटस्थो ब्रह्मरूपताम् ।
तस्य वक्तुं विवरणे तथोक्तमितरत्र च ॥ ४६ ॥
देहेन्द्रियादियुक्तस्य जीवाभासभ्रमस्य या ।
अधिष्ठानचितिः सैषा कूटस्थात्र विवक्षिता ॥ ४७ ॥
जगद्भ्रमस्य सर्वस्य यदधिष्ठानमीरितम् ।
त्रय्यन्तेषु तदत्र स्यात् ब्रह्मशब्दविवक्षितम् ॥ ४८ ॥

---

मित्याशङ्क्य सर्वं खल्विदं ब्रह्म इत्यत्र बाधायां सामानाधिकरण्यं दृष्टमतोऽत्रापि तद्भविष्यति इत्याह सर्वं ब्रह्मेतीति ॥ ४४ ॥

ननु तर्हि विवरणाचार्यैर्बाधायां सामानाधिकरण्यं कुतो निराकृतमित्याशङ्क्य तैस्तत्र कूटस्थस्य विवक्षितत्वादित्याह सामानाधिकरण्यस्येति ॥ ४५ ॥

कूटस्थत्वविवक्षयेत्युक्तमर्थं विवृणोति शोधितस्त्वमिति । शोधितः बुद्ध्यादिभ्यो विवेचितस्त्वंपदलक्ष्यो यः कूटस्थः वक्ष्यमाणलक्षणस्तस्य ब्रह्मस्वरूपतां कूटस्थलक्षणब्रह्मरूपतां वक्तुं विवरणादिषु बाधया सामानाधिकरण्यनिराकरणपूर्वकं मुख्यसामानाधिकरण्यमुक्तमित्यर्थः ॥ ४६ ॥

इदानीं कूटस्थस्य ब्रह्मणैक्यं सम्पादयितुं कूटस्थशब्देन विवक्षितमर्थमाह देहेन्द्रियादियुक्तस्येति । आदिशब्देन मनआदयो गृह्यन्ते । तथा च देहेन्द्रियादियुक्तस्य शरीरद्वयावच्छिन्नस्य जीवाभासभ्रमस्य चिदाभासरूपभ्रमस्य या अधिष्ठानचितिः यदधिष्ठानचैतन्यमस्ति तदत्र वेदान्तेषु कूटस्थत्वेन विवक्षितमित्यर्थः ॥ ४७ ॥

ब्रह्मशब्दस्य चार्थमाह जगद्भ्रमस्येति । जगद्भ्रमजनकस्याधि-

एतस्मिन्नेव चैतन्ये जगदारोप्यते यदा ।
तदा तदेकदेशस्य जीवाभासस्य का कथा ॥ ४९ ॥
जगत्तदेकदेशाख्यसमारोप्यस्य भेदतः ।
तत्त्वम्पदार्थौ भिन्नौ स्तो वस्तुतस्त्वेकता चितः ॥ ५० ॥
कर्तृत्वादीन् बुद्धिधर्मान् स्फूर्त्याख्याञ्चात्मरूपताम् ।
दधद् विभाति पुरत आभासोऽतो भ्रमो भवेत् ॥ ५१ ॥
का बुद्धिः कोऽयमाभासः को वात्मा जगत् कथम् ।
इत्यनिर्णयतो मोहः सोऽयं संसार इष्यते ॥ ५२ ॥

ज्ञाने यच्चैतन्यं वेदान्तेषु निरूपितं तदत्र ब्रह्मशब्देन विवक्षित-मित्यर्थः ॥ ४८ ॥

ननु जीवभ्रमाधिष्ठानचैतन्यं कूटस्थ इत्युक्तमनुपपन्नं जीव-स्यारोपितत्वासिद्धेरित्याशङ्क्यास्यारोपितत्वं कैमुतिकन्यायेन साधयति एतस्मिन्नेवेति । जगदेकदेशत्वञ्च अनेन जीवेनात्मनानुप्रविश्य इत्यादि-श्रुतिसिद्धम् ॥ ४९ ॥

ननु जगदधिष्ठानचैतन्यस्यैकत्वात् तत्त्वंपदार्थभेदाभावे तत्त्वंपदार्थयोः पौनरुक्त्यमित्याशङ्क्य तयोरौपाधिकभेदो वास्तवमैक्यमित्याह जगत्-तदेकदेशाख्येति । जगदिति तदेकदेश इति च आख्या यस्य समा-रोप्यस्य तत् तथा जातावेकवचनम् ॥ ५० ॥

ननु चिदाभासस्य शुक्तिकारजतवदधिष्ठानारोप्योभयधर्मवत्त्वा-नुपलम्भात् कथमारोपितत्वमित्याशङ्क्याह कर्तृत्वादीनिति । बुद्ध्यु-पाधिद्वारा समारोप्यमाणान् कर्तृत्वभोक्तृत्वप्रमातृत्वादीन् स्फुरण-लक्षणमात्मरूपत्वञ्च दधत् पुरतो भाति स्पष्टं प्रतिभासते अत आभासः कल्पित इत्यर्थः ॥ ५१ ॥

अथ भ्रमस्य किं कारणमित्याकाङ्क्षायां बुद्ध्यादिस्वरूपापरिज्ञान-

इति शैवपुराणेषु कूटस्थः प्रविवेचितः।
जीवेशत्वादिरहितः केवलः स्वप्रभः शिवः ॥ ५८ ॥
मायाभासेन जीवेशौ करोतीति श्रुतत्वतः।
मायिकावेव जीवेशौ स्वच्छौ तौ काचकुम्भवत् ॥ ५९ ॥

---

स्वगतत्वेनाधिष्ठानत्वेन सत्यः सर्वस्य जडस्य साधकत्वेनावभासकत्वात् चिद्रूपः सर्वदा प्रेमविषयत्वादानन्दरूपः सर्वार्थावभासकत्वेन सर्वसम्बन्धित्वात् संपूर्ण इत्युच्यते अत चेदमभिप्रेतं विमतः शिवो इन्द्रादिभ्योऽभिद्यते इन्द्रादिसाक्षित्वात् यद् यद् इन्द्रादिभ्यो न भिद्यते तत् तदिन्द्रादिसाक्षि न भवति यथा इन्द्रादिः विमतः सत्यो भवितुमर्हति मिथ्याधिष्ठानत्वात् असत्यरजताधिष्ठानशुक्तिवत् विमतश्चिद्रूपः जडमात्रावभासकत्वात् यत् चिद्रूपं न भवति तत् सर्वं जडावभासकमपि न भवति यथा घटादिः विमतः परमानन्दरूपः परप्रेमास्पदत्वात् यत् परमानन्दरूपं न भवति तत् परप्रेमास्पदमपि न भवति यथा घटादिः विमतः परिपूर्णः सर्वसम्बन्धित्वात् गगनवत् सर्वसम्बन्धित्वञ्च सर्वार्थावभासकत्वेन, विमतः सर्वसम्बन्धवान् सर्वावभासकत्वात् यः सर्वसम्बन्धवान् न भवति स सर्वावभासको न भवति यथा दीपादिरिति ॥ ५५ ॥ ५६ ॥ ५७ ॥

उदाहृतपुराणवाक्यस्य तात्पर्यमाह इति शैवपुराणेष्विति। इत्येवं प्रकारेण सूतसंहितादिपुराणेषु जीवेश्वरत्वादिकल्पनारहितः केवलोऽद्वितीयः स्वप्रकाशरूपचैतन्यस्वरूपः शिवः कूटस्थो विवेचित इत्यन्वयः ॥ ५८ ॥

जीवेश्वरत्वादिरहितत्वं कुत इत्याशङ्क्य श्रुत्या तयोर्मायिकत्वप्रदर्शनादित्याह मायाभासेन जीवेशाविति। जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुतिः मायाविद्याधीनयोर्विद्याभावयोर्मायिकत्वं प्रतिपादयतीति भावः। मायिकत्वे तयोर्देहादिभ्यो वैलक्षण्यं न स्यादित्याशङ्क्य पार्थिवत्वाविशेषेऽपि काचकुम्भस्य घटा-

घटजन्यं मनोदेहात् स्वच्छं यद्वत् तथैव तौ ।
मायिकावपि सर्वस्मादन्यस्मात् स्वच्छतां गतौ ॥ ६० ॥
चिद्रूपत्वञ्च सम्भाव्यं चित्त्वेनैव प्रकाशनात् ।
सर्वकल्पनशक्ताया मायाया दुष्करं न हि ॥ ६१ ॥
अस्मन्निद्रापि जीवेशौ चेतनौ स्वप्नगौ सृजेत् ।
महामाया सृजत्येतावित्याश्चर्यं किमत्र ते ॥ ६२ ॥
सर्वज्ञत्वादिकञ्चेशे कल्पयित्वा प्रदर्शयेत् ।
धर्मिणं कल्पयेद् यास्याः को भारो धर्मकल्पने ॥ ६३ ॥
कूटस्थेऽप्यतिशङ्का स्यादिति चेन्मातिशङ्क्यताम् ।
कूटस्थमायिकत्वे तु प्रमाणं न हि वर्त्तते ॥ ६४ ॥

---

दिभ्यो वैलक्षण्यमिवानयोरपि स्यादित्याह स्वच्छौ तौ कायकुड्या-दिति ॥ ५८ ॥

ननु घटकाशकुम्भाम्बरयोर्मृद्विकारयोर्भेदात् तद्वैलक्षण्यमुचितं जलगतजीवेश्वरभेदयोस्तु मायायाः एकत्वात् तयोर्जगतो वैलक्षण्यमनुचित-मित्याशङ्क्य घटजन्ययोर्दृष्टान्तयोर्यथा वैलक्षण्यं तद्वदत्र च इष्ट-मस्त्विति ॥ ६० ॥

भवतु काचादिवत् स्वच्छत्वं चित्त्वं कुत इत्याशङ्क्याऽनुभावादिनाऽपि चिद्रूपत्वमिति । चित्त्वेन प्रकाशनमपि मायिकयोरनुपपन्नमित्याशङ्क्य सकलदुर्घटकारिण्याः दुर्घटकारित्वाच्च नाऽनुपपन्नमिति ॥ ६१ ॥

अस्मदर्थं जीवेशनिर्माणेन दृढयति अस्मन्निद्रेति ॥ ६२ ॥

ईश्वरस्यापि मायिकत्वे तस्य जीववदसर्वज्ञत्वादिकं स्यादित्याशङ्क्य सर्वज्ञत्वादिकमपि मायैव कल्पयतीत्याह सर्वज्ञत्वादिकमिति । तस्योप-पत्तिमाह धर्मिणमिति ॥ ६३ ॥

ननु जीवेश्वरयोरिव कूटस्थस्यापि मायिकत्वं प्रसज्येत इति शङ्कते

ब्रह्मत्वं बोधयन्त्यस्य वेदान्ताः सकला अपि ।
सपत्नरूपं वस्त्वन्यन्न सहन्तेऽत्र किञ्चन ॥ ६५ ॥
श्रुत्यर्थं विशदीकुर्मो न तर्कान् वच्मि किञ्चन ।
तेन तार्किकशङ्कानामत्र कोऽवसरो वद ॥ ६६ ॥
तस्मात् कुतर्कं सन्त्यज्य मुमुक्षुः श्रुतिमाश्रयेत् ।
श्रुतौ तु मायाजीवेशौ करोतीति प्रदर्शितम् ॥ ६७ ॥
ईक्षणादिप्रवेशान्ता सृष्टिरीशकृता भवेत् ।
जाग्रदादिविमोक्षान्तः संसारो जीवकर्तृकः ॥ ६८ ॥
असङ्ग एव कूटस्थः सर्वदा नास्य कश्चन ।
भवत्यतिशयस्तेन मनस्येवं विचार्यताम् ॥ ६९ ॥

---

कूटस्थेऽप्यतिशङ्का स्यादिति । प्रमाणाभावान्नैवमिति परिहरति नेति ॥ ६४ ॥

कूटस्थस्य ब्रह्मत्वेऽपि प्रमाणं नोपलभ्यत इत्याशङ्क्य श्रुतयः सर्वा अपि प्रमाणमित्याह ब्रह्मत्वं बोधयन्त्यस्येति । अत्र कूटस्थस्य पारमार्थिकत्वप्रतिपक्षभूतमन्यद् वस्तु किञ्चन न सहन्त इत्यर्थः ॥ ६५ ॥

ननु कूटस्थस्य जीवेश्वरयोश्च वास्तवत्वावास्तवत्वसाधने श्रुतय एव पठन्ते न तर्कैः किञ्चिदपि साध्यत इत्याशङ्क्य मुमुक्षूणां श्रुत्यर्थविशदीकरणाय प्रवृत्तत्वात् न तर्कोपन्यास इत्याह श्रुत्यर्थं विशदीकुर्म इति ॥ ६६ ॥

ततः किमित्यत आह तस्मात् कुतर्कं सन्त्यज्येति । मुमुक्षुणा श्रुत्यर्थः कीदृशोऽनुसन्धेय इत्याह श्रुताविति ॥ ६७ ॥

ईक्षणादीति ॥ ६८ ॥

असङ्ग इति श्रुतिषु जीवेशयोर्निरूपणमीक्षणादिप्रवेशान्तायाः सृष्टेरीश्वरकर्तृत्वं जाग्रदाद्युपक्रमविमोक्षपर्यन्तस्य संसारस्य जीव-

न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ७० ॥
अवाङ्मनसगम्यन्तं श्रुतिर्बोधयितुं सदा ।
जीवमीशं जगद्वापि समाश्रित्यावबोधयेत् ॥ ७१ ॥
यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैव प्रक्रियेह स्यात् साध्वीत्याचार्य्यभाषितम् ॥७२॥
श्रुतितात्पर्य्यमखिलमबुद्ध्वा भ्राम्यते जडः ।
विवेकी त्वखिलं बुद्ध्वा तिष्ठत्यानन्दवारिधौ ॥ ७३ ॥
मायामेघो जगन्नीरं वर्षत्वेष यथा तथा ।

---

कर्तृत्वं कूटस्थस्यासङ्गत्वादिकं श्रुति जन्मादिलक्षणस्य व्यवहारजात-स्याभावञ्च प्रतिपादितम् अतो मुमुक्षुरिममर्थं सर्वदा विचारयेदित्यभिप्रायः ॥ ६९ ॥

कूटस्थस्य जन्माद्यतिशयाभावः कुतोऽवगम्यते इत्याशङ्क्य श्रुतिवाक्यादित्यभिप्रेत्य तद्वाक्यं पठति न निरोधो न चोत्पत्तिरिति ॥ ७० ॥

ननु तर्हि श्रुतिषु तत्र तत्र जीवेश्वरादिस्वरूपप्रतिपादनं किमर्थमित्याशङ्क्य अवाङ्मनसगोचरस्यात्मनोऽवबोधनार्थमित्याह अवाङ्मनसगम्यमिति ॥ ७१ ॥

ननु तत्त्वस्यैकरूपत्वे श्रुतिबोध्यत्वे श्रुतिषु विगानं कुतो दृश्यते इत्याशङ्क्य न तत्त्वे विगानमस्ति अपि तु तद्बोधनप्रकारे तदपि बोध्यपुरुषचित्तवैचित्र्यानुसारेण सुरेश्वराचार्य्यैरुक्तमित्याह यया ययेति ॥ ७२ ॥

श्रुत्यर्थस्यैकरूपत्वे तत्प्रतिपादकानामेव कुतो विप्रतिपत्तिरित्याशङ्क्य श्रुतितात्पर्यबोधशून्यानामेव विप्रतिपत्तिर्न तु तद्विदामित्याह श्रुतितात्पर्यमिति ॥ ७३ ॥

चिदाकाशस्य नो हानिर्न वा लाभ इति स्थितिः ॥७४॥
इमं कूटस्थदीपं योऽनुसन्धत्ते निरन्तरम् ।
स्वयं कूटस्थरूपेण दीप्यतेऽसौ निरन्तरम् ॥ ७५ ॥

इति कूटस्थदीपः समाप्तः ।

---

## नवमपरिच्छेदः ।

---

### ध्यानदीपः ।

संवादिभ्रमवद् ब्रह्मतत्त्वोपास्त्यापि मुच्यते ।
उत्तरे तापनीयेऽतः श्रुतोपास्तिरनेकधा ॥ १ ॥

---

तर्हि विवेकिनो निश्चयः कीदृश इत्याकाङ्क्षायामाह मायामेघो जगन्नीरमिति ॥ ७४ ॥

ग्रन्थाभ्यासफलमाह इमं कूटस्थदीपमिति ॥ ७५ ॥

इति कूटस्थदीपव्याख्या समाप्ता ।

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
क्रियते ध्यानदीपस्य व्याख्या संक्षेपतो मया ॥

इह तावद् वेदान्तशास्त्रे नित्यानित्यवस्तुविवेकादिसाधनचतुष्टय-सम्पन्नस्य सम्यक् श्रवणमनननिदिध्यासनानुष्ठानवतस्त्वंपदार्थविवेचन-पूर्वकमहावाक्यार्थापरोक्षज्ञानेन ब्रह्मभावलक्षणमोक्षो भवतीति प्रति-पादितं तत्र श्रुतोपनिषत् कस्यापि बुद्धिमान्द्यादिना केनचित् प्रतिबन्धेन वाक्यविचारापरोक्षमविद्यमानत्वतो तस्य तदुत्पादनार्थं मोक्षफलकोपा-

मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥ २ ॥
दीपोऽपवरकस्यान्तर्वर्तते तत्प्रभा बहिः ।
दृश्यते द्वार्यथान्यत्र तद्वत् दृष्टा मणेः प्रभा ॥ ३ ॥
दूरे प्रभाद्वयं दृष्ट्वा मणिबुद्ध्याभिधावतोः ।
प्रभायां मणिबुद्धिस्तु मिथ्याज्ञानं द्वयोरपि ॥ ४ ॥

---

ध्यानानि दिदर्शयिषुरादौ तावत् सदृष्टान्तं ब्रह्मतत्त्वोपासनयाप्यभिलषित ब्रह्मभावलक्षणो मोक्षो भवतीति प्रतिजानीते संवादीति । यथा संवादिभ्रमेण प्रवृत्तस्याभिमतार्थलाभो भवति एवं ब्रह्मतत्त्वोपासनयाप्यभिलषितो ब्रह्मभावलक्षणो मोक्षो भवति इत्यर्थः । ननु किं प्रमाणमित्यत आह उत्तरे तापनीय इति । यतः उपासनयापि मोक्षोऽभि अतस्तापनीयोपनिषद्यनेकप्रकारेण ब्रह्मतत्त्वोपासना श्रुता उक्तेत्यर्थः ॥ १ ॥

संवादिभ्रमवदित्युक्तं दृष्टान्तं प्रपञ्चयितुं संवादिभ्रमप्रतिपादकं वार्तिकं पठति मणिप्रदीपप्रभयोरिति । मणेश्च प्रदीपस्य च मणिप्रदीपौ तयोः प्रभे मणिप्रदीपप्रभे तयोरिति विग्रहः । मणिप्रभायां प्रदीपप्रभायाञ्च या मणिबुद्धिः सा मिथ्याज्ञानमेव अतस्मिन् तद्बुद्धित्वात् अथापि मणिप्रभायां मणिबुद्ध्याभिधावतः पुरुषस्य मणिलाभो भवति इतरस्य तु च नास्तीत्यर्थक्रियायां वैलक्षण्यमस्ति इत्यर्थः ॥ २ ॥

वार्तिकं व्याचष्टे दीपोऽपवरकस्यान्तर्वर्तते तत्प्रभा बहिरित्यादिना श्लोकद्वयेन । दीपोऽपवरकस्यान्तरिति कस्मिंश्चित् मन्दिरेऽपवरकस्यान्तर्दीपकलिकास्ति तस्य प्रभा बहिर्द्वारि प्रदेशे द्वारमिव वर्तुलोपलभ्यते तथाऽन्यस्मिन् मन्दिरेऽपवरकस्यान्तःस्थितस्य रत्नस्य प्रभा बहिर्द्वारि प्रदेशे दीपप्रभेव रत्नप्रभोपलभ्यते ॥ ३ ॥

दूरे प्रभाद्वयमिति । तथाविधं प्रभाद्वयं दूरतो दृष्ट्वाऽयं मणिरय

न लभ्यते मणिर्दीपप्रभां प्रत्यभिधावता ।
प्रभायां धावताऽवश्यं लभ्येतैव मणिर्मणेः ॥ ५ ॥
दीपप्रभामणिभ्रान्तिर्विसंवादिभ्रमः स्मृतः ।
मणिप्रभामणिभ्रान्तिः संवादिभ्रम उच्यते ॥ ६ ॥
वाष्पं धूमतया बुद्ध्वा तत्राङ्गारानुमानतः ।
वह्निर्यदृच्छया लब्धः स संवादिभ्रमो मतः ॥ ७ ॥
गोदावर्युदकं गङ्गोदकं मत्वा विशुद्धये ।
सम्प्रोक्ष्य शुद्धिमाप्नोति स संवादिभ्रमो मतः ॥ ८ ॥

---

मणिरिति बुद्ध्वा द्वौ पुरुषावभिधावनं कुरुतस्तयोर्द्वयोरपि प्रभाविषये जायमानं मणिज्ञानं भ्रान्तमेव ॥ ४ ॥

न लभ्यत इति । तथापि दीपप्रभायां मणिबुद्धिं कृत्वा धावता पुरुषेण मणिर्न लभ्यते मणिप्रभायां मणिबुद्ध्या धावता तु मणिर्लभ्येतैव ॥ ५ ॥

भवत्वेवं वार्त्तिकार्थः प्रकृते किमायातमित्यत आह दीपप्रभेति । यः दीपप्रभायां मणिभ्रान्तिरस्ति स विसंवादिभ्रम इति स्मृतो विद्वद्भिः मणिलाभलक्षणार्थक्रियारहितत्वात् । मणिप्रभायां मणिबुद्धिस्तु मणिलाभलक्षणार्थक्रियावत्त्वात् संवादिभ्रम इत्युच्यते इत्यर्थः ॥ ६ ॥

एवं प्रत्यक्षविषये संवादिभ्रमं दर्शयित्वा अनुमानविषयेऽपि तं दर्शयति वाष्पं धूमतयेति । क्वचित् प्रदेशे स्थितं वाष्पं धूमत्वेन निश्चित्य तत्प्रदेशोऽयं प्रदेशोऽग्निमान् धूमवत्त्वादित्यनुमाय प्रवृत्तेन पुरुषेण दैवगत्या यद्यपि वह्निस्तत्रोपलभ्यते तदा वाष्पविषयं धूमज्ञानं संवादिभ्रमो मतः ॥ ७ ॥

आगमविषयेऽपि तं दर्शयति गोदावर्युदकमिति । गोदावर्युदक-

ज्वरेणाप्तः सन्निपातं भ्रान्त्या नारायणं स्मरन् ।
मृतः स्वर्गमवाप्नोति स संवादिभ्रमो मतः ॥ ९ ॥
प्रत्यक्षस्यानुमानस्य तथा शास्त्रस्य गोचरे ।
उक्तन्यायेन संवादिभ्रमाः सन्तीह कोटिशः ॥ १० ॥
अन्यथा मृत्तिकादारुशिलाः स्युर्देवताः कथम् ।
अग्नित्वादिधियोपास्याः कथं वा योषिदादयः ॥ ११ ॥

---

यद्यपि विशुद्धिहेतुत्वमागमसिद्धम् अतस्तद्बोधवशादपि शुद्धिरस्तु तथापि गोदावर्युदके या गङ्गोदकबुद्धिः सा भ्रान्तिरेव ॥ ८ ॥

उदाहरणान्तरमाह ज्वरेणाप्त इति । ज्वरेण सन्निपातं प्राप्तः पुरुष इदं नारायणस्मरणं मम स्वर्गसाधनमिति ज्ञानमन्तरेणापि सन्निपातप्रयुक्तभ्रमवशात् साधारणपुरुषतया चैत्रादिवन्नारायणं स्मरन्मृतः स्वर्गं प्राप्नोत्येव हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः विक्रुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिमित्यादिपुराणवचनेभ्यः । अत्रापि नारायणनाम्नः पुत्रनामत्वज्ञानभ्रम एव ॥ ९ ॥

एवं त्रिविधसंवादिभ्रमोदाहरणेन सिद्धमर्थमाह प्रत्यक्षस्यानुमानस्येति ॥ १० ॥

विपक्षे बाधकदर्शनेन उक्तमर्थं द्रढयति अन्यथेति । अन्यथा संवादिभ्रमाभावे मृदादयः फलसिद्धये देवतात्वेन पूज्या न भवेयुः स्वतो देवतात्वाभावादित्यर्थः । बाधकान्तरमाह अग्नित्वादीति । पञ्चाग्निविद्यायां योषा वाव गौतमाग्निः पुरुषो वाव गौतमाग्निः पृथिवी वाव गौतमाग्निः पर्जन्यो वाव गौतमाग्निः असौ वाव लोको गौतमाग्निरित्यादिवाक्यैर्योषित्पुरुषपृथिवीपर्जन्यद्युलोकानामग्नित्वेनोपासनं ब्रह्मलोकावाप्तिफलकं न भवेदित्यर्थः । आदिशब्देन मनो ब्रह्मेत्युपासीत आदित्यो ब्रह्मेत्यादयो गृह्यन्ते ॥ ११ ॥

अयथावस्तुविज्ञानात् फलं लभ्यत ईप्सितम् ।
काकतालीयतः सोऽयं संवादिभ्रम उच्यते ॥ १२ ॥
स्वयं भ्रमोऽपि संवादी यथा सम्यक्फलप्रदः ।
ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा ॥ १३ ॥
वेदान्तेभ्यो ब्रह्मतत्त्वमखण्डैकरसात्मकम् ।
परोक्षमवगम्यैतदहमस्मीत्युपासते ॥ १४ ॥
प्रत्यग्व्यक्तिमनुल्लिख्य शास्त्राद्विष्ण्वादिमूर्त्तिवत् ।
अस्ति ब्रह्मेति सामान्यज्ञानमत्र परोक्षधीः ॥ १५ ॥

---

इदानीं बहुभिर्ग्रन्थैरुपपादितं संवादिभ्रमं बुद्धिसौकर्याय संक्षिप्य दर्शयति अयथावस्तुविज्ञानादिति । विहितादविहिताद्वा प्रकारादयथा-वस्तुविज्ञानाद्विपरीतज्ञानादीप्सितमभिलषितं फलं काकतालीयतः दैवगत्या लभ्यते सोऽयं संवादिभ्रम इत्यर्थः ॥ १२ ॥

ननु ब्रह्मोपासनस्यायथावस्तुविषयकस्य कथं सम्यग्ज्ञानसाध्यमुक्ति-फलप्रदातृत्वमित्याशङ्क्य संवादिभ्रमदृष्टान्तमाह स्वयं भ्रमोऽपीति ॥ १३ ॥

ननु ब्रह्मतत्त्वं ज्ञात्वोपासनं क्रियतेऽज्ञात्वा वा आद्ये उपासनवैयर्थ्यं मोक्षसाधनज्ञानस्यैव विद्यमानत्वात् द्वितीये विषयापरिज्ञानात् उपासनमेव न घटत इत्याशङ्क्याह वेदान्तेभ्य इति । अयमभिप्रायः ब्रह्मात्मैकत्वापरोक्षज्ञानस्य मोक्षसाधनस्यानुत्पन्नत्वात् न उपासनावैयर्थ्यं शास्त्रात् परोक्षतयावगतत्वात् ब्रह्मण उपासनविषयत्वमिति ॥ १४ ॥

उपास्यब्रह्मतत्त्वगोचरस्य परोक्षज्ञानस्य किं रूपमित्याकाङ्क्षायामाह प्रत्यग्व्यक्तिमनुल्लिख्येति । प्रत्यग्व्यक्तिं बुद्ध्यादिसाक्षिणं चिदानन्दरूपमात्मानमनुल्लिख्य अविषयीकृत्य शास्त्रात् सत्यज्ञानादिवाक्य-जातात् ब्रह्मास्तीत्येवं सामान्याकारेण जायमानं ज्ञानमत्रास्मिन् प्रक-

चतुर्भुजाद्यवगतावपि मूर्त्तिमनुल्लिखन् ।
अक्षैः परोक्षज्ञान्येव न तदा विष्णुमीक्षते ॥ १६ ॥
परोक्षत्वापराधेन भवेन्नातत्त्ववेदनम् ।
प्रमाणेनैव शास्त्रेण सत्यमूर्त्तेर्विभासनात् ॥ १७ ॥
सच्चिदानन्दरूपस्य शास्त्राज्ज्ञानेऽप्यनुल्लिखन् ।
प्रत्यक्षं साक्षिणं तत् तु ब्रह्म साक्षान्न वीक्षते ॥ १८ ॥

---

[illegible]नायां परोक्षधीः परोक्षज्ञानं विवक्षितमित्यर्थः । तत्र दृष्टान्तः विष्ण्वादिमूर्त्तिवदिति । विष्ण्वादिमूर्त्तिप्रतिपादकशास्त्रजन्यज्ञानवदित्यर्थः ॥ १५ ॥

ननु शास्त्रेण विष्ण्वादिमूर्त्तेश्चतुर्भुजत्वादिविशेषप्रतीतिजनकज्ञानस्यापि कुतः परोक्षत्वमित्याशङ्क्याह चतुर्भुजाद्यवगतावपीति । शास्त्रेण चतुर्भुजत्वादिविशेषप्रतीतावपि चक्षुरादिभिर्विष्ण्वादिमूर्त्तिमविषयीकुर्वन् पुरुषः परोक्षज्ञान्येव । तत्रोपपत्तिमाह न तदा विष्णुमीक्षत इति । तदोपासनाकाले विष्णुस्वरूपं नेक्षते नेन्द्रियैर्विषयीकरोतीत्यर्थः ॥ १६ ॥

ननु विष्ण्वादिगोचरस्य ज्ञानस्य प्रत्यक्षत्वाभावात् भ्रमत्वमित्याशङ्क्य प्रमाणेन जनितत्वान्न भ्रमत्वमित्याह परोक्षत्वापराधेनेति । परोक्षज्ञानं भ्रान्तिज्ञानकारणं न भवति किन्तु विषयासत्यत्वम् इह तु प्रमाणभूतेन शास्त्रेणैव यथार्थभूताया विष्ण्वादिमूर्त्तेरेव भासनान्न भ्रमत्वमित्यर्थः ॥ १७ ॥

ननु सच्चिदानन्दस्वरूपविषयिणो ब्रह्मतत्त्वज्ञानस्य शास्त्रजन्यस्यापि कुतः परोक्षत्वमित्याशङ्क्य अपरोक्षत्वप्रयोजकप्रत्यक्षोल्लेखाभावादित्याह सच्चिदानन्दरूपस्येति । सत्यं ज्ञानमनन्तं ब्रह्म, नित्यः शुद्धो बुद्धो मुक्तो निरञ्जनः सदेवेदं सर्वं तत् सदिति चिदेवेदं सर्वं प्रकाशते चेत्यादिशास्त्रात् सच्चिदानन्दरूपस्य ब्रह्मणो ज्ञानेऽपि प्रत्यक्षं साक्षिण-

शास्त्रोक्तेनैव मार्गेण सच्चिदानन्दनिर्णयात् ।
परोक्षमपि तज्ज्ञानं तत्त्वज्ञानं न तु भ्रमः ॥ १९ ॥
ब्रह्म यद्यपि शास्त्रेषु प्रत्यक्त्वेनैव वर्णितम् ।
महावाक्यैस्तथाप्येतत् दुर्बोधमविचारिणः ॥ २० ॥
देहाद्यात्मत्वविभ्रान्तौ जाग्रत्यां न हठात् पुमान् ।
ब्रह्मात्मत्वेन विज्ञातुं क्षमते मन्दधीत्वतः ॥ २१ ॥

---

मनुष्यस्तु तस्य ब्रह्मणः प्रत्यगात्मरूपमजानन् तद् ब्रह्म साक्षात् न वीक्षते नैव पश्यतीत्यर्थः ॥ १८ ॥

कथं तर्हि तथाविधब्रह्मगोचरस्य ज्ञानस्य तत्त्वज्ञानत्वमित्याशङ्क्य आगमप्रमाणजन्यत्वादित्याह शास्त्रोक्तेनैवेति । तज्ज्ञानं परोक्षमपि शास्त्रोक्तेनैव प्रकारेण ब्रह्मणः सच्चिदानन्दरूपनिश्चयात्मकत्वात् सम्यक् ज्ञानमेव न भ्रम इत्यर्थः ॥ १९ ॥

ननु सत्यज्ञानादिवाक्यैः ब्रह्मणः सच्चिदानन्दरूपत्वमिव तत्त्व-मस्यादिवाक्यैः प्रत्यग्रूपत्वमपि तस्य बोध्यत एव अतः शास्त्रजन्य-स्यापि ब्रह्मज्ञानस्य प्रत्यगभिन्नब्रह्मविषयत्वादपरोक्षत्वमेवेत्याशङ्क्याह ब्रह्म यद्यपीति । यद्यपि वेदान्तेषु महावाक्यैर्ब्रह्म प्रत्यगात्मत्वेनैवोप-दिष्टं तथाप्येतत् प्रत्यग्रूपत्वमन्वयव्यतिरेकाभ्यां तत्त्वम्पदार्थविवेकशून्यस्य दुर्बोधं बोद्धुमशक्यम् अतः केवलाद् वाक्यात् नापरोक्षज्ञानमुत्पद्यत इत्यर्थः ॥ २० ॥

ननु सम्यग्ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वात् प्रमाणस्य च तत्त्वम-स्यादिवाक्यरूपस्य सद्भावात् वस्तुनश्च ब्रह्मात्मैकत्वरूपस्य विद्यमान-त्वात् कुतो विचारमन्तरेण दुर्बोधत्वमित्याशङ्क्याह देहाद्यात्मत्वविभ्रा-न्ताविति । ब्रह्मात्मैकत्वापरोक्षज्ञानविरोधिनो देहेन्द्रियादिष्वात्मभ्रमस्य विचारनिवर्त्यस्य सद्भावात् तन्निवृत्तये विचारोऽपेक्ष्यत इत्यर्थः ॥ २१ ॥

ब्रह्ममात्रं सुविज्ञेयं श्रद्धालोः शास्त्रदर्शिनः।
अपरोक्षद्वैतबुद्धिः परोक्षाद्वैतबुद्धिनुत् ॥ २२ ॥
अपरोक्षशिलाबुद्धिर्न परोक्षेशतां नुदेत्।
प्रतिमादिषु विष्णुत्वे को वा विप्रतिपद्यते ॥ २३ ॥
अश्रद्धालोरविश्वासो नोदाहरणमर्हति।
श्रद्धालोरेव सर्वत्र वैदिकेष्वधिकारतः ॥ २४ ॥
सकृदाप्तोपदेशेन परोक्षज्ञानमुद्भवेत्।
विष्णुमूर्त्त्युपदेशो हि न मीमांसामपेक्षते ॥ २५ ॥
कर्मोपास्ती विचार्य्येते अनुष्ठेयाविनिर्णयात्।
बहुशाखाविप्रकीर्णं निर्णेतुं कः प्रभुर्नरः ॥ २६ ॥

ननु तर्हि देहेन्द्रियादिगोचरस्य द्वैतभ्रमस्य श्रद्धावदद्वितीयब्रह्म-गोचरं परोक्षज्ञानमपि नोदीयादित्याशङ्क्य अपरोक्षद्वैतभ्रमस्य परोक्षाद्वैतज्ञानाविरोधित्वात् श्रद्धावतः पुंसः शास्त्रात् परोक्षज्ञानमुत्पद्यत एव इत्याह ब्रह्ममात्रं सुविज्ञेयमिति अपरोक्षद्वैतबुद्धिर्यतः परोक्षाद्वैत-बुद्धिनुत् अतो ब्रह्ममात्रं सुविज्ञेयमिति योजना ॥ २२ ॥

अपरोक्षभ्रमस्य परोक्षसम्यग्ज्ञानाविरोधित्वे दृष्टान्तमाह अप-रोक्षशिलाबुद्धिरिति। विरोधाभावमेवोदाहृत्य दर्शयति प्रतिमादि-ष्विति ॥ २३ ॥

केचन विप्रतिपद्यमाना उपलभ्यन्त इत्याशङ्क्याह अश्रद्धालोरिति। कुत इत्यत आह श्रद्धालोरेवेति। सर्वेषु वैदिकेष्वनुष्ठानेषु श्रद्धावत एवाधिकारित्वादित्यर्थः ॥ २४ ॥

एतावता परोक्षज्ञाने विचारानपेक्षितमित्यत आह सकृदाप्तोपदेशे-नेति। उक्तमर्थं लोकानुभवेन द्रढयति विष्णुमूर्त्त्युपदेश इति ॥ २५ ॥

ननु तर्हि कुतः शास्त्रेषु विचारः क्रियत इत्याशङ्क्य अनुष्ठेययो·

निर्णीतोऽर्थः कल्पसूत्रैर्ग्रथितस्तावतास्तिकः ।
विचारमन्तरेणापि शक्तोऽनुष्ठातुमञ्जसा ॥ २७ ॥
उपास्तीनामनुष्ठानमार्षग्रन्थेषु वर्णितम् ।
विचाराक्षममर्त्याश्च तत् श्रुत्वोपासते गुरोः ॥ २८ ॥
वेदवाक्यानि निर्णेतुमिच्छन् मीमांसतां जनः ।
आप्तोपदेशमात्रेण ह्यनुष्ठानन्तु सम्भवेत् ॥ २९ ॥

---

कर्मोपासनयोः किं कर्म कर्तव्यं किं वोपासनमिति सन्देहसम्भवात् तन्निर्णयाय विचाराः क्रियन्त इत्याह कर्मोपास्तीति । सन्देहसम्भवमेवोपपादयति बहुशाखेति । अनेकासु शाखासु तत्र तत्र चोदितं कर्मोपासनं वा एकत्र समाहृत्य निर्णेतुमस्मदादिर्नरः कः प्रभुः समर्थः न कोऽपीत्यर्थः ॥ २६ ॥

ननु तर्ह्यनुष्ठेयत्वमेव कर्मोपासनयोः माभूदित्याशङ्क्याह निर्णीतोऽर्थ इति । जैमिन्यादिभिः पूर्वाचार्यैः निर्णीतोऽर्थः अनुष्ठानप्रकारः कल्पसूत्रैः संगृहीतोऽस्ति तावता तैर्ग्रथितत्वेनैव तेषु आस्तिकः विश्वासवान् पुरुषः विचारं विनापि कर्म सम्यगनुष्ठातुं शक्नोत्येव ॥ २७ ॥

ननु तर्ह्युपासनाविचाराभावात् तदनुष्ठानं न सम्भवेदित्याशङ्क्याह उपास्तीनामिति । आर्षग्रन्थेषु [illegible]दिमन्त्रकल्पेषु उपासनानुष्ठानप्रकारो वर्णितः अतो विचाराक्षमाः मनुष्याः कल्पोक्तं तदुपासनं गुरुमुखादवगम्यानुतिष्ठन्तीत्यर्थः ॥ २८ ॥

ननु तर्हीदानीन्तनैरपि अस्मदादिभिर्वेदवाक्यविचारः कुतः क्रियत इत्याशङ्क्य स्वबुद्धिपरितोषायैव क्रियते नानुष्ठानसिद्धये इत्याह वेदवाक्यानीति ॥ २९ ॥

ब्रह्मसाक्षात्कृतिस्त्वेवं विचारेण विना नृणाम् ।
आप्तोपदेशमात्रेण न सम्भवति कुत्रचित् ॥ २० ॥

परोक्षज्ञानमश्रद्धा प्रतिबध्नाति नेतरत् ।
अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबन्धकः ॥ २१ ॥

विचार्य्याप्यपरोक्षेण ब्रह्मात्मानं न वेत्ति चेत् ।
आपरोक्ष्यावसानत्वात् भूयोभूयो विचारयेत् ॥ २२ ॥

विचारयन्नामरणं नैवात्मानं लभेत चेत् ।
जन्मान्तरे लभेतैव प्रतिबन्धक्षये सति ॥ २३ ॥

---

ननु ब्रह्मोपासनवत् ब्रह्मसाक्षात्कारस्याप्युपदेशमात्रादेव सिद्धिः किं न स्यादित्याशङ्क्याह ब्रह्मसाक्षात्कृतिस्त्वेवमिति ॥ २० ॥

आप्तोपदेशमात्रेणोपासनानुष्ठानोपयोगिपरोक्षज्ञानमुत्पद्यते अपरोक्षज्ञानन्तु विचारमन्तरेण न जायत इत्युक्तं तत्र कारणमाह परोक्षज्ञानमिति । यतः अविश्वास एव परोक्षज्ञानं प्रतिबध्नाति नाविचारः अतस्तन्निवृत्तौ सकृदुपदेशादेव परोक्षज्ञानजन्मोपपद्यते । अविचारप्रतिबद्धस्यापरोक्षज्ञानस्य तु विचारद्वारा तन्निवृत्तिमन्तरेणोत्पत्तिर्न सम्भवति अतो विचारः कर्त्तव्य इति भावः ॥ २१ ॥

ननु विचारे कृतेऽपि यदा परोक्षज्ञानं न जायते तदा किं कर्त्तव्यमित्यत आह विचार्य्याप्यपरोक्षेणेति । तत्त्वम्पदार्थौ सम्यग्विचार्य्यापि वाक्यार्थं ब्रह्मात्मैकत्वमपरोक्षतया न जानातीति चेत् तदापि पुनः पुनर्विचार एव कर्त्तव्यः अपरोक्षज्ञानहेतोरन्यस्याभावादिति भावः ॥ २२ ॥

ननु भूयो भूयो विचारेण च साक्षात्कारानुदये सति विचारो व्यर्थं स्यादित्याशङ्क्याह विचारयन्नामरणमिति ॥ २३ ॥

इह वामुत्र वा विद्येत्येवं सूत्रकृतोदितम् ।
शृण्वन्तोऽप्यत्र बहवो यन्न विद्युरितिश्रुतेः ॥ ३४ ॥
गर्भ एव शयानः सन् वामदेवोऽवबुद्धवान् ।
पूर्वाभ्यस्तविचारेण यद्वदध्ययनादिषु ॥ ३५ ॥
बहुवारमधीतेऽपि तदा नायाति चेत् पुनः ।
दिनान्तरेऽनधीत्यैव पूर्वाधीतं स्मरेत् पुमान् ॥ ३६ ॥
कालेन परिपच्यन्ते कृषिगर्भादयो यथा ।
तद्वदात्मविचारोऽपि शनैः कालेन पच्यते ॥ ३७ ॥
पुनः पुनर्विचारेऽपि त्रिविधप्रतिबन्धतः ।
न वेत्ति तत्त्वमित्येतद् वार्त्तिके सम्यगीरितम् ॥ ३८ ॥

---

नन्विदं कुतोऽवगतमित्याशङ्क्य महात्मना व्यासेन ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनादिति सूत्रेऽभिधानादित्याह इह वामुत्र वेति । सति प्रतिबन्धे इह जन्मनि ज्ञानानुत्पत्तौ श्रुतिं दर्शयति शृण्वन्तोऽपीति ॥ ३४ ॥

इह जन्मनि श्रवणादिकर्तुर्जन्मान्तरे अपरोक्षज्ञानं भवतीत्यत्रापि गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा इत्यादिकां श्रुतिमर्थतः पठति गर्भ एव शयान इति । इह जन्मनि अनुत्पन्नस्य ज्ञानस्य कालान्तरे उत्पत्तौ दृष्टान्तमाह यद्वदध्ययनादिष्विति ॥ ३५ ॥

दृष्टान्तं विवृणोति बहुवारमधीतेऽपीति ॥ ३६ ॥

आदिशब्देन परिगृहीतानि दृष्टान्तान्तराण्याह कालेनेति । दार्ष्टान्तिके योजयति तद्वदात्मविचारोऽपीति ॥ ३७ ॥

बहुवारं विचारितेऽपि तत्त्वे प्रतिबन्धवशात् साक्षात्कारो न जायते इत्येतद् वार्त्तिककारेणापि निरूपितमित्याह पुनः पुनर्विचारेऽपीति ॥ ३८ ॥

कुतस्तज्ज्ञानमिति चेत् तद्धि बन्धपरिक्षयात् ।
असावपि च भूतो वा भावी वा वर्त्तते तथा ॥ ३९ ॥
अधीतवेदवेदार्थोऽप्यत एव न मुच्यते ।
हिरण्यनिधिदृष्टान्तादिदमेव च दर्शितम् ॥ ४० ॥
अतीतेनापि महिषीस्नेहेन प्रतिबन्धतः ।
भिक्षुस्तत्त्वं न वेदेति गाथा लोके प्रगीयते ॥ ४१ ॥
अनुसृत्य गुरुः स्नेहं महिष्यां तत्त्वमुक्तवान् ।
ततो यथावद्वेदैष प्रतिबन्धस्य संक्षयात् ॥ ४२ ॥

---

तान्येव वार्त्तिकवाक्यान्युदाहरति कुतस्तज्ज्ञानमित्यादिना भरतस्य त्रिजन्मभिरित्यन्तेन । तत्र तावत् पूर्वमनुत्पन्नस्य ज्ञानस्येदानीमुत्पत्तौ कारणं पृच्छति कुतस्तज्ज्ञानमिति चेदिति । उत्तरमाह तद्धि बन्धपरिक्षयादिति । बन्धः प्रतिबन्धः तस्य परिक्षयादित्यर्थः । सोऽपि प्रतिबन्धो भूतो भावी वर्त्तमानश्चेति त्रिविध इत्याह असावपि च भूतो वेति ॥ ३९ ॥

भवत्वेवं त्रिविधः प्रतिबन्धः ततः किमित्यत आह अधीतवेदेति । अत एव प्रतिबन्धसद्भावादेवेत्यर्थः । सति प्रतिबन्धे ज्ञानं नोदेतीति तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढा इत्यनया श्रुत्या प्रदर्शितमित्याह हिरण्येति ॥ ४० ॥

नन्वतीतस्य प्रतिबन्धकत्वं न दृष्टमित्याशङ्क्याह अतीतेनापीति । अयमर्थः कश्चिद्यतिः पूर्वं गार्हस्थ्यदशायां कस्याञ्चिन्महिष्यां स्नेहं कृत्वा पश्चात् सन्न्यासानन्तरं श्रवणे प्रवृत्तोऽपि तेनैव स्नेहेन जनितात् प्रतिबन्धात् तत्त्वं गुरुणा उपदिष्टमपि न ज्ञातवान् इत्येवंविधा गाथा लोके प्रगीयते न पुराणादिषु पठितेत्यर्थः ॥ ४१ ॥

तर्हि तथाविधस्य कथं ज्ञानोत्पत्तिरित्यत आह अनुसृत्येति ।

प्रतिबन्धो वर्त्तमानो विषयासक्तिलक्षणः ।
प्रज्ञामान्द्यं कुतर्कश्च विपर्ययदुराग्रहः ॥ ४३ ॥
शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम् ।
नीतेऽस्मिन् प्रतिबन्धेऽतः स्वस्य ब्रह्मत्वमश्नुते ॥ ४४ ॥
आगामिप्रतिबन्धश्च वामदेवे समीरितः ।
एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः ॥ ४५ ॥

---

गुरुस्तस्य तत्त्वोपदेष्टा तदीयं महिषीस्नेहम् अनुसृत्य तस्यामेव महिष्यां तस्य तन्महिष्युपाधिकं ब्रह्म उक्तवान् ततः सोऽपि महिषीस्नेह-लक्षणप्रतिबन्धकापगमेन गुरूपदिष्टं तत्त्वं यथावत् शास्त्रोक्तप्रकारेणैव ज्ञातवानित्यर्थः ॥ ४२ ॥

एवमतीतप्रतिबन्धं प्रदर्श्य वर्त्तमानं तं दर्शयति प्रतिबन्ध इति । वर्त्तमानः प्रतिबन्धश्चित्तस्य विषयासक्तिरूप एकः; प्रज्ञामान्द्यं बुद्धेस्तै-क्ष्ण्याभावः; कुतर्कश्च शुष्कतार्किकत्वेन श्रुत्यर्थस्यान्यथाज्ञानं विपर्यय-दुराग्रहः विपर्यये आत्मनः कर्त्तृत्वादिधर्मयुक्तत्वज्ञानलक्षणे दुराग्रहो युक्तिरहितोऽभिनिवेशः एतेषामन्यतमस्यापि सत्त्वे ज्ञानं नोदेतीत्यर्थः॥४३

तस्यापि प्रतिबन्धस्य केन निवृत्तिरित्यत आह शमाद्यैरिति । शमादयः शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वेति श्रुत्युक्ताः श्रवणादयः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुत्या अभिहिताः एतैः साधने-स्तत्र तत्र तत्र तत्र प्रतिबन्धस्य निवर्त्तने उचितैर्योग्यैरस्मिन् प्रतिबन्धे क्षयं नीते सति विनाशिते सत्यतः प्रतिबन्धापगमादेव स्वस्य प्रत्यगात्मनो ब्रह्मत्वं प्राप्नोतीत्यर्थः ॥ ४४ ॥

इदानीं भाविप्रतिबन्धं दर्शयति आगामिप्रतिबन्धश्चेति । आगामि-प्रतिबन्धो जन्मान्तरहेतुः प्रारब्धमेव इत्यर्थः । तस्य च भोगमन्तरेण निवृत्त्यभावात् तन्निवृत्तौ कालनियमो नास्तीत्याह एकेनेति । स च

यतते च ततो भूयस्तस्मादेतद्धि दुर्लभम् ॥ ४९ ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ५० ॥
ब्रह्मलोकाभिवाञ्छायां सम्यक् सत्यां निरुध्यताम् ।
विचारयेत् य आत्मानं न तु साक्षात् करोत्ययम् ॥५१॥
वेदान्तविज्ञानसुनिश्चितार्था इति शास्त्रतः ।
ब्रह्मलोके सकल्पान्ते ब्रह्मणा सह मुच्यते ॥ ५२ ॥

---

तत्र तस्मिन् जन्मनि पौर्वदैहिकं तं बुद्धिसंयोगं तत्त्वविचारगोचरं बुद्धिसम्बन्धं शीघ्रं लभते प्राप्नोति न केवलं बुद्धिसम्बन्धमात्रलाभः किन्तु ततः पूर्वस्मात् प्रयत्नात् भूयो यतते चाधिकप्रयत्नं करोति तस्मादेतज्जन्म दुर्लभमित्यर्थः ॥ ४९ ॥

भूयोऽभ्यासे कारणमाह पूर्वाभ्यासेनेति । स योगभ्रष्टस्तेन पूर्वाभ्यासेनैवावशोऽपि स्वाधीनोऽपि ह्रियते आकृष्यते एवमनेकेषु जन्मसु कृतेन प्रयत्नेन संसिद्धस्तत्त्वज्ञानसम्पन्नस्ततस्तस्मात् तत्त्वज्ञानात् परां यान्तिं मुक्तिं याति प्राप्नोतीत्यर्थः ॥ ५१ ॥

आगामिप्रतिबन्धान्तरं दर्शयति ब्रह्मलोकाभिवाञ्छायामिति । ब्रह्मलोकप्राप्तीच्छाया दृढायां सत्यां तां निरुध्य य आत्मानं विचारयेत् तस्य साक्षात्कारो नैव जायत इत्यर्थः ॥ ५१ ॥

ननु तर्हि तस्य कदापि मुक्तिर्न स्यात् इत्याशङ्क्याह वेदान्तविज्ञानेति । वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे, ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे, परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्, इत्यादिशास्त्रवचनाद् ब्रह्मलोकप्राप्त्यनन्तरं तत् तत्त्वं साक्षात्कृत्य ब्रह्मणा सह मुक्तो भविष्यति इत्यर्थः ॥ ५२ ॥

केषाञ्चित् स विचारोऽपि कर्मणा प्रतिबध्यते ।
श्रवणायापि बहुभिर्यो न लभ्य इति श्रुतेः ॥ ५३ ॥
अत्यन्तबुद्धिमान्द्याद् वा सामग्र्या वाप्यसम्भवात् ।
यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ॥ ५४ ॥
निर्गुणब्रह्मतत्त्वस्य न ह्युपास्तेरसम्भवः ।
सगुणब्रह्मणीवात्र प्रत्ययावृत्तिसम्भवात् ॥ ५५ ॥
अवाङ्मनसगम्यं तन्नोपास्यमिति चेत् तदा ।
अवाङ्मनसगम्यस्य वेदनञ्च न सम्भवेत् ॥ ५६ ॥

---

एवं तत्त्वविचारे क्रियमाणे प्रतिबन्धवशात् यत्र साक्षात्कारो न जायते इत्यभिप्रायः तीव्रपापिनान्तु सोऽपि विचारो दुर्लभ इत्याह केषाञ्चिदिति । तत्र प्रमाणमाह श्रवणायापीति । यः परमात्मा बहुभिः पुरुषैः श्रवणाय अपि श्रोतुमपि न लभ्यः दुर्लभ इत्यर्थः ॥ ५३ ॥

एतावता सति प्रतिबन्धे तत्त्वसाक्षात्कारस्तत्साधनभूतो विचारश्च न सम्भवतीत्यभिप्रायः इदानीं विचारासमर्थेन पुरुषार्थिना किं कर्त्तव्यमित्यपेक्षायां विचाराक्षमस्त्वेव तत्त्वमुपासते गुरोरिति यत् प्राक् प्रतिज्ञातं तदुपपादयति अत्यन्तेति । सामग्र्यसम्भवो नाम तत्त्वोपदेष्टुर्गुरोरध्यात्मशास्त्रस्य देशकालादेर्वा असम्भवस्तस्मादित्यर्थः ॥ ५४ ॥

ननु निर्गुणब्रह्मतत्त्वस्य गुणरहितत्वात् तदुपासनं न घटत इत्याशङ्क्य उपासनस्य प्रत्ययावृत्तिरूपत्वात् सगुणब्रह्मणीव निर्गुणेऽपि तत् सम्भवतीत्याह निर्गुणब्रह्मतत्त्वस्येति ॥ ५५ ॥

ननु निर्गुणस्य ब्रह्मणोऽवाङ्मनोगोचरत्वान्नोपास्यत्वमित्याशङ्क्य वेदनपक्षेऽप्ययं दोषः समान इत्याह अवाङ्मनसगम्यमिति ॥ ५६ ॥

वागाद्यगोचराकारमित्येवं यदि वेत्त्यसौ ।
वागाद्यगोचराकारमित्युपासीत नो कुतः ॥ ५७ ॥
सगुणत्वमुपास्यत्वाद् यदि वेद्यत्वतोऽपि तत् ।
वेद्यं चेत् लक्षणावृत्त्या लक्षितं समुपास्यताम् ॥ ५८ ॥
ब्रह्म विद्धि तदेव त्वं नत्विदं यदुपासते ।
इति श्रुतेरुपास्यत्वं निषिद्धं ब्रह्मणो यदि ॥ ५९ ॥
विदितादन्यदेवेति श्रुतेर्वेद्यत्वमस्य न ।
यथा श्रुत्यैव वेद्यं तत् तथा श्रुत्याप्युपास्यताम् ॥ ६० ॥

ननु ब्रह्म वाङ्मनसागोचरमित्येवं ज्ञातुं शक्यमित्याशङ्क्य एवमेव उपासितुमपि शक्यमित्याह वागाद्यगोचराकारमित्येवमिति ॥५७॥

ब्रह्मण उपास्यत्वे सगुणत्वं प्रसज्येतेत्याशङ्क्य वेद्यत्वेऽपि तत् सगुणत्वं स्यादित्याह सगुणत्वमिति । तत् सगुणत्वमित्यर्थः । ननु लक्षणावृत्त्याश्रयणान्न वेद्यत्वे सगुणत्वप्रसङ्ग इत्याशङ्क्य उपासनमपि तथैव क्रियतामित्याह वेद्यं चेदिति ॥ ५८ ॥

ननु ब्रह्मण उपास्यत्वं श्रुत्या निषिध्यत इति शङ्कते ब्रह्मविद्धीति । यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इति श्रुतिरुपास्यस्य ब्रह्मत्वं निषेधतीत्यर्थः । त्वं यद्वाङ्मनसागम्यं तदेव ब्रह्म विद्धि इदमिति यत् तूपासते पुरुषास्तन्न विद्धीति योजना ॥ ५९ ॥

उपास्यत्ववत् वेद्यत्वस्यापि निषेधः समान इत्याह विदितादन्यदेवेति । अन्यदेव तद्विदितादथो अविदितादधीति ब्रह्मणो वेद्यत्वमपि निवारयतीत्यर्थः । विदिताविदिताभ्यामन्यत् ब्रह्मेति श्रुतिः प्रतिपादयति इति चेत् तर्हि तथैव तज्जानीयादित्याशङ्क्य उपासनेऽप्येतत् समानमित्याह यथा श्रुत्यैव वेद्यं तदिति ॥ ६० ॥

अवास्तवी वेद्यता चेदुपास्यत्वं तथा न किम्।
वृत्तिव्याप्तिर्वेद्यता चेदुपास्यत्वेऽपि तत् समम्॥ ६१॥
का ते भक्तिरुपास्तौ चेत् कस्ते द्वेषस्तदीरय।
मानाभावो न वाच्योऽस्यां बहुश्रुतिषु दर्शनात्॥ ६२॥
उत्तरस्मिंस्तापनीये शैब्यप्रश्नेऽथ काठके।
माण्डूक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता॥ ६३॥
अनुष्ठानप्रकारोऽस्याः पञ्चीकरण ईरितः।

---

ननु वेद्यत्वं ब्रह्मणो वास्तवं न भवतीत्याशङ्क्य उपास्यत्वमपि तथेत्याह अवास्तवी वेद्यता चेदिति। ननु वेदनपक्षे वृत्तेर्ब्रह्माकारत्वमस्ति नोपासने इत्याशङ्क्य प्रत्ययत्वात् तदाकारत्वमुभयत्र समानं इत्याह वृत्तिव्याप्तिरिति॥ ६१॥

युक्तिशून्य उपासनखण्डनपक्षेऽपि समान इत्याह का ते भक्तिरिति। ननु निर्गुणोपासने प्रमाणं नास्तीत्याशङ्क्यानेकासु श्रुतिषूपलभ्यमानत्वात् नैवमित्याह मानाभाव इति॥ ६२॥

बहुश्रुतिषु दर्शनादित्युक्तमर्थं विवृणोति उत्तरस्मिन्निति। तापनीयोपनिषदि तावदेवाह वै प्रजापतिमब्रुवन्नणोरणीयांसमिममात्मानमोङ्कारं नो व्याचक्ष्व इत्यादिना बहुधा निर्गुणोपासनमभिधीयते, शैब्यप्रश्ने प्रश्नोपनिषदि पञ्चमप्रश्ने यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीतेति काठके कठवल्ल्यां सर्वे वेदा यत् पदमामनन्ति इत्युपक्रम्य एतद्ध्येवाक्षरं ब्रह्म एतदालम्बनं श्रेष्ठमित्यादिना प्रणवोपासनमित्युक्तं माण्डूक्योपनिषदि ओमित्येतदक्षरमिदं सर्वमित्यादिना प्रणवात्मकतापन्नब्रह्मोपासनमेव विधीयत इत्यर्थः। आदिपदेन तैत्तिरीयकश्रुत्यादयो गृह्यन्ते॥ ६३॥

ननु निर्गुणोपासनं कथमनुष्ठेयमित्यत आह अनुष्ठानप्रकारोऽस्या

ज्ञानसाधनमेतच्चेत् नेति केनात्र वर्णितम् ॥ ६४ ॥
नानुतिष्ठति कोऽप्येतदिति चेन्नानुतिष्ठतु ।
पुरुषस्यापराधेन किमुपास्तिः प्रदुष्यति ॥ ६५ ॥
इतोऽप्यतिशयं मत्वा मन्त्रान् वश्यादिकारिणः ।
मूढा जपन्तु तेभ्योऽतिमूढाः कृषिमुपासताम् ॥ ६६ ॥
तिष्ठन्तु मूढाः प्रकृता निर्गुणोपास्तिरीर्य्यते ।
विद्यैक्यात् सर्वशाखास्थान् गुणानत्रोपसंहरेत् ॥ ६७ ॥

---

इति । नन्वेतदुपासनं ज्ञानसाधनमेव न मुक्तिसाधनमित्याशङ्क्य ब्रह्म-तत्त्वोपास्त्यापि मुच्यते इति वदतामस्माकमनुकूलमित्याह ज्ञानसाधन-मिति ॥ ६४ ॥

ननु सगुणोपासनमेव सर्वैरनुष्ठीयते न निर्गुणोपासनम् इत्याशङ्क्य तस्य प्रमाणसिद्धस्यापि त्यागो न युक्त इत्याह नानुतिष्ठतीति ॥ ६५ ॥

प्रमाणसिद्धस्यानुष्ठानाभावेनापरित्यज्यत्वे दृष्टान्तमाह इतोऽप्यतिशय-मिति । अयमभिप्रायः यथा सगुणोपासनेभ्यः कालान्तरभाविफलेभ्यो वश्यादिकारिमन्त्रेषु ऐहिकफलप्रदातृत्वं अतिशयं बुद्ध्वा मूढानां तन्मन्त्र-जपादौ प्रवृत्तावपि विवेकिभिः सगुणोपासनं न परित्यज्यते, यथा यमनियमानुष्ठानापेक्षेभ्योऽपि मन्त्रेभ्यः कृष्यादावतिशयं नियमानपेक्षत्वं मत्वा मूढतराणां तत्र प्रवृत्तावपि न तन्मन्त्रानुष्ठानं त्यज्यते, तथा सांसारिकफलेप्सूनां निर्गुणोपासनानुष्ठानाभावेऽपि मुमुक्षुभिर्निर्गुणो-पासनं त्यज्यत इति ॥ ६६ ॥

एवं प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति तिष्ठन्तु मूढाः इति । सर्ववेदान्तप्रत्ययचोदनाद्यविशेषादित्युक्तन्यायेन निर्गुणोपासनस्यैकत्वात् तासु शाखासु श्रुतानुपास्यगुणानेकत्रोपसंहृत्य उपासनं कर्त्तव्यमित्याह विद्यैक्यादिति ॥ ६७ ॥

आनन्दादेर्विधेयस्य गुणसंघस्य संहृतिः ।
आनन्दादय इत्यस्मिन् सूत्रे व्यासेन वर्णिता ॥ ६८ ॥
अस्थूलादेर्निषेध्यस्य गुणसंघस्य संहृतिः ।
तथा व्यासेन सूत्रेऽस्मिन्नुक्ताक्षरधियास्त्विति ॥ ६९ ॥
निर्गुणब्रह्मतत्त्वस्य विद्यायां गुणसंहृतिः ।
न युज्येतेत्युपालम्भो व्यासं प्रत्येव मां तु न ॥ ७० ॥
हिरण्यश्मश्रुसूर्यादिमूर्त्तीनामनुदाहृतेः ।
अविरुद्धं निर्गुणत्वमिति चेत् तुष्यतां त्वया ॥ ७१ ॥

ते च गुणाः द्विप्रकाराः विधेया निषेध्याश्चेति तत्र आनन्दो ब्रह्म विज्ञानमानन्दं ब्रह्म नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरस इत्यादयो ये विधेयगुणाः तेषामुपसंहारः आनन्दादयः प्रधानस्येत्यस्मिन्नधिकरणेऽभिहित इत्याह आनन्दादेरिति ॥ ६८ ॥

ये च अस्थूलमनण्वह्रस्वं यत् तदद्रेश्यमग्राह्यं अगोत्रमस्पर्शमरूपमव्ययमित्यादयो निषेध्या गुणास्तेषां सूत्रान्तरेणोपसंहारः अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तमित्यस्मिन्नधिकरणेऽभिहित इत्याह अस्थूलादेरिति ॥ ६९ ॥

ननु निर्गुणब्रह्मविद्यायां न गुणोपसंहार उपयुज्यते निर्गुणविद्यात्वविरोधादित्याशङ्क्य सूत्रकारेणैवाभिहितस्य उपसंहारस्याभिधीयमानत्वाद्व्यासं प्रतीदं चोद्यमुचितमित्याह निर्गुणब्रह्मतत्त्वस्येति ॥ ७० ॥

हिरण्यश्मश्रुत्वादिगुणविशिष्टमूर्त्तीनामनभिधानादिदं निर्गुणोपासनमेवेति चेत् तर्हि न विरोध इत्याह हिरण्यश्मश्रुसूर्यादीति हिरण्यश्मश्रुसूर्यादिमूर्त्तीनां हिरण्मयानि श्मश्रूणि च [illegible]

गुणानां लक्षकत्वेन न तत्त्वेऽन्तःप्रवेशनम् ।
इति चेदस्त्वेवमेव ब्रह्मतत्त्वमुपास्यताम् ॥ ७२ ॥
आनन्दादिभिरस्थूलादिभिश्चात्मात्र लक्षितः ।
अखण्डैकरसः सोऽहमस्मीत्येवमुपासते ॥ ७३ ॥
बोधोपास्त्योर्विशेषः क इति चेदुच्यते शृणु ।
वस्तुतन्त्रो भवेद् बोधः कर्तृतन्त्रमुपासनम् ॥ ७४ ॥
विचाराज्जायते बोधोऽनिच्छा यं न निवर्त्तयेत् ।
स्वोत्पत्तिमात्रात् संसारे दहत्यखिलसत्यताम् ॥ ७५ ॥

---

हिरण्मयश्मश्रुस्तथाविधः सूर्यो हिरण्मयश्मश्रुसूर्यः स आदिर्येषां ते हिरण्मयश्मश्रुसूर्यादयः तेषां मूर्त्तयो हिरण्मयश्मश्रुसूर्यादिमूर्त्तयस्तासामिति विग्रहः ॥ ७१ ॥

नन्वानन्दादीनाम् अस्थूलादीनाञ्च गुणानामुपास्यतत्त्वे अन्तःप्रवेशाभावात् तद्गुणविशिष्टत्वेन कथमुपास्यत्वमित्याशङ्क्य तेषां तत्त्वान्तःप्रवेशाभावेऽपि तथा लक्षकत्वसम्भवात् तैर्लक्षितं ब्रह्मोपास्यमित्याह गुणानामिति ॥ ७२ ॥

तथोपासनप्रकारमेव दर्शयति आनन्दादिभिरिति । अत्रात्र श्रुतिषु योऽखण्डैकरस आत्मानन्दादिभिरस्थूलादिभिश्च गुणैर्लक्षितः सोऽहमस्मीत्येवमुपासते मुमुक्षव इति शेषः ॥ ७३ ॥

नन्वेवं सति विद्योपासनयोः कुतो भेद इत्याशङ्क्य वस्तुतन्त्रत्वकर्तृतन्त्रत्वाभ्यां भेद इत्याह बोधोपास्त्योरिति ॥ ७४ ॥

वैलक्षण्यान्तरविवक्षया बोधस्य फलादिकं दर्शयति विचाराज्जायते इत्यादिना श्लोकद्वयेन । विचारात् वस्तुतत्त्वविचाराद् बोधो जायते, किञ्च विचारवशाज्जायमानं यं बोधमनिच्छा बोधो माभूदित्येवंरूपा

तावता कृतकृत्यः सन्नित्यतृप्तिमुपागतः ।
जीवन्मुक्तिमनुप्राप्य प्रारब्धक्षयमीक्षते ॥ ७६ ॥
आप्तोपदेशं विश्वस्य श्रद्धालुरविचारयन् ।
चिन्तयेत् प्रत्ययैरन्यैरनन्तरितवृत्तिभिः ॥ ७७ ॥
यावच्चिन्त्यस्वरूपत्वाभिमानः स्वस्य जायते ।
तावद् विचिन्त्य पश्चाच्च तथैवामृति धारयेत् ॥ ७८ ॥
ब्रह्मचारी भिक्षमाणो युतः संवर्गविद्यया ।
संवर्गरूपतां चित्ते धारयित्वा ह्यभिक्षत ॥ ७९ ॥
पुरुषस्येच्छया कर्त्तुमकर्त्तुं कर्त्तुमन्यथा ।

---

न निवर्त्तयेत् न निवारयेत् उत्पद्यमानश्च बोधः स्वजन्ममात्रात् संसारेऽखिलस्य प्रपञ्चस्य सत्यतां दहति नाशयति ॥ ७५ ॥

तावतेति तावता तत्त्वज्ञानोत्पत्तिमात्रेण निरतिशयं सुखं प्राप्नोतीत्यर्थः ॥ ७६ ॥

उपासनायाश्च बोधाद्वैलक्षण्यान्तरसिद्धये तद्दर्शयति आप्तोपदेशमिति । आप्तस्य गुरोरुपदेशमुपास्यस्वरूपप्रतिपादकवाक्यजातं विश्वस्य विश्वासं कृत्वा अविचारयन्नुपास्यतत्त्वं प्रत्ययैरन्यैर्घटादिविषयैरनन्तरितवृत्तिभिश्चिन्तयेदिति ॥ ७७ ॥

कियन्तं कालं चिन्तयेदित्याशङ्क्याह यावदिति ॥ ७८ ॥

उपासकस्य तद्रूपत्वाभिमानसद्भावमुदाहरणप्रदर्शनेन स्पष्टीकरोति ब्रह्मचारीति । कश्चित् संवर्गगुणविशिष्टः प्राणोपासको ब्रह्मचारी भिक्षाचरणार्थमागत्य अभिप्रतारिनाम्नो राज्ञः पुरतो महात्मनश्चतुरो देव एकः क स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्त्या अभिप्रतारिन् बहुधा वसन्तमिति मन्त्रं च स्वात्मनः संवर्गस्वरूपत्वं चित्ते धृतं प्रकटीकृतवानिति छान्दोग्ये श्रूयत इत्यर्थः ॥ ७९ ॥

शक्येति धारणे निमित्तं दर्शयन्नित्यत्वं स न निवर्त्तेतेत्युक्ताद्-

शक्योपास्तिरतो नित्यं कुर्य्यात् प्रत्ययसन्ततिम् ॥ ८० ॥

वेदाध्यायी ह्यप्रमत्तोऽधीते स्वप्नेऽपि वासितः।

जपिता तु जपत्येव तथा ध्यातापि वासयेत् ॥ ८१ ॥

विरोधिप्रत्ययं त्यक्त्वा नैरन्तर्य्येण भावयन्।

लभते वासनावेशात् स्वप्नादावपि भावनाम् ॥ ८२ ॥

भुञ्जानोऽपि निजारब्धमास्थातिशयतोऽनिशम्।

ध्यातुं शक्तो न सन्देहो विषयव्यसनी यथा ॥ ८३ ॥

परव्यसनिनी नारी व्यग्रापि गृहकर्म्मणि।

तदेवास्वादयत्यन्तः परसङ्गरसायनम् ॥ ८४ ॥

परसङ्गं स्वादयन्त्या अपि नो गृहकर्म्म तत्।

---

साधयेदित्याशङ्क्याह पुरुषस्येच्छया कर्तुमिति। उपास्तिः पुरुष-स्यापि स्वस्येच्छया कर्तुमकर्तुमन्यथा वा प्रकारान्तरेण वा कर्तुं शक्या अतः पुरुषस्येच्छानित्यादुपासनं सदा कुर्यादित्यर्थः ॥ ८० ॥

एवं सति सदा चिन्तने किं भवतीत्याह वेदाध्यायीति। अप्रमत्तो वेदाध्यायी सदाध्ययनशीलः जपिता सदा जपशीलो वा वासितः दृढ-वासनया स्वप्नादिष्वप्यध्ययनं जपं वा करोति एवमुपासकोऽपि वासना-दार्ढ्यात् स्वप्नादावपि ध्यायतीत्यर्थः ॥ ८१ ॥

स्वप्नादावपि ध्यानानुवर्तने कारणमाह विरोधीति। वासनावेशात् दृढसंस्कारात् भावना ध्यानम् ॥ ८२ ॥

ननु प्रारब्धकर्मवशाद्विषयाननुभवन् कथं नैरन्तर्येण भावनासिद्धि-रित्याशङ्क्य ध्यानातिशये सति विषयव्यसनिवद् भावनासिद्धिः स्यादित्याह भुञ्जानोऽपीति ॥ ८३ ॥

दृष्टान्तं विवृणोति परव्यसनिनीति ॥ ८४ ॥

कुण्ठीभवेदपि त्वेतदापातेनैव वर्त्तते ॥ ८५ ॥
गृहकृत्यव्यसनिनी यथा सम्यक् करोति तत्।
परव्यसनिनी तद्वत् न करोत्येव सर्वथा ॥ ८६ ॥
एवं ध्यानैकनिष्ठोऽपि लेशाल्लौकिकमाचरेत्।
तत्त्ववित् त्वविरोधित्वाल्लौकिकं सम्यगाचरेत् ॥ ८७ ॥
मायामयः प्रपञ्चोऽयमात्मा चैतन्यरूपधृक्।
इति बोधे विरोधः को लौकिकव्यवहारिणः ॥ ८८ ॥
अपेक्षते व्यवहृतिर्न प्रपञ्चस्य वस्तुताम्।
नाप्यात्मजाड्यं किन्त्वेषा साधनान्येव काङ्क्षति ॥८९॥
मनोवाक्कायतद्बाह्यपदार्थाः साधनानि तान्।
तत्त्वविन्नोपमृद्नाति व्यवहारोऽस्य नो कुतः ॥ ९० ॥

---

परव्यसनिन्यामादित्योक्तदृष्टान्तविरोधं आदित्याशङ्क्याह परव्यसनिनीति ॥ ८५ ॥

आपातेनैव वर्त्तत इत्युक्तमर्थं विवृणोति गृहकृत्यव्यसनिनीति ॥ ८५ ॥

दार्ष्टान्तिके योजयति एवं ध्यानैकनिष्ठोऽपीति। ननु तत्त्वविदपि लौकिकव्यवहारं किं लेशेनाचरति किंवा सम्यगिति विवक्षायां व्यवहारस्य तत्त्वज्ञानाविरोधित्वात् सम्यगाचरतीत्याह तत्त्ववित् त्वविरोधित्वादिति ॥ ८७ ॥

अविरोधित्वमेव दर्शयति मायामयः प्रपञ्चोऽयमिति ॥ ८८ ॥

विरोधाभावमेव प्रपञ्चयति अपेक्षते व्यवहृतिरिति ॥ ८९ ॥

कानि तानि व्यवहारसाधनानि इत्यत आह मनोवाक्कायेति।
ननु बाह्याः पदार्थाः [illegible]

उपमृद्नाति चित्तं चेद्ध्यातासौ न तु तत्त्ववित् ।
न बुद्धिं मर्दयन् दृष्टो घटतत्त्वस्य वेदिता ॥ ९१ ॥
सकृत् प्रत्ययमात्रेण घटश्चेद् भासते तदा ।
स्वप्रकाशोऽयमात्मा किं घटवच्च न भासते ॥ ९२ ॥
स्वप्रकाशतया किं ते तद्बुद्धिस्तत्त्ववेदनम् ।
बुद्धिश्च क्षणनाश्येति चोद्यं तुल्यं घटादिषु ॥ ९३ ॥
घटादौ निश्चिते बुद्धिर्नश्यत्येव यदा घटः ।
इष्टो नेतुं तदा शक्य इति चेत् सममात्मनि ॥ ९४ ॥

---

वर्णयति अतोऽस्य ज्ञानिनो व्यवहारः कुतो न भवतीति भवत्येवेत्यर्थः ॥ ९० ॥

ननु विषयानुपमर्देऽपि तत्त्वविदा चित्तोपमर्दनं कार्यमित्याशङ्क्य तदङ्गीकरणे तत्त्वविदेव न स्यादित्याह उपमृद्नातीति । ननु तत्त्वविदा चित्तं नोपमृद्यत इत्येतत् क्व दृष्टमित्याशङ्क्याह न बुद्धिमिति । घटतत्त्वस्य वेदिता ज्ञाता बुद्धिं मर्दयन् पीडयन् ऐकाग्र्यं कुर्वन् पुरुषो न दृष्टो नोपलभ्यत इत्यर्थः ॥ ९१ ॥

ननु घटस्य स्थूलत्वेन भातत्वात् तद्दर्शने चित्तपीडनं नापेक्ष्यते आत्मनः स्थूलत्वाभावात् तज्ज्ञाने तदपेक्ष्यत इत्याशङ्क्य तस्य स्वप्रकाशत्वेन घटादपि भातत्वात् चित्तरोधनं नैवापेक्ष्यत इत्याह सकृत् प्रत्ययमात्रेणेति ॥ ९२ ॥

ननु आत्मनः स्वप्रकाशत्वेऽपि तद्गोचरायाः बुद्धेस्तस्यैव तत्त्वज्ञानत्वात् तस्याश्च क्षणिकत्वेन तदर्थं पुनः पुनरभ्यासमपेक्ष्यत इत्याशङ्क्य एतच्चोद्यं घटादिष्वपि समानमित्याह स्वप्रकाशतयेति ॥ ९३ ॥

घटादिज्ञानस्य क्षणिकत्वेऽपि सकृन्निश्चितस्य घटस्य सर्वदा व्यव-

निश्चित्य सकृदात्मानं यदापेक्षा तदैव तत् ।
वक्तुं मन्तुं तथा ध्यातुं शक्नोत्येव हि तत्त्ववित् ॥ ९५ ॥
उपासक इव ध्यायन् लौकिकं विस्मरेद् यदि ।
विस्मरत्येव सा ध्यानाद् विस्मृतिर्न तु वेदनात् ॥ ९६ ॥
ध्यानं त्वैच्छिकमेतस्य वेदनान्मुक्तिसिद्धितः ।
ज्ञानादेव तु कैवल्यमिति शास्त्रेषु डिण्डिमः ॥ ९७ ॥
तत्त्वविद् यदि न ध्यायेत् प्रवर्त्तेत तदा बहिः ।
प्रवर्त्ततां सुखेनायं को बाधोऽस्य प्रवर्त्तने ॥ ९८ ॥
अतिप्रसङ्ग इति चेत् प्रसङ्गं तावदीरय ।
प्रसङ्गो विधिशास्त्रं चेत् न तत्तत्त्वविदं प्रति ॥ ९९ ॥

---

वक्तुं शक्यत्वात् तत्र चित्तस्थैर्यसम्पादनप्रयोजनाभावमित्याशङ्क्य दृढ-
ज्ञानस्यापि ध्यानमित्याह यदादाविति ॥ ९४ ॥

सकृदात्मनोऽनुसन्धानं वक्तीति निश्चित्येति ॥ ९५ ॥

ननु तत्त्वविदोऽपि उपासकवदात्मानुसन्धानवशात् जगदननुसन्धान-
दर्शनात् ध्यानमित्याशङ्क्य सोऽननुसन्धानाभावो ध्यानप्रयुक्तो न वेदन-
प्रयुक्त इत्याह उपासक इवेति ॥ ९६ ॥

ननु तत्त्वविदोऽपि मुक्तिसिद्धये सम्यग्ध्यानं कर्तव्यमित्याशङ्क्य ज्ञाना-
देव कैवल्यं प्राप्यते, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था
विद्यतेऽयनाय ज्ञात्वा देवं मुच्यते सर्वपाशैरित्यादिशास्त्रसद्भावात् न
मोक्षाय ध्यानं कर्तव्यमित्याह ध्यानं त्वैच्छिकमिति ॥ ९७ ॥

तत्त्वविदो ध्यानाभ्युपगमे तस्य सदा बहिः प्रवृत्तिः स्यादि-
त्याशङ्क्य अबाधकत्वात् प्रवृत्तेः साऽभ्युपेयत इत्याह तत्त्वविद्
यदीति ॥ ९८ ॥

बहिःप्रवृत्त्यभ्युपगमेऽतिप्रसङ्गः स्यादित्याशङ्क्य प्रसङ्गं दुर्निरूप-

वर्णाश्रमवयोवस्थाभिमानो यस्य विद्यते ।
तस्यैव हि निषेधाश्च विधयः सकला अपि ॥ १०० ॥
वर्णाश्रमादयो देहे मायया परिकल्पिताः ।
नात्मनो बोधरूपस्येत्येवं तस्य विनिश्चयः ॥ १०१ ॥
समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥ १०२ ॥
नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ।
न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥ १०३ ॥

---

त्याज्यैवेति परिहरति अतिप्रसङ्ग इति चेदिति । न प्रसङ्गो दुर्नि-रूपः विधिशास्त्रस्य प्रसङ्गपदेन विवक्षितत्वादिति चेन्न तस्याज्ञानि-विषयत्वेन तत्त्वविद्विषयत्वाभावादित्याह प्रसङ्ग इति । विधिशास्त्र-मित्युपलक्षणं निषेधशास्त्रस्यापि ॥ ९९ ॥

विधिशास्त्रस्याविद्वद्विषयत्वमेव दर्शयति वर्णाश्रमेति ॥ १०० ॥

ननु तत्त्वविदोऽपि देहधारित्वेन वर्णाश्रमाद्यभिमानित्वमवश्यंभावीत्या-शङ्क्याह वर्णाश्रमादय इति ॥ १०१ ॥

ननु तत्त्वविद्विषयत्वाभावेऽपि शास्त्रं तु तस्य कर्त्तव्यं प्रति-पादयति इत्याशङ्क्य तदपि तस्याकर्त्तव्यतामेव बोधयति इत्याह समा-धिमिति । हृदयेन बुद्ध्या अस्तसर्वास्थोऽस्ताः परित्यक्ताः सर्वाः अशेषाः आस्थाः आत्मकृतविशेषा यस्य स तथाविधः अत एव उत्तमाशयः उत्तमः आशयोऽभिप्रायः निर्मलं ज्ञानं यस्य स तथोक्तः स मुक्त एव अतः समाधिमथ कर्माणीत्यन्वयः ॥ १०२ ॥

विदुषां कर्त्तव्यं नास्तीत्यत्र पद्यान्तरमुदाहरति । नैष्कर्म्येणेति । नैष्कर्म्यं कर्मराहित्यं तेन कर्मत्यागेनेत्यर्थः, समाधानं समाधिर्जप्यं जपः ॥ १०३ ॥

आभासस्तु ततोऽन्यत् स्यादिन्द्रजालं हि मायिकम् ।
इत्यवधारणनिर्णीते कुतो मनसि वासना ॥ १०४ ॥
एवं नास्ति प्रसङ्गोऽपि कुतोऽस्यातिप्रसञ्जनम् ।
प्रसङ्गो यस्य तस्यैव शङ्क्येतातिप्रसञ्जनम् ॥ १०५ ॥
विध्यभावान्न बालस्य दृश्यतेऽतिप्रसञ्जनम् ।
स्यात् कुतोऽतिप्रसङ्गोऽस्य विध्यभावे समे सति ॥१०६॥
न किञ्चिद् वेत्ति बालश्चेत् सर्वं वेत्त्येव तत्त्ववित् ।
अल्पज्ञस्यैव विधयः सर्वे स्युर्नान्ययोर्द्वयोः ॥ १०७ ॥
शापानुग्रहसामर्थ्यं यस्यासौ तत्त्वविद् यदि ।
न तत् शापादिसामर्थ्यं फलं स्यात् तपसो यतः ॥१०८॥

---

ननु विदुषामपि वासनानिवृत्तये ध्यानं कर्तव्यमित्याशङ्क्य सम्यग्ज्ञानिनो वासनैव नास्तीत्याह आभासस्त्विति ॥ १०४ ॥

अथास्त्वेवं प्रकृते विनायासम् इत्यत आह एवं नास्ति प्रसङ्गोऽपीति । कुतस्तर्ह्यतिप्रसङ्ग इत्यत आह प्रसङ्गो यस्य तस्यैवेति ॥ १०५ ॥

एवं तु दृष्टविरुद्धत्वमित्यत आह विध्यभावान्न बालस्येति । [illegible] स्यादिति ॥ १०६ ॥

बालस्य विध्यभावप्रयोजकमज्ञत्वमस्ति न विदुष इत्याशङ्क्य तस्य अल्पज्ञत्वाभावेऽपि विध्यभावप्रयोजकं सर्वज्ञत्वमस्तीत्याह न किञ्चिदिति । तर्हि विध्यधिकारः कस्येत्याशङ्क्याह अल्पज्ञस्यैवेति ॥ १०७ ॥

ननु व्यासादिवत् शापानुग्रहसामर्थ्यं यस्य स एव तत्त्ववित् मान्य इति शङ्कते शापानुग्रहसामर्थ्यमिति । परिहरति नेति । तत्र हेतुमाह तच्छापादिसामर्थ्यमिति ॥ १०८ ॥

व्यासादेरपि सामर्थ्यं दृश्यते तपसो बलात्।
शापादिकारणादन्यत् तपोज्ञानस्य कारणम्॥ १०९॥
द्वयं यस्यास्ति तस्यैव सामर्थ्यज्ञानयोर्जनिः।
एकैकं तु तपः कुर्वन्नेकैकं लभते फलम्॥ ११०॥
सामर्थ्यहीनो निन्द्यश्चेत् यतिभिर्विधिवर्जितः।
निन्द्यन्ते यतयोऽप्यन्यैरनिशं भोगलम्पटैः॥ १११॥
भिक्षावस्त्रादि रक्षेयुर्यद्येते भोगतुष्टये।
अहो यतित्वमेतेषां वैराग्यभरमन्थरम्॥ ११२॥
वर्णाश्रमपरान् मूर्खा निन्दन्त्वित्युच्यते यदि।
देहात्ममतयो बुद्धं निन्दन्त्वाश्रममानिनः॥ ११३॥

ननु व्यासादीनां तत्त्वविदामपि शापादिसामर्थ्यं दृश्यते इत्याशङ्क्य तेषां न तत्त्वज्ञानफलम् अपि तु तपसः फलमित्याह व्यासादेरिति। ननु तर्हि तपसा ब्रह्म विजिज्ञासस्व इति श्रुतेस्तपोरहितस्य तत्त्वज्ञानमपि न घटते इत्याशङ्क्य शापादिकारणादन्यस्य तपसः तत्त्वा[illegible]मित्याह शापादीति॥ १०९॥

तर्हि तेषां व्यासादीनां तत्त्वज्ञानित्वं शापादिकारणत्वञ्च कथं दृश्यते इत्याशङ्क्य उभयविधतपसः सद्भावादित्याह द्वयं यस्यास्तीति॥ ११०॥

ननु शापादिसामर्थ्यरहितस्य विद्यमानेऽपि विहितानुष्ठाने निन्द्यत्वं स्यादित्याशङ्क्य तेषामपि विषयलम्पटैर्निन्द्यत्वं स्यादित्याह सामर्थ्यहीनो निन्द्यश्चेदिति॥ १११॥

एतेऽपि भोगतृष्णया विषयान् सम्पादयेयुरित्याशङ्क्य तदा तेषां यतित्वमेव क्षीयते इत्यभिप्रायेणोपहसति भिक्षावस्त्रादि रक्षेयुरिति॥ ११२॥

विषयलम्पटैः पामरैः क्रियमाणया निन्दया क्रियमाणायां विद्व-

तदित्थं तत्त्वविज्ञाने साधनानुपमर्द्दनात् ।
ज्ञानिनाचरितुं शक्यं सम्यग्राज्यादि लौकिकम् ॥११४॥
मिथ्यात्वबुद्ध्या तत्रेच्छा नास्ति चेत् तर्हि मास्तु तत् ।
ध्यायन् वाथ व्यवहरन् यथारब्धं वसत्वयम् ॥ ११५ ॥
उपासकस्तु सततं ध्यायन्नेव वसेद् यतः ।
ध्यानेनैव कृतं तस्य ब्रह्मत्वं विष्णुतादिवत् ॥ ११६ ॥
ध्यानोपादानकं यत् तद् ध्यानाभावे विलीयते ।
वास्तवी ब्रह्मता नैव ज्ञानाभावे विलीयते ॥११७॥

---

ज्ञानी ज्ञानिनोऽसीत्युच्यते चेत् तर्हि देहाभिमानिभिः क्रियमाणैः क्रियमाणया निन्दया तत्त्वविदोऽपि न ज्ञानिरित्याह वचोभिस्तम- वरात् मूर्खा इति ॥ ११३ ॥

प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति तदित्थमिति । तत् तस्मात् कारणात् इत्थमुक्तप्रकारेण तत्त्वज्ञाने सति साधनानुपमर्द्दनात् लौकिक- व्यवहारसाधनानां मनआदीनाम् अविनाशनात् लौकिकं राज्यपरि- पालनादि कर्म ज्ञानिना सम्यगाचरितुं शक्यमित्यर्थः ॥ ११४ ॥

ननु तत्त्वविदः प्रपञ्चमिथ्यात्वज्ञानेन तत्रेच्छैव नोदीयात् इति चेत् तर्हि प्रारब्धानुसारेण वर्त्ततामित्याह मिथ्येति ॥ ११५ ॥

इदानीम् उपासकज्ञानो वैषम्यं दर्शयति उपासकस्त्विति । तत्रोप- पत्तिमाह यत इति । यतः कारणात् तस्य ब्रह्मत्वं ध्यानेनैव कृतं न प्रमाणेन प्रमितम् अतो ध्यायिना सदा ध्यानं कर्त्तव्यमित्यर्थः । तत्र दृष्टान्तः विष्णुतादिवदिति । यथा अर्वाक् ध्यानेन सम्पादितस्य विष्णु- त्वादेः पारमार्थिकत्वं नास्ति तद्वदित्यर्थः ॥ ११६ ॥

ध्यानसम्पादितस्यापि तस्य पारमार्थिकत्वं किं न स्यादित्याशङ्क्य ध्यानसम्पादितस्य ब्रह्मत्वादेः ध्यानाभावेऽपगमदर्शनान्नैवमित्याह

ततोऽभिज्ञापकं ज्ञानं न नित्यं जनयत्यदः ।
ज्ञापकाभावमात्रेण न हि सत्यं विलीयते ॥ ११८ ॥
अस्त्येवोपासकस्यापि वास्तवी ब्रह्मतेति चेत् ।
पामराणां तिरश्चां च वास्तवी ब्रह्मता न किम् ॥ ११९ ॥
अज्ञानादपुमर्थत्वमुभयत्रापि तत् समम् ।
उपवासाद् यथा भिक्षा वरं ध्यानं तथान्यतः ॥ १२० ॥
पामराणां व्यवहृतेर्वरं कर्माद्यनुष्ठितिः ।

ध्यानेति । ज्ञानेन प्रकाशितस्य ब्रह्मत्वस्य ततो वैलक्षण्यमाह वास्तवीति हेतुगर्भितं विशेषणं यतो ब्रह्मत्वं वास्तवम् अतो ज्ञापकज्ञानाभावे सति नैव विलीयते ॥ ११७ ॥

वास्तवत्वादेव ज्ञानेन नैव जन्यते इत्याह ततोऽभिज्ञापकमिति । यतोऽदो ब्रह्मत्वं नित्यं ततो ज्ञानं तस्याभिज्ञापकम् अवबोधकमेव न जनकमित्यर्थः । तत्रोपपत्तिं व्यतिरेकमुखेनाह ज्ञापकाभावमात्रेणेति । अयमभिप्रायः ब्रह्मत्वं यदि ज्ञानजन्यं स्यात् तर्हि ज्ञाननाशे अयं विलीयेत न च विलीयतेऽतो न जन्यमित्यर्थः ॥ ११८ ॥

ननु ज्ञानिवदुपासकस्यापि ब्रह्मत्वं वास्तवमस्त्येवेति शङ्कते अस्त्येवोपासकस्येति । अत्यल्पमिदमुच्यते इत्यभिप्रायेणाह पामराणामिति ॥ ११९ ॥

पामरादीनां विद्यमानमपि ब्रह्मत्वम् अज्ञातत्वात् न पुरुषार्थोपयोगीत्याशङ्क्य अज्ञातत्वेनापुरुषार्थोपयोगित्वमुपासकस्यापि समानमित्याह अज्ञानादपुमर्थत्वमिति । ननु तर्ह्युपासनं किमर्थमभिधीयते इत्याशङ्क्य इतरानुष्ठानेभ्यः श्रेष्ठत्वाभिप्रायेणोक्तमिति दृष्टान्तपूर्वकमाह उपवासादिति ॥ १२० ॥

ततोऽपि सगुणोपास्तिर्निर्गुणोपासनं ततः ॥ १२१ ॥
यावद् विज्ञानसामीप्यं तावत् श्रैष्ठ्यं विवर्द्धते ।
ब्रह्मज्ञानायते साक्षात् निर्गुणोपासनं शनैः ॥ १२२ ॥
यथा संवादिविभ्रान्तिः फलकाले प्रमायते ।
विद्यायते तथोपास्तिर्मुक्तिकालेऽतिपाकतः ॥ १२३ ॥
संवादिभ्रमतः पुंसः प्रवृत्तस्यान्यमानतः ।
प्रमेति चेत् तथोपास्तिर्मान्तरे कारणायताम् ॥ १२४ ॥
मूर्त्तिध्यानस्य मन्त्रादेरपि कारणता यदि ।
अस्तु नाम तथाप्यत्र प्रत्यासत्तिर्विशिष्यते ॥ १२५ ॥
निर्गुणोपासनं पक्वं समाधिः स्यात् शनैस्ततः ।

---

इतराद्गुणनात् श्रैष्ठ्यमेव दर्शयति पामराणां व्यवहृते-रिति ॥ १२१ ॥

उत्तरोत्तरश्रैष्ठ्ये कारणमाह यावदिति । निर्गुणोपासनस्य सर्वश्रैष्ठ्ये कारणमाह ब्रह्मज्ञानायते इति ॥ १२२ ॥

उक्तमर्थं दृष्टान्तप्रदर्शनपूर्वकं द्रढयति यथेति ॥ १२१ ॥

ननु संवादिविभ्रान्तिः स्वयमेव न प्रमा भवति किन्तु तया प्रवृत्त-स्येन्द्रियसंनिकर्षात् प्रमा जायते इति मनुते संवादीति । अस्तु, तर्हि निर्गुणोपासनमपि निदिध्यासनरूपं सत् ब्रह्मापरोक्षज्ञाने कारणं भविष्यतीत्याह तथोपास्तिरिति ॥ १२४ ॥

ननु एवं सति मूर्त्तिध्यानादेरपि चित्तैकाग्र्यसम्पादनद्वाराऽपरोक्ष-ज्ञानसाधनत्वं स्यादिति चेत् तदप्यङ्गीक्रियते इत्याह मूर्त्तीति । तर्हि निर्गुणोपासने कोऽतिशयस्तत्राह तथाप्यत्रेति । प्रत्यासत्तिः सामीप्य-ज्ञानं प्रतीति भेदः ॥ १२५ ॥

यः समाधिर्निरोधाख्यः सोऽनायासेन लभ्यते ॥ १२६ ॥
निरोधलाभे पुंसोऽन्तरसङ्गं वस्तु शिष्यते ।
पुनः पुनर्वासितेऽस्मिन् वाक्यात् जायेत तत्त्वधीः ॥१२७॥
निर्विकारासङ्गनित्यस्वप्रकाशैकपूर्णताः ।
बुद्धौ झटिति शास्त्रोक्ता आरोहन्त्यविवादतः ॥ १२८ ॥
योगाभ्यासस्त्वेतदर्थोऽमृतबिन्द्वादिषु श्रुतः ।
एवञ्च दृष्टद्वारापि हेतुत्वादन्यतो वरम् ॥ १२९ ॥
उपेक्ष्य तत्तीर्थयात्रां जपादीनेव कुर्वताम् ।

---

प्रत्यासत्तिप्रकारमेव दर्शयति निर्गुणोपासनमिति । निर्गुणोपासनं यदा पक्वं भवति तदा सविकल्पकसमाधिः स्यात् ततः सविकल्पकसमाधेर्निरोधाख्यो यस्तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिरिति श्लोकलक्षणो निर्विकल्पः समाधिः सोऽनायासेन लभ्यते ॥१२६॥

भवत्वेवं निर्विकल्पकलाभस्ततः किमित्यत आह । निरोधलाभ इति । ततोऽपि किमित्यत आह पुनः पुनरिति । अस्मिन्नसङ्गे वस्तुनि पुनः पुनर्वासिते भाविते सति वाक्यात् तत्त्वमस्यादिवाक्यात् तत्त्वधीस्तत्त्वज्ञानम् अहं ब्रह्मास्मीत्येवमाकारं जायेतोत्पद्येत ॥ १२७ ॥

तत्त्वज्ञानस्वरूपमेव विशदयति निर्विकारेति ॥ १२८ ॥

ननु निर्विकल्पसमाधिद्वारापरोक्षज्ञानहेतोरस्य किं प्रमाणमित्याशङ्क्य अमृतबिन्द्वादिश्रुतयः प्रमाणमित्याह योगाभ्यास इति । फलितमाह एवञ्चेति एवञ्च सति निर्गुणोपासनस्यापरोक्षज्ञानप्रत्यासत्तिसद्भावे सति दृष्टद्वारापि निर्विकल्पसमाधिलाभद्वारेण अपि शब्दाददृष्टद्वारापि हेतुत्वात् ज्ञानसाधनत्वात् अन्यतः सगुणोपासनादिभ्यो वरं श्रेष्ठमित्यर्थः ॥ १२९ ॥

पिण्डं समुत्सृज्य करं लेढीति न्याय आपतेत् ॥ १३० ॥
उपासकानामप्येवं विचारत्यागतो यदि ।
बाढं तस्माद् विचारस्यासम्भवे योग ईरितः ॥ १३१ ॥
बहुव्याकुलचित्तानां विचारात् तत्त्वधीर्नहि ।
योगो मुख्यस्ततस्तेषां धीदर्पस्तेन नश्यति ॥ १३२ ॥
अव्याकुलधियां मोहमात्रेणाच्छादितात्मनाम् ।
सांख्यनामा विचारः स्यान्मुख्यो झटिति सिद्धिदः ॥ १३३ ॥
यत् सांख्यैः प्राप्यते स्थानं तत् योगैरपि गम्यते ।

एवं निर्गुणोपासनस्यापरोक्षज्ञानसाधनत्वे सिद्धे सति तदुपरित्यज्य अन्यत्र प्रवृत्तानां वृथा श्रमः स्यादिति लौकिकन्यायप्रदर्शनेन उपेक्ष्येति ॥ १३० ॥

ननु तत्त्वविचारं परित्यज्य निर्गुणोपासनं कुर्वतामप्ययं न्यायः समान इत्याशङ्क्याङ्गीकरोति उपासकानामिति । तर्हि निर्गुणोपासनं कुतः प्रतिपाद्यत इत्यत आह तस्मादिति । यस्मादुक्तन्यायःसमुक्तस्तस्माद् विचारासम्भवे योग उपासनमुक्तमित्यर्थः ॥ १३१ ॥

विचारासम्भवे कारणमाह बहुव्याकुलचित्तानामिति । यतो विचारो न सम्भवति अतो योगः कर्तव्य इत्याह योगो मुख्य इति । मुख्यत्वे कारणमाह धीदर्प इति । तेन योगेन यतो धीदर्पो नश्यति अतो मुख्य इत्यर्थः ॥ १३२ ॥

एवं व्याकुलचित्तानां योगमुख्यत्वमभिधाय तद्रहितानां विचारो मुख्य इत्याह अव्याकुलधियामिति । सांख्यनामा विचारः सम्यगात्मानात्मविचारो मुख्यः । कुत इत्यत आह झटिति सिद्धिद इति ॥ १३३ ॥

योगसांख्ययोरुभयोरपि तत्त्वज्ञानद्वारा मुक्तिसाधनत्वे गीता-

एकं साङ्ख्यञ्च योगञ्च यः पश्यति स पश्यति ॥ १३४ ॥

तत् कारणं साङ्ख्ययोगाधिगम्यमिति हि श्रुतिः ।
यस्तु श्रुतेर्विरुद्धः स आभास साङ्ख्ययोगयोः ॥ १३५ ॥

उपासनं नातिपक्वमिह यस्य परत्र सः ।
मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते ॥ १३६ ॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति यच्चित्तस्तेन यातीति शास्त्रतः ॥ १३७ ॥

अन्त्यप्रत्ययतो नूनं भाविजन्म तथा सति ।
निर्गुणप्रत्ययोऽपि स्यात् सगुणोपासने यथा ॥ १३८ ॥

---

वाक्यं प्रमाणयति यत् सांख्यैरिति । यः सांख्यं योगञ्च फलत एकं पश्यति स शास्त्रार्थं सम्यक् पश्यतीत्यर्थः ॥ १३४ ॥

न केवलं गीतावाक्यं प्रमाणं किन्तु तन्मूलभूता श्रुतिरप्यस्तीत्याह तत्कारणमिति । ननु सांख्ययोगशास्त्रयोस्तत्त्वज्ञानसाधनत्वेनाङ्गीकारे तच्छास्त्रप्रतिपादितानां तत्त्वानामपि स्वीकार्यत्वं स्यादित्याशङ्क्याह यस्त्विति । आभासो बाध्यत इत्यर्थः ॥ १३५ ॥

ननूपासनं कुर्वाणस्य तत्त्वज्ञानात् पूर्वं प्राप्तमरणे सति मोक्षो न सिध्येदित्याशङ्क्याह उपासनमिति ॥ १३६ ॥

मरणावसरे ज्ञानाभिव्यक्तिलाभे प्रमाणमाह यं यं वापीति । यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथा सङ्कल्पितं लोकं नयतीति वाक्याच्चेत्यर्थः ॥ १३७ ॥

नन्वेताभ्यां श्रुतिस्मृतिवाक्याभ्यामन्त्यप्रत्ययतो भाविजन्माभिधीयते न ज्ञानाभिव्यक्तिरित्याशङ्क्य मुख्यतत्त्वज्ञानं विधानमङ्गीकरोति अन्त्यप्रत्ययत इति । एवं तर्हि मरणकाले ज्ञानात् मोक्षो भवतीत्येतद् वाक्यद्वय प्रमाणत्वेन उपपन्नमित्याशङ्क्याह तथा सतीति । तथा सत्यन्त्य-

उपासनस्य सामर्थ्यात् विद्योत्पत्तिर्भवेत् ततः ।
नान्यः पन्था इति ह्येतच्छास्त्रं नैव विरुध्यते ॥ १४२ ॥
निष्कामोपासनान्मुक्तिस्तापनीये समीरिता ।
ब्रह्मलोकः सकामस्य शैब्यप्रश्ने समीरितः ॥ १४३ ॥
य उपास्ते त्रिमात्रेण ब्रह्मलोके स नीयते ।
स एतस्माज्जीवघनात् परं पुरुषमीक्षते ॥ १४४ ॥

---

वेति रुद्रस्तमित्यादिवाक्यैस्तापनीयोपनिषदि यदि निर्गुणोपासनस्य मोक्षफलत्वेन श्रूयते इत्यर्थः ॥ १४१ ॥

ननूपासनयापि मुक्तिः स्याच्चेन्नान्यः पन्था विद्यतेऽयनाय इति श्रुतिविरोध इत्याशङ्क्य विद्याव्यवधानेन मोक्षप्रदत्वाभिधानान्न विरोध इत्याह उपासनस्येति ॥ १४२ ॥

अरण्ये ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते इत्युक्तेऽर्थे श्रुतिद्वयं प्रमाणयति निष्कामोपासनादिति ॥ १४३ ॥

तत्र सकामनिष्काम इत्यादि तापनीयवाक्यं पूर्वमेवोदाहृतम् इदानीं प्रश्नोपनिषद्वाक्यमर्थतः पठति य उपास्ते इति । यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते इति सकामस्य ब्रह्मलोकप्राप्तिः श्रूयत इत्यर्थः । ननु शैब्यप्रश्ने सकामस्य ब्रह्मलोकगतिरिति न मुक्तिः प्रतीयते इत्याशङ्क्य तत्र तत्त्वसाक्षात्कारः श्रूयते इत्याह स एतस्मादिति । ब्रह्मलोकं गतः स उपासकः एतस्मात् जीवघनात् जीवसमष्टिरूपात् हिरण्यगर्भात् परम् उत्कृष्टं पुरुषं निरुपाधिकचैतन्यरूपं परमात्मानमीक्षते साक्षात्करोतीत्यर्थः ॥ १४४ ॥

अप्रतीकाधिकरणे तत्क्रतुर्न्याय ईरितः ।
ब्रह्मलोकफलं तस्मात् सकामस्येति वर्णितम् ॥ १४५ ॥
निर्गुणोपास्तिसामर्थ्यात् तत्र तत्त्वमवेक्षणात् ।
पुनरावर्त्तते नायं कल्पान्ते तु विमुच्यते ॥ १४६ ॥
प्रणवोपास्तयः प्रायो निर्गुणा एव वेदगाः ।
क्वचित् सगुणता प्रोक्ता प्रणवोपासनस्य हि ॥ १४७ ॥
परापरब्रह्मरूप ओङ्कार उपवर्णितः ।
पिप्पलादेन मुनिना सत्यकामाय पृच्छते ॥ १४८ ॥
एतदालम्बनं ज्ञात्वा यो यदिच्छति तस्य तत् ।
इति प्रोक्तं यमेनापि पृच्छते नचिकेतसे ॥ १४९ ॥

---

किञ्च अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्चेत्यत्र कामानुसारेण फलप्राप्तिर्भवतीति प्रतिपादितं तस्मात् सकामस्य ब्रह्मलोकगतिरस्त्युक्तमित्याह अप्रतीकेति ॥ १४५ ॥

तर्हि सकामस्य तत्त्वज्ञानं कुतो जायते इत्याशङ्क्याह निर्गुणेति । इम मानवमावर्त्तं नावर्त्तन्ते न स पुनरावर्त्तते ब्रह्मणा सह ते सर्वे इत्यादिश्रुतिस्मृतिसद्भावात् तस्य पुनः संसारप्राप्तिः किन्तु मुक्तिरेवेत्याह पुनरिति ॥ १४६ ॥

इदानीं प्रणवोपासनप्रसङ्गात् गुणित्व तद्द्वैविध्यं दर्शयति प्रणवेति ॥ १४७ ॥

द्वैविध्ये प्रमाणमाह परापरेति । एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेतीति श्रुत्युभयरूपत्वं प्रतिपादितमित्यर्थः ॥ १४८ ॥

कठवल्ल्यां यमेनापि एतदालम्बनं ज्ञात्वेत्यादिना द्वैविध्यमुक्तमित्याह एतदिति ॥ १४९ ॥

इह वा मरणे वास्य ब्रह्मलोकेऽथवा भवेत्।
ब्रह्मसाक्षात्कृतिः सम्यगुपासीनस्य निर्गुणम् ॥ १५० ॥
अर्थोऽयमात्मगीतायामपि स्पष्टमुदीरितः।
विचाराक्षम आत्मानमुपासीतेति सन्ततम् ॥ १५१ ॥
साक्षात् कर्त्तुमशक्तोऽपि चिन्तयेन्मामशङ्कितः।
कालेनानुभवारूढो भवेयं फलतो ध्रुवम् ॥ १५२ ॥
यथागाधनिधेर्लब्धौ नोपायः खननं विना।
मल्लाभेऽपि तथा स्वात्मचिन्तां मुक्त्वा न चापरः ॥ १५३॥
देहोपलमपाकृत्य बुद्धिकुद्दालकात् पुनः।
खात्वा मनोभुवं भूयो गृह्णीयान्मां निधिं पुमान् ॥ ५४॥
अनुभूतेरभावेऽपि ब्रह्मास्मीत्येव चिन्त्यताम्।
अप्यसत् प्राप्यते ध्यानात् नित्याप्तं ब्रह्म किं पुनः॥१५५॥

---

उक्तमर्थमुपसंहरति इह वेति ॥ १५० ॥

विचारात् तत्त्वज्ञानसम्पादनासमर्थस्य निर्गुणब्रह्मध्यानेऽधिकार इत्ययमर्थं आत्मगीतायाम् सम्यगभिहित इत्याह अर्थोऽयमिति ॥ १५१ ॥

आत्मगीतावाक्यान्येवोदाहरति साक्षात्कर्त्तुमिति ॥ १५२ ॥

ध्यानस्य सम्यक्ज्ञानोपायत्वे दृष्टान्तमाह यथेति। दार्ष्टान्तिके योजयति मल्लाभेऽपीति ॥ १५३ ॥

व्यतिरेकबोध्यमर्थमन्वयमुखेनाह देहोपलमिति ॥ १५४ ॥

ज्ञानेऽसमर्थस्य ध्यानेऽधिकार इत्यत्र वाक्यान्तरं पठति अनुभूतेरिति। ध्यानादपि ब्रह्मप्राप्तौ कैमुतिकन्यायमाह अप्यसदिति। उपासकस्य पूर्वमविद्यमानमपि देवत्वादिकं ध्यानात् प्राप्यते किमु स्वरूपत्वेन

अनात्मबुद्धिशैथिल्यं फलं ध्यानाद् दिने दिने ।
पश्यन्नपि न चेत् ध्यायेत् कोऽपरोऽस्मात् पशुर्वद ॥१५६॥
देहाभिमानं विध्वस्य ध्यानादात्मानमद्वयम् ।
पश्यन् मर्त्यो मृतो भूत्वा ह्यत्र ब्रह्म समश्नुते ॥ १५७ ॥
ध्यानदीपमिमं सम्यक् परामृशति यो नरः ।
मुक्तसंशय एवायं ध्यायति ब्रह्म सन्ततम् ॥ १५८ ॥

इति ध्यानदीपः समाप्तः ।

---

नित्यप्राप्तं सर्वात्मकं ब्रह्म ध्यानात् प्राप्यते इति किमुत वक्तव्यमित्यर्थः ॥ १५५ ॥

ब्रह्मध्यानफलस्य प्रत्यक्षसिद्धत्वादपि ध्यानं कर्त्तव्यमित्याह अनात्मेति ॥ १५६ ॥

सदादीरुपपादितमर्थं संक्षिप्य दर्शयति देहाभिमानमिति । मरणशीले देहेऽहम् इत्यभिमानपरित्यागात् स्वयममृतो भूत्वा अस्मिन्नेव शरीरे स्थित्वा निजं स्वरूपं सदानन्दचिद्रूपं ब्रह्म प्राप्नोतीत्यर्थः ॥ १५७ ॥

ग्रन्थचिन्तनफलमाह ध्यानदीपमिति ॥ १५८ ॥

इति ध्यानदीपव्याख्या समाप्ता ।

# दशमपरिच्छेदः ।

## नाटकदीपः ।

परमात्माद्वयानन्दपूर्णः पूर्वं स्वमायया ।
स्वयमेव जगद् भूत्वा प्राविशत् जीवरूपतः ॥ १ ॥
ब्रह्माद्युत्तमदेहेषु प्रविष्टो देवताभवत् ।
मर्त्याद्यधमदेहेषु स्थितो भजति देवताम् ॥ २ ॥

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
अर्थो नाटकदीपस्य मया संक्षिप्य वर्ण्यते ॥

चिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणायाभिमतदेवतातत्त्वानुस्मरणलक्षणं मङ्गलमाचरन् मन्दाधिकारिणामनायासेन निष्प्रपञ्चब्रह्मात्मतत्त्वप्रतिपत्तिसिद्धये अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते शिष्याणां बोधसिद्ध्यर्थं तत्त्वज्ञैः कल्पितः क्रमः इति न्यायमनुसृत्या-त्मन्यध्यारोपं तावदाह परमात्मेति । पूर्वं सृष्टेः प्राक् अद्वयानन्दपूर्णः सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं विज्ञानमानन्दं ब्रह्म पूर्णमदः पूर्णमिदमित्यादिश्रुतिप्रसिद्धः स्वगतादिभेदशून्यः परमानन्दरूपः परिपूर्णः परात्मा स्वमायया मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति श्रुत्युक्तया स्वनिष्ठया मायाशक्त्या स्वयमेव जगद्भूत्वा तदात्मानं स्वयमकुरुत सच्च त्यच्चाभवदित्यादिश्रुतेः स्वयमेव जगदाकारतां प्राप्य जीवरूपतः प्राविशत् तत् सृष्ट्वा तदेवानुप्राविशत् अनेन जीवेनात्मनाऽनु-प्रविश्य इत्यादिश्रुतेर्जीवरूपेण प्रविष्टवानित्यर्थः ॥ १ ॥

ननु परमात्मन एव एकस्य सर्वशरीरेषु प्रविष्टत्वेन पूज्यपूजकादि-

अनेकजन्मभजनात् स्वविचारं चिकीर्षति ।
विचारेण विनष्टायां मायायां शिष्यते स्वयम् ॥ ३ ॥
अद्वयानन्दरूपस्य सद्वयत्वञ्च दुःखिता ।
बन्धः प्रोक्तः स्वरूपेण स्थितिर्मुक्तिरितीर्य्यते ॥ ४ ॥
अविचारकृतो बन्धो विचारेण निवर्त्तते ।
तस्माज्जीवपरात्मानौ सर्वदैव विचारयेत् ॥ ५ ॥

---

भावेन प्रतीयमान उत्तमाधमादिभावो विरुध्येतेत्याशङ्क्याह ब्रह्मादीति। नायं स्वाभाविक उत्तमाधमभावः किन्तु शरीरोपाधिनिबन्धनोऽतो न विरोध इति भावः ॥ २ ॥

इत्थमात्मन्यध्यारोपं सङ्क्षेपेण प्रदर्श्य सप्रधानं तदपवादं प्रक्रम्य दर्शयति अनेकेति। अनेकजन्मभजनादनेकेषु जन्मस्वनुष्ठितानां कर्मणां ब्रह्मणि समर्पणरूपात् भजनात् स्वविचारं स्वस्यात्मनो ब्रह्मरूपस्य ज्ञानसाधनं श्रवणादिकं चिकीर्षति कर्तुमिच्छति ततः स्वविचारेण विचारजनितज्ञानेन मायायां स्वस्याद्वयानन्दत्वादिरूपाच्छादिकायाम् अज्ञानाविद्यादिशब्दवाच्यायां विनष्टायां निवृत्तायां सत्यां स्वयमद्वयानन्दरूपः परमात्मैवावशिष्यते ॥ ३ ॥

ननु तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते इत्यादिश्रुतिभिः बन्धनिवृत्तिलक्षणस्य मोक्षस्य ज्ञानफलत्वाभिधानात् परमात्मावशेषस्य तत्फलत्वाभिधानमनुपपन्नमित्याशङ्क्याह अद्वयेति। अद्वितीये ब्रह्मणि वास्तवस्य बन्धस्य मोक्षस्य वा दुर्निरूपत्वात् दुःखित्वादिभ्रम एव बन्धः स्वरूपावस्थितिलक्षणः तन्निवृत्तिरेव मोक्षः अतो न श्रुतिविरोध इति भावः ॥ ४ ॥

ननु कर्मणैव हि संसिद्धिमास्थिता जनकादय इति स्मृतेर्मोक्षस्य कर्मसाध्यत्वावगमात् किमनेन विचारजनितज्ञानेनेत्यत आह अवि-

अहमित्यभिमन्ता यः कर्त्तासौ तस्य साधनम् ।
मनस्तस्य क्रिये अन्तर्वहिर्वृत्ती क्रमोत्थिते ॥ ६ ॥
अन्तर्मुखाहमित्येषा वृत्तिः कर्त्तारमुल्लिखेत् ।
वहिर्मुखेदमित्येषा वाह्यं वस्त्विदमुल्लिखेत् ॥ ७ ॥
इदमो ये विशेषाः स्युर्गन्धरूपरसादयः ।
असाङ्कर्य्येण तान् भिन्द्यात् घ्राणादीन्द्रियपञ्चकम् ॥८॥
कर्त्तारञ्च क्रियां तद्वद् व्यावृत्तविषयानपि ।

---

चारेति। विचारप्रागभावोपलक्षिताज्ञानकृतस्य बन्धस्य न विचारजन्यज्ञानादन्यतो निवृत्तिरुपपद्यते उदाहृतश्रुतौ च संसिद्धिशब्देन चित्तशुद्धिरेवाभिधीयते न मोक्ष इति भावः। विचारेण बन्धनिवृत्तिश्चेत् किं विषयेण विचारेणेत्यत आह तस्मादिति। तत्त्वसाक्षात्कारपर्य्यन्तं सर्व्वदा विचारं कुर्य्यादित्यर्थः॥ ५॥

तत्र जीवस्य स्वरूपं तावद् दर्शयति अहमिति। चिदाभासविशिष्टोऽहङ्कारो व्यवहारदशायां देहादावहमित्यभिमन्यते असौ कर्त्ता कर्त्तृत्वादिधर्म्मविशिष्टो जीव इत्यर्थः। तस्य किं करणमित्याकाङ्क्षायामाह तस्य साधनं मन इति। कामादिवृत्तिमानन्तःकरणभागो मनः। करणस्य क्रियाव्याप्तत्वात् तत्क्रियां दर्शयति तस्य क्रिये इति॥ ६॥

अनयोरन्तर्बहिर्वृत्त्योः स्वरूपं विषयञ्च विविच्य दर्शयति अन्तर्मुखेति। इदमित्येषेति बहिर्वृत्तेः स्वरूपाभिनयः अवशिष्टेन विषयप्रदर्शनं बाह्यं देहाद् बहिर्वर्त्तमानमिदन्तया निर्दिश्यमानं वस्तु उल्लिखेत् विषयीकुर्य्यादित्यर्थः॥ ७॥

ननु मनसैव सर्व्वव्यवहारसिद्धौ चक्षुरादीन्द्रियवैयर्थ्यं प्रसज्येत इत्याशङ्क्याह इदम इति। मनसेदमिति सामान्यमात्रं गृह्यते न तु तद्विशेषो गन्धादिः अतस्तदुपलब्धये घ्राणादिकमुपयुज्यत इत्यर्थः॥ ८॥

एवं सोपकरणं जीवस्वरूपं निरूप्य परमात्मानं निरूपयति

स्फोरयेदेकयत्नेन योऽसौ साक्ष्यत्र चिद्वपुः॥ ९॥
ईक्षे शृणोमि जिघ्रामि स्वादयामि स्पृशाम्यहम्।
इति भासयते सर्वं नृत्यशालास्थदीपवत्॥ १०॥
नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्त्तकीम्।
दीपयेदविशेषेण तदभावेऽपि दीप्यते॥ ११॥
अहङ्कारं धियं साक्षी विषयानपि भासयेत्।
अहङ्काराद्यभावेऽपि स्वयं भात्येव पूर्ववत्॥ १२॥
निरन्तरं भासमाने कूटस्थे ज्ञप्तिरूपतः।
तद्भासा भास्यमानेयं बुद्धिर्नृत्यत्यनेकधा॥ १३॥

---

कर्त्तारमिति। कर्त्तारं पूर्वोक्तमहङ्काररूपं क्रियामहमिदमाकारकमनो-वृत्तिरूपां व्यावृत्तविषयानपि व्यावृत्तानन्योन्यविलक्षणान् रूपादि-व्यापारान् शब्दादीन् विषयांश्च एकयत्नेन युगपदेव यश्चिद्वपुः चिद्रूप एव सन् स्फोरयेत् प्रकाशयेत् असावत्र वेदान्तशास्त्रे साक्षीत्युच्यत इत्यर्थः॥ ९॥

साक्षिण एकयत्नेन सर्वस्फोरकत्वमभिनीय दर्शयति ईक्षे इति। ईक्षे रूपमहं पश्यामि इत्येवं रूपदर्शनक्रियालक्षणां त्रिपुटीमेक-यत्नेन भासयते एवं शृणोमीत्यादावपि योज्यम्। युगपदविकारित्वे-नानेकावभासकत्वे दृष्टान्तमाह नृत्येति॥ १०॥

दृष्टान्तं स्पष्टयति नृत्यशालास्थित इति। अविशेषेण प्रभ्वादि-विषयविशेषाभासनाय [illegible]रादिविकारमन्तरेण इति यावत्॥ ११॥

दार्ष्टान्तिके योजयति अहङ्कारमिति। सुषुप्त्यादावहङ्काराद्य-भावेऽपि तत्साक्षितया भात्येव इत्यर्थः॥ १२॥

ननु प्रकाशरूपाया बुद्धेरेवाहङ्कारादिसर्वावभासकत्वसम्भवात् किमर्थमतिरिक्तसाक्षिकल्पनेत्याशङ्क्याह निरन्तरमिति। कूटस्थे निर्वि-

अहङ्कारः प्रभुः सभ्या विषया नर्त्तकी मतिः ।
तालादिधारीण्यक्षाणि दीपः साक्ष्यवभासकः ॥ १४ ॥
स्वस्थानसंस्थितो दीपः सर्वतो भासयेद् यथा ।
स्थिरस्थायी तथा साक्षी बहिरन्तः प्रकाशयेत् ॥ १५ ॥
बहिरन्तर्विभागोऽयं देहापेक्षो न साक्षिणि ।
विषया बाह्यदेशस्था देहस्यान्तरहङ्कृतिः ॥ १६ ॥

---

कारे साक्षिणि प्रतिरूपतः स्वप्रकाशचैतन्यरूपतया निरन्तरं भासमाने इदं स्फुरति यतीयं बुद्धिसङ्घाता तस्य साक्षिणः स्वरूपचैतन्यस्य भासा दीप्तया भास्यमाना प्रकाशमानैवानेकधा घटोऽयं पटोऽयं नटोऽयमित्यादिनानाकारेण नृत्यति विक्रियते । अयं भावः यतो बुद्धेर्विकारितया जडत्वात् स्वतः स्फूर्त्तिराहित्यम् अतस्तद्व्यतिरिक्तः सर्वावभासकः साक्षी अभ्युपगन्तव्य इति ॥ १३ ॥

उक्तमर्थं श्रोतृबुद्धिसौकर्याय नाटकत्वेन निरूपयति अहङ्कार इति । विषयभोगसाकल्यवैकल्याभिमानप्रयुक्तहर्षविषादवत्त्वात् तदभिमानिप्रभुतुल्यत्वमहङ्कारस्य परिसरवर्त्तित्वेऽपि विषयाणां तद्राहित्यात् सभ्यपुरुषसाम्यं नानाविधविकारवत्त्वान्नर्त्तकीसाम्यं धियः धीविक्रियाणाम् अनुकूलव्यापारकत्वात् तालादिधारिसमानत्वम् इन्द्रियाणाम् एतत् सर्वावभासकत्वात् साक्षिणो दीपसादृश्यमिति द्रष्टव्यम् ॥ १४ ॥

ननु साक्षिणोऽप्यहङ्काराद्यवभासकत्वे तेन तेन सम्बन्धापगमागमरूपविकारित्वं घटादिप्रकाशकस्य स्यादेवेति । दीपो यथा गमनादिविकारशून्यः स्वदेशेऽवस्थित एव सन् स्वसन्निहिताखिलपदार्थमेव भासयति एवं साक्ष्यपीति भावः ॥ १५ ॥

ननु साक्षिणो बहिरन्तरवभासकत्वमनुपपन्नम् अपूर्वमनपरमनन्तर-

अन्तस्था धीः सहैवाक्षैर्बहिर्याति पुनः पुनः ।
भास्यबुद्धिस्थचाञ्चल्यं साक्षिण्यारोप्यते वृथा ॥ १७ ॥
गृहान्तरगतः स्वल्पो गवाक्षादातपोऽचलः ।
तत्र हस्ते नर्त्यमाने नृत्यतीवातपो यथा ॥ १८ ॥
निजस्थानस्थितः साक्षी बहिरन्तर्गमागमौ ।
अकुर्वन् बुद्धिचाञ्चल्यात् करोतीव तथा तथा ॥ १९ ॥
न बाह्यो नान्तरः साक्षी बुद्धेर्देशौ हि तावुभौ ।
बुद्ध्याद्यशेषसंशान्तौ यत्र भात्यस्ति तत्र सः ॥ २० ॥

---

प्रमाणमिति श्रुत्वा तस्य बाह्यान्तरविभागाभावाभिधानात् इत्याशङ्क्याह बहिरन्तरिति । तस्य बाह्यत्वं तस्य चान्तरत्वमित्येतत् चाह विवक्षा इति ॥ १६ ॥

ननु स्थिरस्थायी तथा साक्षी बहिरन्तः प्रकाशयेत् इत्यविकारिणः साक्षिणो बहिरन्तरवभासकत्वोक्तिरयुक्ता अहं घटं पश्यामीत्यत्र अहं-मित्यन्तरहङ्कारसाक्षितया प्रथमतोऽवभासकस्यानन्तरं घटं पश्यामि इति घटाकारवृत्तिस्फुरणरूपेण बहिर्निर्गमानुभवात् इत्याशङ्क्याह अन्तस्थेति । इन्द्रियोपहितत्वेन देहान्तरवस्थिता बुद्धीरूपादिग्रहणाय चक्षुरादिद्वारा भूयो भूयो निर्गच्छति तथा च तद्गतचाञ्चल्यं तद्भासके साक्षिण्यारोप्यते अतो न वास्तवं साक्षिणश्चाञ्चल्यमिति भावः ॥ १७ ॥

भासके भास्यचाञ्चल्यारोपः क्व दृष्ट इत्याशङ्क्याह गृहान्तरेति । गवाक्षात् गृहान्तरागतः स्वल्प आतपोऽचल एव वर्तते तत्र तत्प्रदेशे पुरुषेण हस्ते नर्त्यमाने इतस्ततश्चाल्यमाने यथा आतपो नृत्यतीव चलतीव प्रतीयते न तु चलतीत्यर्थः ॥ १८ ॥

दार्ष्टान्तिकमाह निजस्थानेति ॥ १९ ॥

निजस्थानस्थित इत्यनेन किं बाह्यादिदेशस्थितत्वमेवोच्यते नेत्याह

देशः कोऽपि न भासेत यदि तर्ह्यस्त्वदेशभाक्।
सर्वदेशप्रक्लृप्त्यैव सर्वगत्वं न तु स्वतः ॥ २१ ॥
अन्तर्बहिर्वा सर्वं वा यं देशं परिकल्पयेत्।
बुद्धिस्तद्देशगः साक्षी तथा वस्तुषु योजयेत् ॥ २२ ॥
यद्यद्रूपादि कल्प्येत बुद्ध्या तत् तत् प्रकाशयन्।
तस्य तस्य भवेत् साक्षी स्वतो वाग्बुद्ध्यगोचरः ॥ २३ ॥
कथं तादृङ्मया ग्राह्यमिति चेन्मैव गृह्यताम्।
सर्वग्रहोपसंशान्तौ स्वयमेवावशिष्यते ॥ २४ ॥

---

न बाह्य इति। तत्र हेतुमाह बुद्धेरिति। तर्हि किं विवक्षितमित्यत आह बुद्ध्यादीति। आदिशब्देन इन्द्रियादयो गृह्यन्ते। संयान्ति-शब्देन तत्प्रतीत्युपरतिर्विवक्षिता ॥ २० ॥

ननु सर्वव्यवहारोपरतौ देश एव नोपलभ्यते कुतस्तद्विशिष्टत्वमुच्यते इत्याशङ्क्य स्वाभिप्रायमाविष्करोति देश इति। देशादिकल्पनाधिष्ठानस्य स्वातिरिक्तदेशापेक्षा नास्तीति भावः। ननु देशाद्यभावे साक्षिणः सर्वगतत्वसर्वसाक्षित्वाद्युक्तिर्विरुध्येत इत्यत आह सर्वदेशेति। स्वाभाविक-मेव किं न स्यादित्यत आह न त्विति। अद्वितीयत्वादसङ्गत्वाच्चेति भावः ॥ २१ ॥

सर्वगतत्ववत् सर्वसाक्षित्वमपि न वास्तवमित्याह अन्तर्बहिर्वेति ॥ २२ ॥

तथा वस्तुषु योजयेदित्येतत् प्रपञ्चयति यद्यदिति। तर्हि किं तत्र लिङ्गं स्वरूपमित्यत आह स्वत इति ॥ २३ ॥

अवाङ्मनसगोचरत्वे साक्षिणा न गृह्यते इति शङ्कते कथमिति। अग्राह्यत्वमिष्टमेवेत्याह मैव इति। तथात्मनो ग्राह्यत्वाभावे विचारेण विनष्टायां मायायां सिध्यते स्वयमित्युक्तं परमात्मावशेषणं न सिध्ये-

न तत्र मानापेक्षास्ति स्वप्रकाशस्वरूपतः ।
तादृग्व्युत्पत्त्यपेक्षा चेत् श्रुतिं पठ गुरोर्मुखात् ॥२५॥
यदि सर्वग्रहत्यागोऽशक्यस्तर्हि धियं व्रज ।
शरणं तदधीनोऽन्तर्बहिर्वैषोऽनुभूयताम् ॥ २६ ॥

इति नाटकदीपः समाप्तः ।

---

दित्यत आह सर्वग्रहेति । आत्मातिरिक्तस्य द्वैतस्य मिथ्यात्वनिश्चयेन तत्प्रतीत्युपशान्तौ आत्मैव सत्यतयावशिष्यते इति भावः ॥ २४ ॥

यद्यप्युक्तन्यायेन आत्मा परिशिष्यते तथापि तदपरोक्षाय किञ्चित् प्रमाणमपेक्षितमित्यत आह न तत्रेति । तत्र हेतुमाह स्वप्रकाशेति । ननु आत्मा स्वप्रकाशतया स्वस्फूर्त्तौ मानं नापेक्षते इति व्युत्पत्तिसिद्धये मानमपेक्षितमित्याशङ्क्य श्रुतिरेवात्र प्रमाणमित्याह तादृगिति ॥२५॥

एवमुत्तमाधिकारिण आत्मानुभवोपायमभिधाय मन्दाधिकारिणस्तं दर्शयति यदि सर्वेति । बुद्धिशरणत्वे किं फलमित्यत आह तदधीन इति । बुद्ध्या यद् यत् परिकल्प्यते बाह्यमान्तरं वा तस्य तस्य साक्षित्वेन तदधीनः परमात्मा तत्रैवानुभूयतामित्यर्थः ॥ २६ ॥

इति नाटकदीपव्याख्या समाप्ता ।

# एकादशपरिच्छेदः।

## ब्रह्मानन्दे योगानन्दः।

ब्रह्मानन्दं प्रवक्ष्यामि ज्ञाते तस्मिन्नशेषतः।
ऐहिकामुष्मिकानर्थव्रातं हित्वा सुखायते ॥ १ ॥

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ।
ब्रह्मानन्दाभिधे ग्रन्थे योगानन्दो विविच्यते ॥

चिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय परिपन्थिकल्मष-निवृत्तयेऽभिमतदेवतातत्त्वानुसन्धानलक्षणं मङ्गलमाचरन् श्रोतृप्रवृत्ति-सिद्धये प्रयोजनमभिधेयमाविष्कुर्वन् ग्रन्थारम्भं प्रतिजानीते ब्रह्मा-नन्दमिति। निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैरिति सविशेषब्रह्मस्वरूपाणां देव-तानां तत्त्वस्य निर्विशेषब्रह्मरूपत्वाभिधानात् ब्रह्मणश्च आनन्दो ब्रह्मे-त्यादिश्रुतिभिरानन्दरूपताभिधानात् ब्रह्मानन्दमित्यानन्दरूपस्य ब्रह्मणो-वाचकशब्दप्रयोगेण यद्धि मनसा ध्यायति तद्धि वाचा वदतीति श्रुति-प्रोक्तन्यायेन ब्रह्मानुसन्धानलक्षणं मङ्गलाचरणं सिद्धम्। ब्रह्मणश्च सर्ववे-दान्तप्रतिपाद्यत्वात् तत्प्रकरणरूपस्यास्य ग्रन्थस्यापि तदेव विषय इति ब्रह्मशब्दप्रयोगेण विषयश्च सूचितः ऐहिकेत्याद्युत्तरार्धेनानिष्टनिवृत्तीष्ट-प्राप्तिरूपं प्रयोजनद्वयं सूचत एवोक्तं ब्रह्मानन्दमिति ब्रह्म चासा-वानन्दश्चेति ब्रह्मानन्दः वाच्यवाचकयोरभेदोपचारात् तत्प्रतिपादको

ब्रह्मवित् परमाप्नोति शोकं तरति चात्मवित्।
रसो ब्रह्म रसं लब्ध्वानन्दी भवति नान्यथा ॥ २ ॥

---

यन्योऽपि ब्रह्मानन्दः तं प्रवक्ष्यामीति तस्मिन् प्रतिपाद्यप्रतिपादक-रूपे ब्रह्मानन्दे ज्ञातेऽवगते सति ऐहिकामुष्मिकानर्थव्रातं ऐहि-कानाम् इह लोके भवानां देहपुत्रादिष्वहं ममाभिमानप्रयुक्तानाम् आध्या-त्मिकादितापानाम् आमुष्मिकानाम् अमुष्मिन् परलोके भवानाञ्च तेषामन-र्थानां व्रातः समूहः तम् अशेषतो निःशेषं यथा भवति तथा हित्वा परित्यज्य सुखायते सुखस्वरूपं ब्रह्मैव भवति ॥ १ ॥

ब्रह्मज्ञानस्यानिष्टनिवृत्तीष्टप्राप्तिहेतुत्वे बहूनि श्रुतिस्मृतिवाक्यानि प्रमाणानि सन्तीति प्रदर्शयितुकामस्तावत् ब्रह्मविदाप्नोति परं श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयत्विति च वाक्यद्वयमर्थतः पठति ब्रह्मविदिति। ब्रह्म वेत्तीति ब्रह्मवित् परम् उत्कृष्टमानन्दरूपं ब्रह्म प्राप्नोति आत्मवित् भूमशब्दवाच्यं देशकालवस्तुपरिच्छेदशून्यम् आत्मानं वेत्तीति आत्मवित् शोकं अरुन्तुदं दुःखं शोचयतीति शोकस्तमो-रूपः संसारः तं तरति अतिक्रामति। ननूदाहृततैत्तिरीयकश्रुति-वाक्ये ब्रह्मज्ञानस्य परप्राप्तिहेतुत्वमवगम्यते नानन्दप्राप्तिहेतुत्वमित्या-शङ्क्य आनन्दप्राप्तिहेतुत्वप्रतिपादनपरं रसो वै सः रसं ह्येवायं लब्ध्वा-नन्दीभवति इति तदीयमेव वाक्यमर्थतः पठति रस इति। सत्यं ज्ञान-मनन्तं ब्रह्म तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति प्रक-रणादौ ब्रह्मात्मशब्दाभ्यां अभिहितो य आत्मा स रसः सारः आनन्द-रूप इत्यर्थः। रसमानन्दरूपं ब्रह्म लब्ध्वा ब्रह्माहमस्मीति ज्ञानेन प्राप्यानन्दीभवति अपरिच्छिन्ननिरतिशयसुखवान् भवति। उक्तमर्थं व्यतिरेकप्रदर्शनेन दृढयति नान्यथेति। अन्यथा ब्रह्मात्मैक्यज्ञानं विना आत्मलाभाभावेन नानन्दीभवतीत्यर्थः ॥ २ ॥

प्रतिष्ठां विन्दते स्वस्मिन् यदा स्यादथ सोऽभयः ।
कुरुतेऽस्मिन्नन्तरं चेदथ तस्य भयं भवेत् ॥ ३ ॥
वायुः सूर्यो वह्निरिन्द्रो मृत्युर्जन्मान्तरेऽन्तरम् ।
कृत्वा धर्मं विजानन्तोऽप्यस्माद् भीत्या चरन्ति हि ॥४॥

---

एवमन्वयमुखेन दृष्टप्राप्तानिष्टनिवृत्तिप्रतिपादनपराणि वाक्यानि प्रदर्श्य अन्वयव्यतिरेकाभ्यामनर्थनिवृत्तिप्रदर्शनपरं यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति इति वाक्यद्वयमर्थतोऽनुक्रामति प्रतिष्ठामिति । अस्यायमर्थः यदा यस्मिन् काले हीति विद्वत्प्रसिद्धिप्रदर्शनपरो निपातः, एवेत्ययमेवानर्थनिवृत्त्युपायो नान्य इति नियमार्थः, एष मुमुक्षुरेतस्मिन् विद्वदनुभवगम्ये अदृश्ये इन्द्रियागोचरे अनात्म्ये अनात्मीये स्वरूपतया स्वकीयत्वरहिते अनिरुक्ते निरुक्तं निर्वचनं शब्देनाभिधानं यत्र नास्ति तदनिरुक्तं तस्मिन् अनिलयने निलीयतेऽस्मिन्निति निलयनमाधारः स न विद्यते यस्य तस्मिन् सर्वाधिष्ठाने स्थित इत्यर्थः अभयं द्वितीयाद्वै भयं भवतीति श्रुतेर्भयशब्देनात्र भयहेतुर्भेदो लक्ष्यते न विद्यते भयं भेदो यथा भवति तथा प्रतिष्ठां प्रकर्षेण संशयविपर्ययराहित्येन स्थितिः ब्रह्माहमस्मीत्यवस्थानं प्रतिष्ठा तां विन्दते गुरूपसत्त्यादिना श्रवणादिकं कृत्वा लभते अथ तदानीमेव स एवं विद्वान् अभयं भयरहितं मोक्षरूपमद्वितीयं ब्रह्म गतः प्राप्तो भवति ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः यदा यस्मिन्नेव काले एषः पूर्वोक्तः एतस्मिन्नदृश्यमानत्वादिगुणके प्रकृतेऽभिन्ने ब्रह्मणि उत् इति निपातोऽप्यर्थः अरमल्पमपि अन्तरं भेदं उपास्योपासकादिलक्षणं कुरुते पश्यति धातूनामव्ययानाञ्चानेकार्थत्वात् अथ तदानीमेव तस्य भेददर्शिनो भयं संसारप्रयुक्तं दुःखं भवति ॥ ३ ॥

आनन्दं ब्रह्मणो विद्वान् विभेति कुतश्चन ।
एतमेव तपेन्नैषा चिन्ता कर्म्माग्निसम्भृता ॥ ५ ॥
एवं विद्वान् कर्मणी द्वे हित्वात्मानं स्मरेत् सदा ।

---

भेददर्शिनां भयं भवतीत्येतद् द्रढीकर्त्तुं ब्रह्मात्मैकत्वज्ञानरहितानां वाय्वादीनां भयप्रदर्शनपरं भीषास्माद् वातः पवते इत्यादिवाक्यमर्थतः पठति वायुरिति । वाय्वादयो जगन्नियामकत्वेन प्रसिद्धाः यद्यपि देवताः अतीते जन्मनि धर्म्ममिष्टापूर्त्तादिलक्षणं विजानन्तोऽपि ज्ञानपूर्वकमनुष्ठितवन्तोऽपि अन्तरं प्रत्यग्ब्रह्मणोर्भेदं कृत्वास्मात् ब्रह्मणो भीत्यास्मिन् वाय्वादिजन्मनि चरन्ति स्वस्वव्यापारेषु सदा वर्त्तन्ते इत्यनेन भयादस्याग्निस्तपति भयात् तपति सूर्य्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः इति कठश्रुतौ यमेनोक्तां प्रसिद्धिं दर्शयति ॥ ४ ॥

ननु तरति शोकमात्मविदित्यादिषूदाहृतवाक्येषु ब्रह्मानन्दज्ञानस्यानर्थनिवृत्तिहेतुत्वं स्पष्टं नाभिधीयते इत्याशङ्क्य तथा प्रतिपादनपरं वाक्यमुदाहरति आनन्दमिति । राहोः शिर इतिवद् भेदव्यपदेश औपचारिकः ब्रह्मणः स्वरूपभूतमानन्दं विद्वानपरोक्षतया जानन् पुरुषः कुतश्चन कस्मादपि ऐहिकभयहेतोर्व्याघ्रादेः पारलौकिकभयहेतोः पापादेर्वा न बिभेति भयं न प्राप्नोति । ननु तत्त्वविदः पापादेर्भयं नाप्नोति यदुक्तम् कुतोऽवगम्यते इत्याशङ्क्य तत्प्रतिपादकम् एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवमिति वाक्यमर्थतः पठति एतमिति । कर्माग्निसंभृता पुण्यपापरूपं कर्मैवाग्निः करणाकरणाभ्याम् अग्निवत् सन्तापहेतुत्वात् तेन संभृता सम्पादिता यथा पुण्यं नाकरवं कस्मात् पापमहं कृतवान् कुत इत्येवंरूपा चिन्ता एतमेव तत्त्वविदमेव न तपेत् न सन्तापयेत् नात्मविद्वांसं तु तथा चिन्तया सदा सन्तप्यते इत्यर्थः ॥ ५ ॥

कृते च कर्मणी स्वात्मरूपेणैवैष पश्यति ॥ ६ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ७ ॥

---

पुण्यपापयोरतापकत्वे हेतुप्रदर्शनपरं स य एवं विद्वान् एते आत्मानं स्पृणुते उभे ह्येवैष एते आत्मानं स्पृणुते इति वाक्यमुदाहरति पठति एवमिति । स यः कश्चित् पुमान् एवमुक्तप्रकारेण स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यनेन प्रकारेण विद्वान् जानन् वर्तते स एते पुण्यपापे हित्वेत्यध्याहारः आत्मानं ब्रह्माभिन्नं प्रत्यञ्चं स्पृणुते प्रीणयति सदा करोतीत्यर्थः यतः पुण्यपापयोर्मिथ्यात्वानुसन्धानेन ह्यानं कृतम् अतस्तद्विषया चिन्तैव नास्ति कुतस्तन्निमित्तकतापः इत्यभिप्रायः । किञ्च एष विद्वान् एते पूर्वोक्ते पुण्यपापरूपे कर्मणी देहेन्द्रियादिप्रवृत्त्या जनिते स्वात्मरूपेणैव इदं सर्वं यदयमात्मेत्यादिवाक्योक्तप्रकारेण पश्यति जानातीत्यर्थः अतः स्वात्मभिन्नत्वादतापकत्वमिति भावः ॥ ६ ॥

ननु नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीत्यादिशास्त्रबलादनादौ संसारे बहुजन्मोपार्जितेषु पुण्यापुण्यलक्षणेषु कर्मसु संचितेषु अपरिमितत्वेनात्मतयानुसन्धानायोग्येषु सत्सु कथं तद्विषया चिन्ता न भवेदित्याशङ्क्य संचितानां तेषां तत्त्वज्ञानेन विनाशितत्वाच्च चिन्ताजनकत्वमित्यभिप्रायेण हृदयग्रन्थ्यादिनिवृत्तिपरं मुण्डकादिश्रुतिषु स्थितं वाक्यं पठति भिद्यत इति । परावरे परमपि हिरण्यगर्भादिकं पदम् अवरं निकृष्टं यस्मात् तस्मिन् परात्मनि दृष्टे साक्षात्कृतेऽस्य साक्षात्कारवतो हृदयस्य बुद्धेश्चिदात्मनश्च ग्रन्थिवद्दृढसम्बन्धरूपत्वात् ग्रन्थिरन्योन्याध्यासो भिद्यते विदीर्यते, विनश्यतीत्यर्थः, सर्वसंशयाः आत्मा देहादिव्यतिरिक्तो न वा देहादिव्यतिरिक्तोऽपि

तमेव विद्वानत्येति मृत्युं पन्था न चेतरः।
ज्ञात्वा देवं पाशहानिः क्षीणैः क्लेशैर्न जन्मभाक्॥ ८॥

---

कर्तृत्वादिधर्मयोगी न वा अकर्तृत्वेऽपि तस्य ब्रह्मणो भेदोऽस्ति न वा अभेदेऽपि तज्ज्ञानं कर्मादिसहितं मुक्तिसाधनं केवलं वेत्यादयश्छिद्यन्ते द्वैधीक्रियन्ते तत्त्वतः साक्षात्कृतस्य वस्तुनः संशयविपर्ययविषयत्वादर्शनादिति भावः, कर्माणि सञ्चितानि पुण्यापुण्यलक्षणानि क्षीयन्ते सनिदानाज्ञाननाशेन विनश्यन्तीत्यर्थः॥ ७॥

ननु कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे। विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते इत्यादिश्रुतेः कर्मणैव हि संसिद्धिमास्थिता जनकादयः। यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम्। एवं तपश्च विद्या च संयुक्तं भेषजं महत् इत्यादिस्मृतेश्च केवलस्य ज्ञानस्य समुच्चितस्य वा कर्मणो मुक्तिहेतुत्वं स्यादित्याशङ्क्य उदाहृतवाक्यस्य कर्मशब्दस्य पापनिवृत्तिपरत्वात् संसिद्धिशब्देन च ज्ञानसाधनचित्तशुद्ध्यभिधानात् विद्याशब्देन चोपासनाया विवक्षितत्वाच्च कर्मणो मुक्तिसाधनत्वम् इत्यभिप्रायेण साधनान्तरनिषेधपरं तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय इति श्वेताश्वतरवाक्यमर्थतः पठति तमेवेति। तं पूर्वोक्तं परमात्मानं विद्वानेव मृत्युं संसारमत्येति अतिक्रामति इतरः समुच्चयरूपः केवलकर्मरूपो वा पन्था मार्गो मोक्षोपायो न च नैव विद्यते। ननूदाहृतायां श्रुतौ अन्वयव्यतिरेकाभ्यां ऐहिकानिष्टनिवृत्तिरेव प्रत्यवभासते नामुष्मिकीत्याशङ्क्य आमुष्मिकस्यानिष्टस्य भाविजन्मपूर्वकत्वात् तस्य सनिदानजन्माभावप्रतिपादकं ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिरिति श्वेताश्वतरवाक्यमर्थतः पठति ज्ञात्वेति। देवं स्वप्रकाशं प्रत्यगभिन्नं ब्रह्म ज्ञात्वाऽपरोक्षतयानुभूय स्थितस्य

देवं मत्वा हर्षशोकौ जहात्यत्रैव धैर्यवान्।
नैनं कृताकृते पुण्यपापे तापयतः क्वचित् ॥ ९ ॥
इत्यादिश्रुतयो बह्व्यः पुराणैः स्मृतिभिः सह।
ब्रह्मज्ञानेऽनर्थहानिमानन्दञ्चाप्यघोषयन् ॥ १० ॥

---

कामक्रोधादीनां सर्वेषां पाशानां हानिर्भवति तैः पाशशब्दाभिधेयैः रागादिभिः क्लेशैः क्षीणैर्नष्टैर्भाविजन्महेतुकर्मारम्भायोगात् तन्न प्राप्नोतीत्यर्थः ॥ ८ ॥

ननु शोकतरणादिरूपं फलं श्रूयत एव नानुभूयते ज्ञानिनामपीष्टानिष्टप्राप्तिपरिहारार्थं प्रवृत्तिदर्शनादित्याशङ्क्य दृढापरोक्षज्ञानिनां तदभावप्रतिपादनपरमध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीति कठश्रुतिवाक्यमर्थतः पठति देवमिति। धैर्यवान् ब्रह्मचर्यादिसाधनसम्पन्नो देवं चिदानन्दादिलक्षणं मत्वावगम्यात्रैवास्मिन्नेव जन्मनि हर्षशोकौ जहाति। एतमेव तपेन्नैषा चिन्ता कर्माग्निसम्भवा इत्युक्तार्थे विशेषप्रदर्शनपरं नैनं कृताकृते पुण्यपापे तपत इति ब्राह्मणवाक्यमर्थतः पठति नैनमिति। पूर्वमकृतं पुण्यं कृतञ्च पापं तत्त्वविदस्तापहेतुर्न भवतीत्युक्तम् इह तु कृतमकृतं वा पुण्यं पापं वा तथाविधं तापकं न भवतीत्युच्यते इति विशेषः। तथाहि तापो नाम चित्तविकारविशेषः पुण्यं कृतं सत् हर्षलक्षणं विकारमुत्पादयति अकृतं विषादं पापं पुनस्तद्वैपरीत्येनाकृतं हर्षमुत्पादयति कृतं विषादम्। तत्त्वविदस्तु उभे अपि उभयविधविकारहेतू न कदाचित् भवतः अविक्रियब्रह्मरूपत्वज्ञानादित्यभिप्रायः ॥ ९ ॥

नश्यन्त्येव पापानि प्रमाणानि नेत्याशङ्क्याह इत्यादिश्रुतय इति। आदिशब्देन इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः। य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति।

आनन्दस्त्रिविधो ब्रह्मानन्दो विद्यासुखं तथा।
विषयानन्द इत्यादौ ब्रह्मानन्दो विविच्यते॥ ११॥
भृगुः पुत्रः पितुः श्रुत्वा वरुणाद् ब्रह्मलक्षणम्।
अन्नप्राणमनोबुद्धीस्त्यक्त्वानन्दं विजज्ञिवान्॥ १२॥

---

तत् यो यो देवानां प्रत्यबुध्यत स एव तदभवत्। निचाय्य तं मृत्युमुखात् प्रमुच्यते इत्याद्याः श्रुतयो गृह्यन्ते। सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। सम्पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति। क्षेत्रज्ञस्यात्मविज्ञानाद् विशुद्धिः परमात्मना इत्यादिपुराणस्मृतिवचनैः सह प्रमाणानीत्यर्थः। उदाहृतानां श्रुतिस्मृतिपुराणवाक्यानां सर्वेषां तात्पर्यमाह ब्रह्मज्ञाने इति॥ १०॥

ननु ब्रह्मानन्द इत्यानन्दस्य ब्रह्मपदेन विशेषणादानन्दान्तरमस्तीत्यवगम्यते स कतिविधः कीदृशश्चानन्द इत्याकाङ्क्षायां तद्भेददर्शनपूर्वकं ब्रह्मानन्दविवेचनं प्रतिजानीते आनन्द इति। ब्रह्मानन्दो विद्यानन्दो विषयानन्द इत्यनेन प्रकारेण आनन्दस्य त्रैविध्यमवगन्तव्यं तत्रेतरयोरानन्दयोर्ब्रह्मानन्दमूलत्वादादावध्यायत्रयेण ब्रह्मानन्दो विभज्य प्रदर्श्यत इत्यर्थः॥ ११॥

तत्रादौ तावत्तैत्तिरीयश्रुतिपर्यालोचनायामानन्दरूपं ब्रह्मावगम्यते इत्यभिप्रायेण श्रुत्यर्थं संक्षेपेण दर्शयति भृगुरिति। भृगुनामकः पुत्रः पितुर्वरुणाच्छ्रुत्वा ब्रह्मलक्षणं यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्मेत्येवं रूपं श्रुत्वा अन्नमयादिकोशेषु तल्लक्षणाभावेन तेषामब्रह्मत्वं निश्चित्य आनन्दमानन्दमयकोशस्य पुच्छावयवत्वेन ब्रह्म पुच्छं प्रतिष्ठेति श्रुतं बिम्बभूतमानन्दं ब्रह्मलक्षणयोजनया ब्रह्मत्वेन ज्ञातवानित्यर्थः॥ १२॥

आनन्दादेव भूतानि जायन्ते तेन जीवनम् ।
तेषां लयश्च तत्रातो ब्रह्मानन्दो न संशयः ॥ १३ ॥
भूतोत्पत्तेः पुरा भूमा त्रिपुटीद्वैतवर्जनात् ।
ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी प्रलये हि नो ॥ १४ ॥

---

कथमानन्दे तल्लक्षणं योजितवानित्याशङ्क्य तद्योजनप्रकारदर्शन-परम् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति इति वाक्यमर्थतः पठति आनन्दा-दिति । प्राग्धर्मनिमित्तकानन्दादेव भूतानि प्राणिनो जायन्ते तेन विषयभोगादिनिमित्तकेनानन्देन जीवनं प्राप्नुवन्ति तेषां प्राणिनां लयश्च तत्र तस्मिन् सुषुप्तिकालीने स्वस्वरूपभूते आनन्द एव भवति सुषुप्ता-वानन्दव्यतिरेकेण कस्याप्यनुभवाभावात् । अत आनन्दो ब्रह्मैव सर्वानु-भवसिद्धत्वान्नात्र संशयः कर्त्तव्य इति भावः ॥ १३ ॥

एवं तैत्तिरीयश्रुतितात्पर्यालोचनया ब्रह्मण आनन्दरूपतां प्रदर्श्य छान्दोग्यश्रुतितात्पर्यालोचनयापि तां दिदर्शयिषुः सनत्-कुमारनारदसंवादरूपे सप्तमाध्याये स्थितस्य भूमरूपप्रतिपादकस्य यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेत्यादिवाक्यस्यार्थं संक्षेपेणाह भूतोत्पत्तेरिति । भूतानामाकाशादीनां तत्कार्याणां जरायुजाण्डजादीनां चोत्पत्तेः पूर्वं त्रिपुटीद्वैतवर्जनात् त्रयाणां ज्ञातृ-ज्ञानज्ञेयरूपाणां पुटानामाकाराणां समाहारस्त्रिपुटी सैव द्वैतं तस्य वर्जनमभावस्तस्मात् भूमा देशतः कालतो वस्तुतो वा परिच्छेदशून्यः पर-मात्मा भारानयने द्रव्यानयनमिति न्यायात् भूमैवासीदित्यध्याहारः । तदेव द्वैतवर्जनमुपपादयति ज्ञातृज्ञानेति । वक्ष्यमाणज्ञात्रादिरूपा त्रिपुटी प्रलयकाले नासीत्येतत् सर्ववेदान्तसम्मतमिति हिशब्दप्रयुक्ता-नस्यायमभिप्रायः ॥ १४ ॥

विज्ञानमय उत्पन्नो ज्ञाता ज्ञानं मनोमयः।
ज्ञेयाः शब्दादयो नैतत् त्रयमुत्पत्तितः पुरा ॥ १५ ॥
त्रयाभावे तु निर्द्वैतः पूर्ण एवानुभूयते।
समाधिसुप्तिमूर्च्छासु पूर्णः सृष्टेः पुरा तथा ॥ १६ ॥
यो भूमा तत् सुखं नाल्पे सुखं त्रेधा विभेदिनि।
सनत्कुमारः प्राहैवं नारदायातिशोकिने ॥ १७ ॥

---

इदानीं ज्ञात्रादिस्वरूपं दर्शयति विज्ञानमय इति। परमात्मन उत्पन्नो बुद्ध्युपाधिको जीवो विज्ञानमयः ज्ञाता, मनसि प्रतिबिम्बितं मनोमयशब्दवाच्यं चैतन्यं ज्ञानं, शब्दस्पर्शादयो ज्ञेयाः प्रसिद्धाः इदं त्रयं कार्य्यत्वादुत्पत्तेः पुरा कारणव्यतिरेकेण नासीदित्यर्थः ॥ १५ ॥

फलितमाह त्रयेति। ज्ञात्रादित्रयाभावे निर्द्वैतो द्वैतरहितः पूर्ण एवात्मानुभूयते। कुत्रानुभूयत इत्यत आह समाधीति। विद्वदनुभवप्रदर्शनाय समाधिग्रहणं सर्वानुभवद्योतनाय सुषुप्तिमूर्च्छयोरुदाहरणं सुप्त्याद्युत्पन्नस्य द्वैतादर्शनकारणस्याज्ञानस्यानुपपत्त्या निर्द्वैतस्य तदनुभवितुः सिद्धिरिति भावः। भवतु सुषुप्त्यादावद्वैतसिद्धिः प्रकृते किमायात-मित्यत आह पूर्ण इति। यथा सुप्त्यादौ परिच्छेदकाभावात् पूर्ण-स्तथा सृष्टेः पुरापि तदभावादित्यर्थः ॥ १६ ॥

अस्तु ब्रह्मणः पूर्णत्वम् आनन्दरूपत्वे किमायातम् इत्याशङ्क्य अन्वय-व्यतिरेकाभ्यां भूम्नः सुखरूपत्वप्रदर्शनपरं यो वै भूमा तत् सुखं नाल्पे सुखमस्तीति वाक्यमर्थतोऽनुक्रामति यो भूमेति। यः पूर्वोक्तः भूमा स सुखरूप एव द्वितीयस्य दुःखहेतोरभावात् इत्यर्थः। अल्पे परिच्छिन्ने तस्यैव विवरणं त्रेधा विभेदिनीति ज्ञेयगर्भे विशेषणं सुखं तत्र न विद्यते इत्यर्थः। एवं कस्मै केनाभिहितम् इत्यत आह सनत्कुमार इति।

स पुराणान् पञ्च वेदान् शास्त्राणि विविधानि च।
ज्ञात्वाप्यनात्मवित्त्वेन नारदोऽतिशुशोच हि ॥ १८ ॥
वेदाभ्यासात् पुरा तापत्रयमात्रेण शोकिता।
पश्चात्त्वभ्यासविस्मारभङ्गगर्वैश्च शोकिता ॥ १९ ॥
सोऽहं विद्वन् प्रशोचामि शोकपारं नयस्व माम्।
इत्युक्तः सुखमेवास्य पारमित्यभ्यधादृषिः ॥ २० ॥

---

नारदस्य शिष्यत्वे कारणमाह अतिशोकिन इति। अतिशोकिनेऽतिशोकोऽस्यास्तीत्यतिशोकी तस्मै ॥ १७ ॥

तस्यातिशोकित्वे हेतुमाह सपुराणानिति। नारदः पुराणैः सह वर्त्तन्त इति सपुराणाः पञ्च वेदास्तान् विविधानि च शास्त्राणि विदित्वाप्यात्मज्ञानरहितत्वेनातिशयेन शोकः प्राप्तः ॥ १८ ॥

ननु वेदशास्त्रविषयज्ञानस्य शोकनिवर्त्तकत्वेन प्रसिद्धस्य कथमतिशयशोकहेतुत्वमित्यत आह वेदाभ्यासादिति। तापत्रयेणाध्यात्मिकादिलक्षणेनैव शोकिता शोकोऽस्यास्तीति शोकी तस्य भावस्तत्ता आसीदित्यध्याहारः। पश्चात्त्विति तुशब्दो विशेषद्योतनार्थः। अभ्यासः पाठाद्यावर्त्तनं, विस्मारः पठितस्य विस्मरणं, भङ्गः अन्तोऽधिकेन तिरस्कारः, गर्वो न्यूनदर्शनेन स्वाधिक्यबुद्धिः, एतैश्च कारणैः शोकित्वम् ॥१९॥

नन्वेवं सर्वज्ञस्यापि नारदस्य अतिशोकित्वं जातमिति कुतोऽवगम्यते इत्याशङ्क्य सोऽहं भगवः शोचामीति तदीयादेव वाक्यादवगतमित्यभिप्रेत्य तं मा भगवाञ्छोकस्य पारं तारयत्विति तन्निवृत्त्युपाये तेन पृष्टे सति सनत्कुमारो भूमविद्याख्यं सुखरूपं ब्रह्मैव ज्ञायमानं शोकनिवृत्त्युपाय इति सुखं त्वेव विजिज्ञासितव्यमित्यारभ्योत्तरग्रन्थसन्दर्भेण उक्तवानित्याह सोऽभ्यधादिति ॥ २० ॥

सुखं वैषयिकं शोकसहस्रेणावृतत्वतः ।
दुःखमेवेति मत्वाह नाल्पेऽस्ति सुखमित्यसौ ॥ २१ ॥
ननु द्वैते सुखं माभूदद्वैतेऽप्यस्ति नो सुखम् ।
अस्ति चेदुपलभ्येत तथा च त्रिपुटी भवेत् ॥ २२ ॥
मास्त्वद्वैते सुखं किन्तु सुखमद्वैतमेव हि ।
किं मानमिति चेन्नास्ति मानाकाङ्क्षा स्वयं प्रभे ॥ २३ ॥
स्वप्रभत्वे भवद्वाक्यं मानं यस्माद् भवानिदम् ।
अद्वैतमभ्युपेत्यास्मिन् सुखं नास्तीति भाषते ॥ २४ ॥

---

ननु स्वर्गादिजन्येषु सुखेषु बहुषु सत्सु नाल्पे सुखमस्तीत्युक्तिरनुपपन्नेति चेन्न तेषां दुःखानुषङ्गेण विषसंपृक्तान्नवत् बहुदुःखरूपत्वस्य मुनिनाभिप्रेतत्वादित्याह सुखमिति ॥ २१ ॥

द्वैते सुखाभावमङ्गीकृत्याद्वैतेऽपि तमाशङ्कते नन्विति । तत्रानुपलब्धिं प्रमाणयति अस्ति चेदिति । अद्वैते यदि सुखं विद्येत तर्हि विषयसुखादिवदुपलभ्येत यतो नोपलभ्यते अतो नास्तीत्यर्थः । ननूपलभ्यत एवेत्याशङ्क्यमानं प्रत्याह तथेति । अनुभवस्यानुभवित्रनुभाव्यत्रयापेक्षत्वादद्वैतहानिरिति भावः ॥ २२ ॥

अद्वैतस्य सुखाधिकरणत्वनिषेधमङ्गीकरोति सिद्धान्ती मास्त्विति । तत्र हेतुमाह किन्तु सुखमद्वैतमिति । हि यस्मात् कारणात् अद्वैतमेव सुखम् अतः सुखाधिकरणं न भवतीत्यर्थः । अद्वैतं सुखमित्यत्र किं प्रमाणम् इत्याशङ्क्यानुवादपूर्वकं तस्य स्वप्रकाशत्वात् प्रमाणप्रश्न एवानुपपन्न इत्याह किं मानमिति चेदिति ॥ २३ ॥

ननु स्वप्रकाशत्वेऽपि किं प्रमाणमित्याशङ्क्य त्वदीयमेव वचनं प्रमाणमित्याह स्वप्रभत्व इति । तदुपपादयति यस्मादिति । यतः कारणात् भवता प्रमाणैरपेक्ष्ये चाद्वैतमभ्युपेत्य सुखमेवाक्षिप्यतेऽतः स्वप्रमाणमित्यर्थः ॥ २४ ॥

नाभ्युपैम्यहमद्वैतं त्वद्वचोऽनूद्य दूषणम् ।
वच्मीति चेत् तदा ब्रूहि किमासीद् द्वैततः पुरा ॥२५॥
किमद्वैतमुत द्वैतमन्यो वा कोटिरन्तिमः ।
अप्रसिद्धो न द्वितीयोऽनुत्पत्तेः शिष्यतेऽग्रिमः ॥ २६ ॥
अद्वैतसिद्धिर्युक्त्यैव नानुभूत्येति चेद् वद ।
निर्दृष्टान्ता सदृष्टान्ता वा कोट्यन्तरमत्र नो ॥ २७ ॥
नानुभूतिर्न दृष्टान्त इति युक्तिस्तु शोभते ।
सदृष्टान्तत्वपक्षे तु दृष्टान्तं वद मे मतम् ॥ २८ ॥

---

न मयाऽद्वैतमभ्युपगम्यते किन्तु त्वदुक्तमद्वैतमनूद्य दूष्यतेऽतो नोक्तसिद्धिरिति शङ्कते नाभ्युपैमीति। विकल्पासहत्वादद्वैतानभ्युपगमोऽनुपपन्न इति मन्वानः पृच्छति तदेति ॥ २५ ॥

[illegible] विकल्पं सूचयति किमद्वैतमिति। तृतीयं पक्षं निराकरोति अन्तिम इति। द्वैताद्वैतविलक्षणस्य रूपस्य लोके अदर्शनादिति भावः। द्वितीयं पक्षं निराकरोति न द्वितीय इति। तत्र हेतुमाह अनुत्पत्तेरिति। द्वैतस्य तदानीमनुत्पन्नत्वादिति भावः। अतः प्रथमः पक्षः परिशिष्यत इत्याह शिष्यत इति ॥ २६ ॥

ननूक्तेन प्रकारेणाद्वैतं युक्त्या एव सिध्यति नानुभवेनेति चोदयति अद्वैतेति। अद्वैतसिद्धिर्युक्त्यैवेत्युक्तं विकल्पासहत्वादनुपपन्नमिति मन्वानो युक्तिं विकल्पयति निर्दृष्टान्तेति। विकल्पस्य न्यूनतां निराकरोति कोट्यन्तरमत्र नो इति ॥ २७ ॥

प्रथमं पक्षं सोपहासं निराकरोति नानुभूतिरिति। अद्वैतसिद्धिर्युक्त्यैवेति वदता अनुभूतिस्तावन्नाभ्युपेयते युक्तिस्तु दृष्टान्तप्रदर्शनमन्तरेण न किञ्चित् साधयति अतो न दृष्टान्त इत्युक्तिरयुक्तेति भावः।

अद्वैतः प्रलयो द्वैतानुपलम्भेन सुप्तिवत् ।
इति चेत् सुप्तिरद्वैतेत्यत्र दृष्टान्तमीरय ॥ २८ ॥
दृष्टान्तः परसुप्तिश्चेदहो ते कौशलं महत् ।
यः स्वसुप्तिं न वेत्त्यस्य परसुप्तौ तु का कथा ॥ ३० ॥
निश्चेष्टत्वात् परः सुप्तो यथाहमिति चेत् तदा ।
उदाहर्तुः सुषुप्तेस्ते स्वप्रभत्वं बलाद् भवेत् ॥ ३१ ॥

---

द्वितीये विकल्पे उभयवादिसम्प्रतिपन्नो दृष्टान्तो वक्तव्य इत्याह दृष्टान्तेति ॥ २८ ॥

तर्हि दृष्टान्तेनाद्वैतं साधयामीति शङ्कते पूर्वपक्षवादी अद्वैत इति । प्रलयो द्वैतरहितो भवितुमर्हति द्वैतानुपलब्धिमत्त्वात् यो यो द्वैतानुपलब्धिमान् स स द्वैतरहितः यथा स्वाप इति । नन्वेवं साधयतस्तव स्वसुप्तिर्दृष्टान्तः परसुप्तिर्वा, आद्ये तस्याः परं प्रत्यसिद्धत्वेन तत्सिद्धये दृष्टान्तान्तरं वक्तव्यमित्याह सुप्तिरिति ॥ २९ ॥

ननु तस्याः परसुप्तिरेव दृष्टान्त इति द्वितीयं विकल्पमाशङ्कते दृष्टान्त इति । परसुप्तेस्तवाप्रसिद्धत्वेन त्वया दृष्टान्तीकरणमनुपपन्नमिति सोपहासमाह सिद्धान्ती अहो इति । यो भवान् सुप्तेरनुभवगम्यत्वानङ्गीकारेण स्वसुप्तिमपि न वेत्ति अस्य तव परसुप्तौ का कथा परसुप्तिज्ञानं न भवतीति किमुत वक्तव्यमिति भावः ॥ ३० ॥

नन्वनुमानात् परसुप्तिसिद्धिरिति शङ्कते निश्चेष्टेति । विमतः परः सुप्तो भवितुमर्हति प्राणादिमत्त्वे सति निश्चेष्टत्वात् मद्वदित्यनुमानादित्यर्थः । एवं तर्हि तव सुप्तेः स्वप्रकाशत्वं परिशिष्यत इत्याह सिद्धान्ती उदाहर्तुरिति । तदा तर्हि मां प्रति स्वसुप्तिमुदाहर्तुर्दृष्टान्तीकर्तुस्ते तव सुप्तेः स्वप्रभत्वं स्वप्रकाशत्वं बलात् सुप्त्युदाहरणबलादेव भवेत् ॥ ३१ ॥

नेन्द्रियाणि न दृष्टान्तस्तथाप्यङ्गीकरोषि ताम् ।
इदमेव स्वप्रभत्वं यज्ज्ञानं साधनैर्विना ॥ ३२ ॥
स्यामद्वैतस्वप्रभत्वे वद सुप्तौ सुखं कथम् ।
शृणु दुःखं तदा नास्ति ततस्ते शिष्यते सुखम् ॥ ३३ ॥
अन्धः सन्नप्यनन्धः स्याद् विद्धोऽविद्धोऽथ रोग्यपि ।
अरोगीति श्रुतिः प्राह तच्च सर्वे जना विदुः ॥ ३४ ॥

---

ननु कथं बलाद् भवतीत्याशङ्क्याह नेन्द्रियाणीति । सुप्तिग्राहकाणीन्द्रियाणि न सन्ति तेषां स्वकारणे विलीनत्वात् दृष्टान्तश्च सम्मतिरस्तीति नास्ति परस्य सुप्तेरप्रसिद्धत्वस्योक्तत्वात् तथापि तां सुषुप्तिम् अङ्गीकरोषि एवञ्च सति साधनैर्विना ज्ञानसाधनमन्तरेणापि भानं प्रकाशनमिति यदिदमेव स्वप्रभत्वं सुषुप्त्या इत्यर्थः । अत्रायं प्रयोगः विमता सुप्तिः स्वप्रकाशा असत्स्वपि ज्ञानसाधनेषु प्रकाशमानत्वात् सांख्याभिमतात्मवत् प्राभाकराभिमतफलवदनवच्च ॥ ३२ ॥

इत्थं प्रत्ययस्य दृष्टान्तत्वेनोदाहृतायाः सुषुप्तेरद्वैतत्वं स्वप्रकाशत्वञ्च प्रसाध्य तत्र सुखप्रसाधनाय पूर्वपक्षिण आकाङ्क्षामुत्थापयति स्यामद्वैतेति । सुखप्रतियोगिनो दुःखस्य तदानीमसत्त्वात् सुखमेव परिशिष्यते इत्याह शृण्विति । सुखदुःखयोः प्रकाशतमसोरिव परस्परविरोधित्वात् दुःखाभावे सुखमेवाभ्युपेयमिति भावः ॥ ३३ ॥

सुप्तौ दुःखाभावे किं मानमित्याकाङ्क्षायां श्रुत्यनुभवावित्याह अन्ध इति । तत्राह वा एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तत् यथापीदं भगवः शरीरमन्धं भवत्यनन्धः स भवतीत्यादिश्रुतिर्देहाभिमानप्रयुक्तान्धत्वादीन् दोषान् सुप्तौ वारयति । व्याध्यादिना पीड्यमान-

न दुःखाभावमात्रेण सुखं लोष्टशिलादिषु ।
द्वयाभावस्य दृष्टत्वादिति चेद् विषमं वचः ॥ ३५ ॥
मुखदैन्यप्रकाशाभ्यां परदुःखसुखोहनम् ।
दैन्याद्यभावतो लोष्टे दुःखाद्यूहो न सम्भवेत् ॥ ३६ ॥
स्वकीयसुखदुःखे तु नोहनीये ततस्तयोः ।
भावो वेद्योऽनुभूत्यैव तदभावोऽपि नान्यतः ॥ ३७ ॥

---

क्वापि सुप्तौ तद्दुःखानुभवो नासीत्येतत् सर्वजनप्रसिद्धमित्यर्थः ॥ ३४ ॥

ननु यत्र दुःखाभावस्तत्र सुखमित्यस्याः व्याप्तेर्लोष्टादौ व्यभिचार इति शङ्कते न दुःखेति । दुःखाभावमात्रेण सुखं कल्पयितुं न शक्यते लोष्टशिलादिषु द्वयाभावस्य सुखदुःखयोरभावस्य प्रदर्शनादित्यर्थः । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यान्नैवमिति परिहरति विषममिति । यतो दृष्टान्तवचनं विषमं दार्ष्टान्तिकाननुसारीत्यर्थः ॥ ३५ ॥

दृष्टान्तस्याननुकूलत्वमेवोपपादयति मुखेति । अन्यनिष्ठयोर्दुःखसुखयोरूहनं यथाक्रमं मुखदैन्यविकासाभ्यां लिङ्गाभ्यां कर्त्तव्यम् अयं दुःखी विषण्णवदनत्वात् अप्रतिपन्नवत् अयं सुखी प्रसन्नवदनत्वात् सम्प्रतिपन्नवत् इत्यर्थः । भवत्वेवं लोके प्रकृते किमायातमित्यत आह दैन्यादीति । लोष्टादौ मुखदैन्यादिलिङ्गाभावात् सुखदुःखयोरूहनमेव न सम्भवति अतस्तत्र दुःखाभावोऽपि न निश्चेतुं शक्यते इत्यर्थः ॥ ३६ ॥

इदानीं परकीयसुखदुःखाभ्यां स्वकीयसुखदुःखयोर्वैषम्यं दर्शयति स्वकीयेति । स्वनिष्ठयोस्तु सुखदुःखयोरनुभवविषयत्वादनुमेयत्वं न ततस्तयोः सुखदुःखयोर्भावः सद्भावो यथानुभूत्यैव वेद्यः प्रत्यक्षेणावगम्यते तथा तदभावोऽपि तयोः सुखदुःखयोरभावोऽपि अन्यतः अन्यस्मात् अनुमानादेर्नावगम्यते किन्तु प्रत्यक्षेणैवेत्यर्थः ॥ ३७ ॥

तथा सति सुषुप्तौ च दुःखाभावोऽनुभूतितः ।
विरोधिदुःखराहित्यात् सुखं निर्विघ्नमिष्यताम् ॥ ३८ ॥
महत्तरप्रयासेन मृदुशय्यादिसाधनम् ।
कुतः सम्पाद्यते सुप्तौ सुखञ्चेत् तत्र नो भवेत् ॥ ३९ ॥
दुःखनाशार्थमेवैतदिति चेद्रोगिणस्तथा ।
भवत्वरोगिणस्ते तत् सुखायैवेति निश्चिनु ॥ ४० ॥
तर्हि साधनजन्यत्वात् सुखं वैषयिकं भवेत् ।
भवत्वेवात्र निद्रायाः पूर्वं शय्यासनादिजम् ॥ ४१ ॥

---

फलितमाह तथेति । तथा सति स्वकीयस्य सुखादेरनुभवगम्यत्वे सति सुषुप्तौ स्वकीयसुषुप्तावपि विद्यमानो दुःखाभावोऽनुभवेनैव सिद्धः । ततोऽपि किं तत्राह विरोधीति । सुप्तौ सुखविरोधिनो दुःखस्याभावान्निर्विघ्नं बाधरहितं सुखमिष्यताम् अभ्युपेयताम् ॥ ३८ ॥

शय्यादिसाधनसम्पादनस्यान्यथानुपपत्त्यापि सुषुप्तौ सुखमस्तीत्यभ्युपगम्यते इत्याह महत्तरेति । तत्र तस्यां सुषुप्तौ सुखं न भवेच्चेत् महत्तरप्रयासेन बहुवित्तव्ययशरीरपीडनादिना मृदुशय्यादि कशिपुमञ्चादि सुखसाधनं कुतः कस्मात् कारणात् सम्पाद्यते न कुतोऽपीत्यर्थः ॥ ३९ ॥

शङ्कोत्तरेऽन्यथोपपत्तिं शङ्कते दुःखेति । एतत् शय्यादिसाधनसम्पादनं दुःखनिवृत्तिफलकमेव न निरर्थमिति परिहरति रोगिण इति । रोगादिदुःखे सति तन्निवृत्तये तत्सम्भवतु तदभावे ते तव निवर्त्य-दुःखाभावात् तत्सम्पादनं सुखायैव इत्यवगम्यतामित्यर्थः ॥ ४० ॥

ननु सौषुप्तसुखस्य शय्यादिसाधनजन्यत्वे आत्मस्वरूपत्वं व्याहन्येतेति शङ्कते तर्हीति । किं निद्रागमनात् पूर्वकालीनस्य विषय-

निद्रायान्तु सुखं यत् तज्जन्यते केन हेतुना ।
सुखाभिमुखधीरादौ पश्चान्मज्जेत् परे सुखे ॥ ४२ ॥
जाग्रत्व्यापृतिभिः श्रान्तो विश्रम्याथ विरोधिनि ।
अपनीते स्वस्थचित्तोऽनुभवेत् विषये सुखम् ॥ ४३ ॥
आत्माभिमुखधीवृत्तौ स्वानन्दः प्रतिबिम्बति ।
अनुभूयैनमत्रापि त्रिपुट्या श्रान्तिमाप्नुयात् ॥ ४४ ॥

---

जन्यत्वमुच्यते उत निद्राकालीनस्येति विकल्पद्वयमङ्गीकरोति भव-त्विति ॥ ४१ ॥

द्वितीयं निराकरोति निद्रायामिति । सुषुप्तौ शय्याद्यनुसन्धाना-भावात् तज्जन्यत्वं तस्य न सम्भवतीति भावः । ननु निद्रायामजन्य-सुखं यद्यस्ति तर्हि विषयसुखवत् कुतो नानुभूयते इत्याशङ्क्य अनु-भवितुस्तदा तस्मिन् निमग्नत्वान्न विषयसुखवदनुभव इत्यभिप्रायेणाह सुखेति । आदौ निद्रायाः पूर्वस्मिन् काले जीवः सुखाभिमुखधीः शय्यादिजन्यसुखाभिमुखी बुद्धिर्यस्य, स तथाविधो भवति पश्चान्निद्रा-काले परे उत्कृष्टे सुखे स्वरूपसुखे मज्जेत् निलीनो भवेत् ॥ ४२ ॥

सङ्क्षेपेणोक्तमर्थं श्लोकत्रयेण प्रपञ्चयति जाग्रदिति । जाग्रद्व्या-पृतिभिर्जागरणावस्थायां क्रियमाणव्यापारविशेषैः श्रान्तो विश्रम्य मृदुशय्यादौ शयनं कृत्वाथानन्तरं विरोधिनि व्यापारजनिते दुःखे-ऽपनीते निवारिते सति स्वस्थचित्तोऽव्याकुलमनाः भूत्वा शय्यादौ विषये जायमानं सुखमनुभवेत् साक्षात् कुर्यात् ॥ ४३ ॥

विषयसुखस्य कीदृशमित्याकाङ्क्षायां तत्स्वरूपं दर्शयन् परे सुखे निमज्जननिमित्तत्वेन तदनुभवेऽपि क्रमं दर्शयति आत्मेति । अना-गतविषयसम्पादनार्दना दुःखमनुभूय तन्निवृत्तौ मृदुशय्यादौ शयानस्य बुद्धिरन्तर्मुखा भवति तदा तु बुद्धिवृत्तौ स्वरूपभूत आनन्दः स्वाभि-

तत्श्रमस्यापनुत्त्यर्थं जीवो धावेत् परात्मनि ।
तेनैक्यं प्राप्य तत्रत्यो ब्रह्मानन्दः स्वयं भवेत् ॥ ४५ ॥
दृष्टान्ताः शकुनिः श्येनः कुमारश्च महानृपः ।
महाब्राह्मण इत्येते सुप्त्यानन्दे श्रुतिरीताः ॥ ४६ ॥
शकुनिः सूत्रबद्धः सन् दिक्षु व्यापृत्य विश्रमम् ।
अलब्ध्वा बन्धनस्थानं हस्तस्तम्भाद्युपाश्रयेत् ॥ ४७ ॥
जीवोपाधिर्मनस्तद्वद्धर्माधर्मफलाप्तये ।
स्वप्ने जाग्रति च भ्रान्त्वा क्षीणे कर्मणि लीयते ॥ ४८ ॥

---

स्वच्छे दर्पणे मुखमिव प्रतिबिम्बति एष हि विषयानन्दः । एतावत्यामपि वेलायामेनं विषयानन्दमनुभूय अनुभवित्रनुभवानुभाव्यलक्षणया त्रिपुट्या श्रमं प्राप्नुयादिति ॥ ४४ ॥

ततः किं तत्राह तत्श्रमस्येति । तस्य त्रिपुटीदर्शनजनितस्य श्रमस्यापनोदनाय स एव जीवः परात्मनि आनन्दरूपे ब्रह्मणि धावेत् गत्वा च तेन ब्रह्मणैक्यं तादात्म्यं गत्वा सता सोम्य तदा सम्पन्नो भवति इति श्रुतेः स्वयमपि तत्रत्यः तस्यां सुप्तौ स्थितो ब्रह्मानन्दो भवेत् ॥ ४५ ॥

श्रुत्युपपादिते सौषुप्तानन्दे शकुन्यादयो बहवो दृष्टान्ताः श्रुत्युक्ता विद्यन्ते इत्याह दृष्टान्ता इति शकुन्यादिभिः पञ्चभिर्दृष्टान्तैः सौषुप्तानन्दोपपादनेन तत्र सुखं नास्तीति मतं निराकृतम् ॥ ४६ ॥

तत्र तावत् स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनं हि सोम्य मन इत्यस्य दृष्टान्तदार्ष्टान्तिकप्रतिपादनपरस्य छान्दोग्यश्रुतिवाक्यस्यार्थं संक्षेपेण दर्शयति श्लोकद्वयेन शकुनिरिति । हस्तादौ

श्येनो वेगेन नीडैकलम्पटः शयितुं व्रजेत् ।
जीवः सुप्त्यै तथा धावेद् ब्रह्मानन्दैकलम्पटः ॥ ४९ ॥
अतिबालस्तनं पीत्वा मृदुशय्यागतो हसन् ।
रागद्वेषाद्यनुत्पत्तेरानन्दैकस्वभावभाक् ॥ ५० ॥

---

कश्चिदाधारे सूत्रेण बद्धः शकुनिः पक्षी आहारादिप्रत्याशाय दिक्षु प्राच्यादिषु व्यापारं कृत्वा तत्र विश्रमं विश्रम्यत्नोऽलब्ध्वेति विश्रम आधारः तमलब्ध्वा बन्धनस्थानं हस्तादिकमेव यथाश्रयेत् तथा जीवोपाधिभूतं मनोऽपि पुण्यापुण्यफलयोः सुखदुःखयोरनुभवाय स्वप्नजाग्रदवस्थयोस्तत्र तत्र भ्रान्त्वा भोगप्रदे कर्मणि क्षीणे सति सोपादानेऽज्ञाने विलीयते तल्लये च तदुपहितो जीवः परमात्मैव भवतीत्यर्थः ॥ ४७ ॥ ४८ ॥

इदानीं श्येनदृष्टान्तप्रपञ्चनपरस्य तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियत एवमेवाय पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यतीत्यस्य बृहदारण्यकवाक्यस्यार्थं संक्षिप्याह श्येन इति । यथाकाशे सर्वतः प्रचरन् श्येन एतन्नामा पक्षी गगने सञ्चारनिमित्तश्रमपरिहाराय शयितुं शयनं कर्तुं नीडैकलम्पटः कुलायैकाभिलाषवान् व्रजेत् शीघ्रं गच्छेत् तद्वदेव जीवो मनउपाधिकश्चिदाभासोऽपि ब्रह्मानन्दैकाभिलाषवान् स्वापाय शीघ्रं गच्छेत सुखाकारमिति शेषः ॥ ४९ ॥

स यथा कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेत इति कुमारादिदृष्टान्तत्रयदर्शनपरं वाजसनेयिब्राह्मणगतं वाक्यं श्लोकद्वयेन व्याचष्टे अतिबालेति । यथा स्तनन्धयः शिशुः मातुः स्तनं पाययित्वा मृद्वादिगुणवतीभि

महाराजः सार्वभौमः सुतृप्तः सर्वभोगतः ।
मानुषानन्दसीमानं प्राप्यानन्दैकमूर्त्तिभाक् ॥ ५१ ॥
महाविप्रो ब्रह्मवेदी कृतकृत्यत्वलक्षणाम् ।
विद्यानन्दस्य परमां काष्ठां प्राप्यावतिष्ठते ॥ ५२ ॥
मुग्धबुद्धातिबुद्धानां लोके सिद्धा सुखात्मता ।
उदाहृतानामन्ये तु दुःखिनो न सुखात्मकाः ॥ ५३ ॥
कुमारादिवदेवायं ब्रह्मानन्दैकतत्परः ।
स्त्रीपरिष्वक्तवद्वेद न बाह्यं नापि चान्तरम् ॥ ५४ ॥

---

तल्पे शयितः स्वकीयादिज्ञानशून्यत्वेन रागादिरहितः सन् सुख-मूर्त्तिरेवावतिष्ठते यथा सार्वभौमो राजा अविमूढबुद्धित्वेऽपि सर्वमानुषा-नन्दैर्युक्तत्वात् प्रार्थनीयाभावेन रागादिरहित आनन्दमूर्त्तिरेवावभासते यथा महाविप्रो महाब्राह्मणः प्रत्यगभिन्नब्रह्मसाक्षात्कारवानहं कृत-कृत्य इत्येवंरूपां विद्यानन्दस्य परमां सीमां जीवन्मुक्ततां प्राप्तः सन् परमानन्दस्वरूप एवावतिष्ठते तथा सुप्तोऽप्यानन्दरूपस्तिष्ठतीति शेषः ॥ ५० ॥ ५१ ॥ ५२ ॥

नन्वेते कुमारादयस्त्रय एव किमिति दृष्टान्तीकृता नान्य इत्याशङ्क्य दृष्टान्तत्रयोदाहरणतात्पर्य्यमाह मुग्धेति । विवेकशून्यानां मध्येऽतिबालः सुखी विवेकिषु सार्वभौमः अतिविवेकिषु आनन्दसा-क्षात्कारवानेव इतरे तु सर्वदा रागादिमत्त्वाद्दुःखिन इति न दृष्टान्तीकृता इत्यर्थः ॥ ५३ ॥

भवन्त्वेते दुःखिनः प्रकृते किमायातमित्याशङ्क्य दार्ष्टान्तिकश्रुति-वाक्यस्य तात्पर्य्यमाह कुमारादीति । कुमारादिवत् कुमारादयो यथानन्दभाजः एवमयमपि सुप्तो ब्रह्मानन्दैकतत्परः ब्रह्मानन्दैक-भागित्यर्थः । ब्रह्मानन्दैकपरत्वे युक्तिप्रदर्शनपरं तद्व यथा प्रियया

वाह्यं रथ्यादिकं वृत्तं गृहकृत्यं यथान्तरम् ।
तथा जागरणं वाह्यं नाडीस्थः स्वप्न आन्तरः ॥ ५५ ॥
पितापि सुप्तावपितेत्यादौ जीवत्ववारणात् ।
सुप्तौ ब्रह्मैव नो जीवः संसारित्वासमीक्षणात् ॥ ५६ ॥
पितृत्वाद्यभिमानो यः सुखदुःखाकरः स हि ।
तस्मिन्नपगते तीर्णः सर्वशोकान् भवत्ययम् ॥ ५७ ॥

---

स्त्रिया सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञे-
नात्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरमिति ज्योति-
र्ब्राह्मणगतवाक्यमर्थतोऽनुक्रामति स्त्रीपरिष्वक्त इति । यथा लोके प्रियया
स्त्रिया आलिङ्गितः कामी वाह्यान्तरज्ञानशून्यत्वात् सुखमूर्त्तिर्भवति
तथा सुषुप्तौ प्राज्ञेन परमात्मनैक्यं गतो जीवो वाह्यादिदेशविषय-
ज्ञानाभावात् आनन्दरूप एव भवतीति ॥ ५४ ॥

अत्र दृष्टान्तदार्ष्टान्तिकवाक्यस्थयोर्वाह्याभ्यन्तरशब्दयोर्विवक्षितमर्थं
क्रमेण दर्शयति वाह्यमिति ॥ वृत्तं वृत्तान्तं नाडीस्थः जाग्रद्-
वासनया नाडीमध्ये प्रतीयमानः प्रपञ्चः स्वप्न इत्युच्यते ॥ ५५ ॥

जीवः सुप्तौ ब्रह्मानन्दरूपेणावतिष्ठते इत्यत्र युक्तिप्रदर्शनपरायाः
अत्र पिताऽपिता भवतीत्यादिकायाः श्रुतेस्तात्पर्यमाह पितेति ।
अत्र सुप्तावाध्यासिकानां पितृत्वादिजीवधर्माणां सुषुप्तावेव निवारित-
त्वात् जीवत्वाप्रतीतौ ब्रह्मैवावशिष्यत इत्यर्थः ॥ ५६ ॥

ननु पितृत्वाद्यभिमानाभावेऽपि दुःखित्वादिसंसारः किं न स्यात्
इत्याशङ्क्य संसारस्य देहाद्यभिमानमूलत्वात् तदभावे तदभाव इति
मन्वानस्तदुपपादकं तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति
श्रुत्यन्तरं वाक्यं तात्पर्यतो व्याचष्टे पितृत्वादीति ॥ ५७ ॥

सुषुप्तिकाले सकले विलीने तमसावृतः।
सुखरूपमुपैतीति ब्रूते ह्याथर्वणी श्रुतिः ॥ ५८ ॥
सुखमस्वाप्समत्राहं नैव किञ्चिदवेदिषम्।
इति द्वे तु सुखाज्ञाने परामृशति चोत्थितः ॥ ५९ ॥
परामर्शोऽनुभूतेऽस्तीत्यासीदनुभवस्तदा।
चिदात्मत्वात् स्वतो भाति सुखमज्ञानधीस्ततः ॥ ६० ॥

---

ननूदाहृताभिः श्रुतिभिः सुखप्राप्तिः स्वतोऽभिधीयमाना नोपलभ्यते इत्याशङ्क्य तथा विधानपरं कैवल्यश्रुतिवाक्यमर्थतः पठति सुषुप्तीति। सकले आपटादिरूपे प्रपञ्चे विलीने स्वोपादानभूतायां तमःप्रधानायां प्रकृतौ विलयं गते सति तमसा तया प्रकृत्या आवृत आच्छादितो जीवः सुखरूपं ब्रह्मोपैतीति तस्याः श्रुतेरर्थः ॥ ५८ ॥

न केवलमयं श्रुतिसिद्धोऽर्थः किन्तु सर्वानुभवसिद्धोऽपीत्याह सुखमिति। सुप्तादुत्थितः पुरुषः एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्येवं निद्राकालीने सुखाज्ञाने परामृशति यतः अतोऽपि सुप्तौ सुखमस्तीत्यवगम्यते ॥ ५९ ॥

ननु परामर्शस्याप्रमाणत्वात् कथं तद्बलात् सुखसिद्धिरित्याशङ्क्य तस्याप्रामाण्येऽपि तस्यानुभूतानुभवकत्वात् तत्सिद्धिरित्यभिप्रायेणाह परामर्श इति। परामर्शः स्मरणमनुभूत एव विषये भवति नाननुभूतविषये इति तस्माद्धेतोः तदा सुषुप्तौ अनुभव आसीदित्यवगम्यते। ननु सुषुप्तौ मनःप्रभृतीनां ज्ञानकारणानां विलीनत्वात् कथमनुभवसिद्धिरित्याशङ्क्य किं सुखानुभवसाधनं नास्तीत्युच्यते अज्ञानानुभवसाधनं वा नाद्यः स्वप्रकाशचिद्रूपत्वेन सुखस्य करणापेक्षाभावात् न द्वितीयः स्वप्रकाशसुखवत्वादेव तदावरकाज्ञानप्रतीतिसिद्धेरित्यभिप्रायेणाह चिदात्मेति। ततः स्वप्रकाशसुखादज्ञानधीरज्ञानस्य प्रतीतिर्भवतीति ॥ ६० ॥

ब्रह्मविज्ञानमानन्दमिति वाजसनेयिनः।
पठन्त्यतः स्वप्रकाशं सुखं ब्रह्मैव नेतरत् ॥ ६१ ॥
यदज्ञानं तत्र लीनौ तौ विज्ञानमनोमयौ।
तयोर्हि विलयावस्था निद्राज्ञानञ्च सैव हि ॥ ६२ ॥
विलीनघृतवत् पश्चात् स्याद् विज्ञानमयो घनः।
विलीनावस्थ आनन्दमयशब्देन कथ्यते ॥ ६३ ॥

---

ननु सौषुप्तसुखस्य स्वप्रकाशसुखत्वेऽपि ब्रह्मानन्दः स्वयं भवेदित्युक्तं ब्रह्मस्वरूपत्वं न सम्भवति मानाभावादित्याशङ्क्य विज्ञानमानन्दमित्यादिबृहदारण्यकवाक्यस्य सद्भावान्मैवमित्याह ब्रह्मविज्ञानमिति ॥ ६१ ॥

नन्वनुभवस्मरणयोरेकाधिकरणत्वनियमात् सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति च सौषुप्तानन्दाज्ञानयोर्विज्ञानमयशब्दवाच्येन जीवेन स्मर्यमाणत्वात् तस्यैव सुखाद्यनुभवितृत्वं वक्तव्यम् इत्याशङ्क्य तदुपाधेर्विज्ञानस्याज्ञानकार्यस्याज्ञाने विलीनत्वात् मैवमित्यभिप्रायेणाह यदज्ञानमिति। न किञ्चिदवेदिषमिति स्मरणस्यान्यथानुपपत्त्या गम्यमानं यदज्ञानमस्ति तत्र तस्मिन्नज्ञाने तौ प्रमातृप्रमाणत्वेन प्रसिद्धौ विज्ञानमनोमयौ लीनौ विज्ञानत्वाद्याकारं परित्यज्य कारणरूपेणावस्थितौ अतस्तदुपाधिकस्य नानुभवितृत्वमिति भावः। अत्रोपपत्तिमाह तयोरिति। हि यस्मात् तयोर्विज्ञानमनोमययोर्विलीनावस्था निद्रोच्यते विज्ञानविरतिः सुप्तिरित्यभिधानात् तर्हि निद्रायामेव विलीनाविति वक्तव्यमित्याशङ्क्याह अज्ञानमिति। सैव निद्रा विद्वद्भिरज्ञानमिति व्यवह्रियते इत्यर्थः ॥ ६२ ॥

ननु तर्हि सौषुप्तसुखाद्यनुभवकाले स्वतो विज्ञानमयस्य प्रबोधे कथं तत्स्मर्तृत्वमित्याशङ्क्य विलयावस्थायामपि तत्स्वरूपनाशाभावात् विलयावस्थोपाधिमदानन्दमयरूपेणानुभवितृत्वं विज्ञानमय-

सुप्तिपूर्वक्षणे बुद्धिवृत्तिर्या सुखबिम्बिता ।
सैव तद्बिम्बसहिता लीनानन्दमयस्ततः ॥ ६४ ॥
अन्तर्मुखोऽयमानन्दमयो ब्रह्मसुखं तदा ।
भुङ्क्ते चिद्बिम्बयुक्ताभिरज्ञानोत्पन्नवृत्तिभिः ॥ ६५ ॥
अज्ञानवृत्तयः सूक्ष्मा विस्पष्टा बुद्धिवृत्तयः ।
इति वेदान्तसिद्धान्तपारगाः प्रवदन्ति हि ॥ ६६ ॥

---

शब्दवाच्यघनीभावोपाधिमत्त्वेन आनन्दत्वं चैकस्य घटते इत्यभिप्रायेणाह विलीनेति । यथाग्निसंयोगादिना विलीनं घृतं पश्चात् वाय्वादिसम्बन्ध-वशात् घनीभवति एवं जाग्रदादिषु भोगप्रदस्य कर्मणः क्षयवशात् निद्रारूपेण विलीनमन्तःकरणं पुनर्भोगप्रदकर्मवशात् प्रबोधे विज्ञाना-कारेण घनीभवति अतस्तदुपाधिक आत्मापि विज्ञानमयो घनः स्यात् स एव पूर्वं विलयावस्थोपाधिकः सन् आनन्दमय उच्यते ॥ ६३ ॥

विलीनावस्थ आनन्दमय इत्युक्तमेवार्थं स्पष्टीकरोति सुप्तीति । सुप्तेः पूर्वक्षणव्यवहिते क्षणे यान्तर्मुखा बुद्धिवृत्तिः स्वरूपभूतसुख-प्रतिबिम्बयुक्ता भवति ततः अनन्तरं तत्प्रतिबिम्बसहिता सैव बुद्धि-र्निद्रारूपेण विलीना आनन्दमय इत्यभिधीयते ॥ ६४ ॥

एवमानन्दमयस्वरूपं प्रदर्श्य तस्यैव प्रबोधकाले विज्ञानमयरूपेण कर्तृत्वविरहे तदानीं सुखानुभवमुपपादयति अन्तर्मुख इति । सुखप्रति-बिम्बसहितान्तर्मुखधीवृत्तिजनितसंस्कारसहिताज्ञानोपाधिकोऽयम् आ-नन्दमयस्तदा सुप्तौ ब्रह्मसुखं स्वरूपभूतं सुखं चिदाभाससहिता-भिरज्ञानादुत्पन्नाभिः सुखादिगोचराभिर्वृत्तिभिः स्वल्पपरिज्ञानविशेषै-र्भुङ्क्तेऽनुभवति ॥ ६५ ॥

ननु तर्हि जागरण इव तदानीं सुखमनुभवामीत्यभिमानः कुतो न स्यादित्याशङ्क्य अविद्यावृत्तीनां बुद्धिवृत्तिवत् स्पष्टत्वाभावान्नानु-

माण्डूक्यतापनीयादिश्रुतिष्वेतदतिस्फुटम् ।
आनन्दमयभोक्तृत्वं ब्रह्मानन्दे च भोग्यता ॥ ६७ ॥
एकीभूतः सुषुप्तस्थः प्रज्ञानघनतां गतः ।
आनन्दमय आनन्दभुक् चेतोमयवृत्तिभिः ॥ ६८ ॥
विज्ञानमयमुख्यैर्यो रूपैर्युक्तः पुराधुना ।
स लयेनैकतां प्राप्तो बहुतण्डुलपिष्टवत् ॥ ६९ ॥

---

अतः इत्यभिप्रायेणाह अज्ञानेति । इदं कुतोऽवगतमित्यत आह इतीति ॥ ६६ ॥

नन्वानन्दमयो ब्रह्मानन्दं सूक्ष्माभिरविद्यावृत्तिभिर्भुङ्क्ते इत्यत्र किं प्रमाणमित्यत आह माण्डूक्येति । एतच्छ्लोकार्धमेवाह आनन्देति ॥ ६७ ॥

इदानीं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुख इति माण्डूक्यादिश्रुतिगतं वाक्यमर्थतः पठति एकीभूत इति । सुषुप्तं सुषुप्तिस्थानं तिष्ठतीति सुषुप्तस्थः सुषुप्त्यभिमानीत्यर्थः । आनन्दमय आनन्दप्रचुरः आनन्दभुक् स्वरूपभूतमानन्दं भुङ्क्ते इत्यानन्दभुक् चेतोमयवृत्तिभिश्चेतनस्य तमसावृतप्रचुराचित्प्रतिबिम्बवाहिता इत्यर्थः । ताश्च वृत्तयः चेतोमयवृत्तयस्ताभिरानन्दभुगिति योजना ॥ ६८ ॥

तद्वाक्यगतमेकीभूत इति पदद्वयार्थमाह विज्ञानेति । य आत्मा पुरा जागरस्वप्नयोर्विज्ञानमयमुख्यैः स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमय इत्यादिश्रुत्युक्तैः रूपैराकारविशेषैर्युक्तोऽभूत् स एवाधुना लयेन विज्ञानमयाद्युपाधिलयेन एकताम् एकाकारतां प्राप्तो गतो भवति । तत्र दृष्टान्तमाह बह्विति । बहुतण्डुलजनितपिष्टवदित्यर्थः ॥ ६९ ॥

प्रज्ञानानि पुरा बुद्धिवृत्तयोऽथ घनोऽभवत् ।
घनत्वं हिमबिन्दूनामुदग्देशे यथा तथा ॥ ७० ॥
तद्घनत्वं साक्षिभावं दुःखाभावं प्रचक्षते ।
लौकिकास्तार्किका यावद्दुःखवृत्तिविलोपनात् ॥ ७१ ॥
अज्ञानविम्बिता चित् स्यान्मुखमानन्दभोजने ।
भुक्तं ब्रह्मसुखं त्यक्त्वा बहिर्यात्यथ कर्मणा ॥ ७२ ॥

---

अथ प्रज्ञानघनशब्दार्थमाह प्रज्ञानानीति । पुरा पूर्वं जाग्रदादौ प्रज्ञानशब्दवाच्या घटादिगोचरा या बुद्धिवृत्तयोऽभवन् ता अथ सुषुप्तिकाले घटादिविषयाभावे सति घनोऽभवत् चिद्रूपेणैकरूपोऽभवत् । तत्र दृष्टान्तमाह घनत्वमिति ॥ ७० ॥

इदानीं प्रज्ञानघनशब्दार्थनिरूपणप्रसङ्गादागतं किञ्चिदाह तद्घनत्वमिति । यदिदं वेदान्तेषु साक्षित्वेनाभिधीयमानं प्रज्ञानघनत्वमस्ति तदेव लौकिकाः शास्त्रसंस्काररहितास्तार्किका वैशेषिकादयः शास्त्रिणश्च दुःखाभावं प्रचक्षते दुःखाभाव इत्याहुः । कुत इत्यत आह यावद् दुःखेति । यावन्तो दुःखहेतवस्तेषां सर्वेषां विलयादित्यर्थः ॥ ७१ ॥

पूर्वोदाहृतश्रुतिवाक्यगतचेतोमुखशब्दार्थमाह अज्ञानेति । आनन्दभोजने सौषुप्तब्रह्मानन्दास्वादने मुखं साधनमज्ञानविम्बिता चित् स्यात् अज्ञानवृत्तौ प्रतिविम्बितं चैतन्यमेव भवेत् । ननु सुषुप्तावानन्दमयरूपेण जीवेन ब्रह्मसुखं चेत् भुज्यते तर्हि तत् परित्यज्याथ बहिः कुतो जागरणं दुःखायमागच्छेत् इत्यत आह भुक्तमिति । पुण्यापुण्यकर्मपाकवशात् तेन प्रेरितो जीवः साक्षाद्भुक्तमपि ब्रह्मानन्दं परित्यज्याथ बहिर्याति जागरणादिकं गच्छतीत्यर्थः ॥ ७२ ॥

कर्म जन्मान्तरेऽभूद् यत् तद्योगाद् बुध्यते पुनः ।
इति कैवल्यशाखायां कर्मजो बोध ईरितः ॥ ७३ ॥
कञ्चित् कालं प्रबुद्धस्य ब्रह्मानन्दस्य वासना ।
अनुगच्छेद् यतस्तूष्णीमास्ते निर्विषयः सुखी ॥ ७४ ॥
कर्मभिः प्रेरितः पश्चान्नाना दुःखानि भावयन् ।
शनैर्विस्मरति ब्रह्मानन्दमेषोऽखिलो जनः ॥ ७५ ॥
प्रागूर्ध्वमपि निद्रायाः पक्षपातो दिने दिने ।
ब्रह्मानन्दे नृणां तेन प्राज्ञोऽस्मिन् विवदेत कः ॥ ७६ ॥

---

एतत् कुतोऽवगम्यते इत्याशङ्क्य पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्ध इति कैवल्यश्रुतिवाक्यादिति मन्वानस्तद्वाक्यमर्थतः पठन् तदभिप्रायमाह कर्मेति ॥ ७२ ॥

सुषुप्तौ ब्रह्मानन्दोऽनुभूत इत्यत्र लिङ्गान्तरमप्याह कञ्चिदिति । प्रबुद्धस्य जागरणं प्राप्तस्यापि कञ्चित् कालं स्वल्पकालपर्यन्तं सुषुप्तावनुभूतस्य ब्रह्मानन्दस्य वासना संस्कारोऽनुगच्छेदनुवर्तते । कुत एतदवगम्यत इत्यत आह यत इति । यतः कारणात् प्रबोधादौ निर्विषयं विषयानुभवरहितोऽपि सुखी तूष्णीमास्ते अतोऽवगम्यते इत्यर्थः ॥ ७४ ॥

तर्हि तथैव तूष्णीं कुतो नावतिष्ठत इत्यत आह कर्मभिरिति । कर्मभिः पूर्वोक्तैश्चोदितः सर्वोऽपि प्राणी पश्चात् नानाविधानि दुःखानि अनुसन्दधानः शनैर्ब्रह्मानन्दं विस्मरति ॥ ७५ ॥

इतोऽपि ब्रह्मानन्दे न विप्रतिपत्तिः कार्येत्याह प्रागूर्ध्वमिति । प्रत्यहं मनुष्याणां निद्रायाः प्रागूर्ध्वमपि निद्रारम्भे निद्रावसाने च ब्रह्मानन्दे पक्षपातः स्नेहोऽस्ति यतो निद्रादौ खट्वास्तरणादि सम्पादयन्ति तदवसाने च तं परित्यक्तुमशक्तास्तूष्णीमासते तेन कारणेन ब्रह्मानन्दे को बुद्धिमान् विवदेत न कोऽपीत्यर्थः ॥ ७६ ॥

ननु तूष्णीं स्थितौ ब्रह्मानन्दश्चेद्भाति लौकिकाः ।
अलसाश्चरितार्थाः स्युः शास्त्रेण गुरुणात्र किम् ॥ ७७ ॥
बाढं ब्रह्मेति विद्यश्चेत् कृतार्थास्तावतैव ते ।
गुरुशास्त्रे विनात्यन्तं गम्भीरं ब्रह्म वेत्ति कः ॥ ७८ ॥
जानाम्यहं त्वदुक्त्याद्य कुतो मे न कृतार्थता ।
शृण्वत्र त्वादृशं वृत्तं प्राज्ञम्मन्यस्य कस्यचित् ॥ ७९ ॥
चतुर्वेदविदे देयमिति शृण्वन्नवोचत ।
वेदाश्चत्वार इत्येवं वेद्मि मे दीयतां धनम् ॥ ८० ॥
सङ्ख्यामेवैष जानाति न तु वेदानशेषतः ।

---

चोदयति नन्विति । गुरुशुश्रूषादिलभ्यस्य ब्रह्मानन्दानुभवस्य तूष्णीं स्थितिमात्रलभ्यत्वे गुरुशुश्रूषादिपूर्वकं श्रवणादिकं वृथा स्यादित्यर्थः ॥ ७७ ॥

अयं ब्रह्मानन्द इति ज्ञाने सति कृतार्थता भवत्येव तदेव गुरुशुश्रूषादिकमन्तरेण न सम्भवतीत्याह वाढमिति । अत्यन्तगम्भीरं दुरवगाहम् अवाङ्मनसगम्यं सर्वगं सर्वान्तरं सर्वात्मरूपं ब्रह्म गुरुशास्त्रे विहायान्येन केनाप्युपायेन को जानीयात् न कोऽपीत्यर्थः ॥ ७८ ॥

ननु महावाक्यादेव ब्रह्मानन्दं जानतोऽपि मम न कृतार्थतोपलभ्यते इत्याशङ्कानुवादपूर्वकं बोधकाख्यानमुत्तरमाह जानामीति ॥ ७९ ॥

तमेव वृत्तान्तं दर्शयति चतुर्वेदेति । कश्चित् चतुर्वेदविदे कस्मैचिदिदं बहु धनं दातव्यमित्येवंविधं वाक्यं श्रुत्वा वेदाश्चत्वार इत्यस्मादेव वाक्यादहं वेद्मि अतो मे दीयतामिति वक्ति तद्वद्भवानपीत्यर्थः ॥ ८० ॥

यदि तर्हि त्वमप्येवं नाशेषं ब्रह्म वेत्सि हि ॥ ८१ ॥
अखण्डैकरसानन्दे मायातत्कार्य्यवर्जिते ।
अशेषत्वसशेषत्ववार्त्तावसर एव कः ॥ ८२ ॥
शब्दानेव पठस्याहो तेषामर्थञ्च पश्यसि ।
शब्दपाठेऽर्थबोधस्ते सम्पाद्यत्वेन शिष्यते ॥ ८३ ॥
अर्थे व्याकरणाद् बुद्धे साक्षात्कारोऽवशिष्यते ।
स्यात् कृतार्थत्वधीर्यावत् तावद् गुरुमुपास्व भोः ॥८४॥

---

ननु वेदाश्चत्वार इति यो वेद स वेदगतां संख्यामेव वेत्ति न तु वेदानां स्वरूपमिति । साम्येन समाधत्ते तर्हीति । एवं चतुर्वेदाभिज्ञस्येव त्वमप्यशेषं सम्पूर्णं यथा भवति तथा ब्रह्म न वेत्सि नैव जानासि ॥ ८१ ॥

ननु संख्यातिरिक्तवेदस्वरूपभेद इव स्वगतादिभेदशून्ये आनन्दैकरूपे ब्रह्मणि अज्ञायमानस्यांशस्याभावात् असम्पूर्णज्ञानित्वोपालम्भो न घटते इति चोदयति अखण्डेति ॥ ८२ ॥

ब्रह्मज्ञानेऽप्यशेषत्वादिकं दर्शयितुं ब्रह्म जानामीति वदन्तं विकल्प्य पृच्छति शब्दानिति । किमखण्डैकरसमद्वयं सच्चिदानन्दस्वरूपमित्यादिशब्दानेव पठसि अहो अथवा तेषां शब्दानामर्थं स्वगतादिभेदशून्यत्वादिकं पश्यसि जानासीति विकल्पार्थः । आद्ये पक्षे सावशेषत्वं दर्शयति शब्दपाठ इति ॥ ८३ ॥

द्वितीयेऽपि तद् दर्शयति अर्थे इति । व्याकरणादित्युपलक्षणं निगमादेः व्याकरणादिना परोक्षज्ञाने सम्पादितेऽपि संशयादिनिरासेनापरोक्षीकरणमवशिष्यते । तर्हि कदा सम्पूर्णत्वं ज्ञानस्येत्याशङ्क्य तदवधिं दर्शयति स्यादिति । यदा कृतार्थत्वबुद्धिरुत्पद्यते तदा ज्ञानस्य सम्पूर्णता अवगन्तव्या इत्यर्थः ॥ ८४ ॥

आस्तामेतत् यत्र यत्र सुखं स्यात् विषयैर्विना ।
तत्र सर्वत्र विद्धि तां ब्रह्मानन्दस्य वासनाम् ॥ ८५ ॥
विषयेष्वपि लब्धेषु तदिच्छोपरमे सति ।
अन्तर्मुखमनोवृत्तावानन्दः प्रतिविम्बति ॥ ८६ ॥
ब्रह्मानन्दो वासना च प्रतिबिम्ब इति त्रयम् ।

---

एवं प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुसरति आस्तामिति । यत्र यत्र यस्मिन् यस्मिन् काले तूष्णींभावादौ विषयानुभवमन्तरेण सुखं भवति तत्र तत्र सुखस्य विषयजन्यत्वाभावात् सामान्याहङ्कारारूढत्वाच्च वासनानन्दत्वमवगन्तव्यमित्यर्थः ॥ ८५ ॥

एवं ब्रह्मानन्दवासनानन्दौ दर्शयित्वा इदानीमानन्दत्रैविध्यनियमनाय आत्माभिमुखधीवृत्तावभिव्यक्तमेव विषयानन्दं पुनरनुवदति विषयेष्विति । यदा यदा रागादिविषयलाभात् तत्तदिच्छोपरमो भवति तदा तदा मनस्यन्तर्मुखे सति तस्मिन् यः स्वात्मानन्दः प्रतिविम्बितो भवति अयं विषयानन्द इत्यर्थः ॥ ८६ ॥

फलितमाह ब्रह्मानन्द इति । उक्तप्रकारेण स्वप्रकाशतया सुप्तौ प्रतिभासमानो यो ब्रह्मानन्दो यश्च तूष्णीं स्थितौ विषयानुभवमन्तरेण प्रतीयमानो वासनानन्दो योऽप्यभीष्टविषयलाभादन्तर्मुखे मनसि प्रतिबिम्बितो विषयानन्द एतत्त्रितयातिरेकेणास्मिन् जगति न कश्चिदानन्दोऽस्ति ननु आनन्दस्त्रिविधो ब्रह्मानन्दो विद्यासुखं तथा । विषयानन्द इत्यनेन प्रकारेणानन्दत्रैविध्यमुक्तम् इदानीन्तु ब्रह्मानन्दो वासना च प्रतिबिम्ब इति त्रयमिति तद्विलक्षणमानन्दस्य त्रैविध्यमुच्यते अतः पूर्वोत्तरविरोधः, किञ्च यावद् यावदहङ्कारो विस्मृतोऽभ्यासयोगतः, तावत् तावत् सूक्ष्मदृष्टेर्निजानन्दोऽनुमीयते इति तावत् पूर्वमुदासीनत्वेऽप्यानन्दवासनात्, उपेक्ष्य सुखमानन्दं भावयन्नेव तत्पर इति योगप्रकारस्याति

अन्तरेण जगत्यस्मिन्नानन्दो नास्ति कश्चन ॥ ८७ ॥

---

रिक्तौ निजानन्दमुख्यानन्दावभिधीयेते तथा द्वितीयाध्याये मन्दप्रज्ञन्तु
जिज्ञासुमात्मानन्देन बोधयेदिति आत्मानन्दस्ततोऽन्यो विधीयते एवं
तृतीयाध्याये योगानन्दः पुरोक्त इत्यत्र योगानन्दोऽपि कश्चिदवभासते
ब्रह्मानन्दाभिधे ग्रन्थे तृतीयाध्याय ईरितः अद्वैतानन्द एव स्यादित्य-
त्राद्वैतानन्दश्चान्यमवगच्छामः अतः अन्तरेण जगत्यस्मिन्नानन्दो नास्ति
कश्चनेत्युक्तिर्विरुध्येत इति चेत् नैवं विद्यानन्दस्य विषयानन्दवदन्तःकरण-
वृत्तिविशेषत्वेन विषयानन्दे चान्तर्भावस्य विषयानन्दवत् विद्यानन्दो धी-
वृत्तिरूपक इत्यत्र धीवृत्तिरूपत्वाभिधानेन विवक्षितत्वात् निजानन्द-
मुख्यानन्दात्मानन्दयोगानन्दाद्वैतानन्दानान्तु ब्रह्मानन्दानतिरिक्तत्वाच्च ।
तथा हि यावद् यावदहङ्कारेत्याद्युदाहृते श्लोके योगलक्षणोपायगम्य-
तया योगानन्दत्वेन विवक्षितस्य निजानन्दस्यैव न द्वैतं भासते नापि
निद्रा तत्रास्ति यत् सुखम् स ब्रह्मानन्द इत्याह भगवानर्जुनं प्रतीत्य-
त्रिषु श्लोकेषु एव ब्रह्मानन्दत्वाभिधानात् निजानन्दो ब्रह्मानन्दात् न
भिद्यते तथा मुख्यानन्दोऽपि ब्रह्मानन्द एव तथा च विषयानन्दो
वासनानन्द इत्यमू आनन्दो जनयन्नास्ते ब्रह्मानन्दः स्वयं प्रभ
इत्यत्र जन्यत्वेनाभ्युपगतयोर्विषयानन्दवासनानन्दयोर्जनकत्वेनाभिहि-
तस्य ब्रह्मानन्दस्यैव तादृक् पुमानुदासीनकालेऽपीत्युदाहृत एव श्लोके
आनन्दवासनाम् उपेक्ष्य मुख्यमानन्दं भावयत्येव तत्पर इति मुख्या-
नन्दत्वाभिधानात् आत्मानन्दाद्वैतानन्दयोस्तु ब्रह्मानन्दत्वं योगानन्दः
पुरोक्तो यः स आत्मानन्द इष्यतामिति तृतीयाध्यायादौ प्रथमाध्याये
योगानन्दतया विवक्षितस्य ब्रह्मानन्दस्यैव योगानन्दशब्देनानुवादपूर्वकम्
आत्मानन्दतामभिधाय कथं ब्रह्मत्वमेतस्य सद्वयस्येति चेदिति प्रश्नपूर्वकम्
आकाशादिस्वदेहान्तमित्यादिना अद्वितीयस्य ब्रह्मत्वप्रतिपादनादव-
गन्तव्यम् । तस्मात् ब्रह्मानन्दो वासना च प्रतिबिम्ब इत्युक्तं त्रैविध्यं

तथा च विषयानन्दो वासनानन्द इत्यमू।
आनन्दौ जनयन्नास्ते ब्रह्मानन्दः स्वयं प्रभः ॥ ८८ ॥
श्रुतियुक्त्यनुभूतिभ्यः स्वप्रकाशचिदात्मके।
ब्रह्मानन्दे सुप्तिकाले सिद्धे सत्यन्यदा शृणु ॥ ८९ ॥

---

मुख्यं तर्हि नन्वेवं वासनानन्दाद् ब्रह्मानन्दादपीतरं वेत्तु योगी निजानन्दमित्यत्र निजानन्दस्य ब्रह्मानन्दवासनानन्दाभ्यां भेदेन निर्देशो न युज्यते इति न शङ्कनीयम् एकस्यैव ब्रह्मानन्दस्य जगत्कारणोपाधि-साहित्यराहित्यभेदेन भेदव्यपदेशोपपत्तेः। तथा हि ब्रह्मानन्दनिरूपणा-वसरे आनन्दादेव भूतानि जायन्ते इत्यादिना जगत्कारणत्वाभिधानेन ब्रह्मानन्दस्य समायत्वमवगम्यते निर्मायस्य जगत्कारणत्वानुपपत्तेः। निजानन्दनिरूपणकालेऽपि यावद् यावदहङ्कार इत्यादिना सकारण-स्याहङ्कारस्य विलयप्रतिपादनात् निजानन्दस्य निर्मायत्वमिति सर्वमनवद्यम् ॥ ८७ ॥

नन्वस्मिन्नध्याये ब्रह्मानन्दविवेचनस्यैव प्रस्तुतत्वात् इतरानन्दद्वय-प्रतिपादनं प्रकृतासङ्गतमित्याशङ्क्य तयोर्ब्रह्मानन्दजन्यत्वेन तद्बोधोप-योगित्वान्न प्रकृतासङ्गतमित्यभिप्रायेणाह तथा चेति। तथा च एवमानन्दत्रैविध्ये सति यः स्वप्रकाश आनन्दो विषयानन्दवासनानन्दौ जनयति स ब्रह्मानन्दो वेदितव्य इत्यर्थः ॥ ८८ ॥

उक्तानुसंकीर्तनपूर्वकमुत्तरपद्यमवतारयति श्रुतीति। श्रुतिभिः सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति इत्यादिभिरुदा-हृताभिर्युक्तिभिः सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यादिपरामर्शान्यथानुपपत्त्या-दिभिः अनुभूत्या चाचार्यपरिकल्पितेन लोकप्रानुभवेन च सुषुप्तिकाले स्वप्रकाशो ब्रह्मानन्दः साधितः परमन्यदा जागरस्वप्नावस्थायामपि यो ब्रह्मानन्दं प्राप्तुमुपायो वक्ष्यते तं शृण्वित्यर्थः ॥ ८९ ॥

य आनन्दमयः सुप्तौ स विज्ञानमयात्मताम् ।
गत्वा स्वप्नं प्रबोधं वा प्राप्नोति स्थानभेदतः ॥ ८० ॥
नेत्रे जागरणं कण्ठे स्वप्नः सुप्तिर्हृदम्बुजे ।
आपादमस्तकं देहं व्याप्य जागर्ति चेतनः ॥ ८१ ॥
देहतादात्म्यमापन्नस्तप्तायःपिण्डवत् ततः ।
अहं मनुष्य इत्येवं निश्चित्यैवावतिष्ठते ॥ ८२ ॥
उदासीनः सुखी दुःखीत्यवस्थात्रयमेत्यसौ ।
सुखदुःखे कर्मकार्ये त्वौदासीन्यं स्वभावतः ॥ ८३ ॥

---

प्रतिज्ञातमेव ब्रह्मानन्दावगमोपायं दर्शयितुं तदुपोद्घातत्वेन कर्मनिमित्तां जीवस्यावस्थात्रयप्राप्तिं दर्शयति य आनन्दमय इति । सुप्तौ सुषुप्तिकाले विलीनावस्थ आनन्दमयशब्देन कथ्यते इत्युक्तो य आनन्दमयः स विज्ञानमयशब्दाभिधेयबुद्ध्युपाधिमत्त्वेन विज्ञानमयतां प्राप्य स्थानभेदतो वक्ष्यमाणस्थानविशेषयोगेन स्वप्नं जागरणं वा कर्मानुसा-रेण गच्छति ॥ ८० ॥

इदानीं जाग्रदाद्यवस्थोपयोगीनि स्थानानि दर्शयति नेत्र इति । नेत्रशब्दस्य स्थूलदेहोपलक्षणपरतामभिप्रेत्य नेत्रे जागरणमित्युक्तं तस्यार्थ-माह आपादेति । चेतनो जीवः ॥ ८१ ॥

देहं व्याप्य इत्यनेन विवक्षितमर्थं दृष्टान्तप्रदर्शनेन स्पष्टयति देह-तादात्म्यमिति । तत्र प्रमाणमाह अहमिति । यतो मनुष्यत्वा-दिजातिमता देहेन तादात्म्यं प्राप्तः ततः अहं मनुष्य इत्येवं निश्चित्य संशयादिरहितज्ञानेन अहमित्येवावतिष्ठते ॥ ८२ ॥

देहतादात्म्याभिमानहेतुकमवस्थात्रयं दर्शयति उदासीन इति । तत्र सुखित्वदुःखित्वयोः कर्मजन्यत्वज्ञापनाय विशेषणभूतयोः सुख-दुःखयोः कर्मजन्यत्वं दर्शयति सुखेति ॥ ८३ ॥

बाह्यभोगान्मनोराज्यात् सुखदुःखे द्विधा मते ।
सुखदुःखान्तरालेषु भवेत् तूष्णीमवस्थितिः ॥ ९४ ॥

न कापि चिन्ता मेऽस्त्यद्य सुखमास इति ब्रुवन् ।
औदासीन्ये निजानन्दभानं वक्त्यखिलो जनः ॥ ९५ ॥

अहमस्मीत्यहङ्कारसामान्याच्छादितत्वतः ।
निजानन्दो न मुख्योऽयं किन्त्वसौ तस्य वासना ॥ ९६ ॥

नीरपूरितभाण्डस्य बाह्ये शैत्यं न तज्जलम् ।
किन्तु नीरगुणस्तेन नीरसत्तानुमीयते ॥ ९७ ॥

---

तयोश्च सुखदुःखयोर्निमित्तभेदात् द्वैविध्यमाह बाह्येति तद्वदौदासीन्यं कदा स्यादित्यत आह सुखदुःखेति । स्वल्पभेदविवक्षया बहुवचनम् ॥ ९४ ॥

उक्तं आप्तवाक्यमुपन्यस्य तदिदानीं दर्शयति न कापीति । सर्वोऽपि जन इदानीं मम कापि चिन्ता स्वदेहादिविषया नास्ति अतः सुखं यथा भवति तथा तिष्ठामीति वदन् औदासीन्यकाले स्वरूपानन्दस्फूर्तिं ब्रूते अतो आपामरपण्डितानामपि निजानन्दभानमस्तीत्यवगन्तव्यमित्यभिप्रायः ॥ ९५ ॥

नन्वौदासीन्येऽवभासमानस्य निजानन्दत्वे तस्य ब्रह्मानन्दत्वात् पूर्वोक्तवासनानन्दता न स्यादित्याशङ्क्य अहङ्कारसामान्याच्छन्नत्वान्न ब्रह्मानन्दता इति परिहरति अहमस्मीति । देवदत्तोऽहमित्यादिविशेषशून्येनाहमस्मीत्येवं रूपेणाहङ्कारसामान्येनाच्छन्नत्वान्नायं मुख्य इत्यर्थः । तर्हि तस्य किंरूपता इत्यत आह किन्त्वसाविति ॥ ९६ ॥

मुख्यानन्दातिरिक्तवासनानन्दसद्भावे दृष्टान्तमाह नीरेति । जलपूर्णकुम्भस्य बहिर्भागस्पर्शनेनोपलभ्यमानं यत् शैत्यमस्ति तत्तावज्जलं न भवति द्रवत्वानुपलम्भात् । किं तर्हि तदित्यत आह किन्त्विति । नीरगुणत्वं व्यपदिश्यते इत्यत आह तेनेति । विमतं घटे उपलभ्य-

यावद् यावदहङ्कारो विस्मृतोऽभ्यासयोगतः ।
तावत् तावत् सूक्ष्मदृष्टेर्निजानन्दोऽनुमीयते ॥ ९८ ॥
सर्वात्मना विस्मृतः सन् सूक्ष्मतां परमां व्रजेत् ।
अलीनत्वान्न निद्रैषा ततो देहोऽपि नो पतेत् ॥ ९९ ॥
न द्वैतं भासते नापि निद्रा तत्रास्ति यत् सुखम् ।

---

मानं चैत्यं तदनन्यं भवितुमर्हति चैत्यत्वात् अन्ये उपलभ्यमान-चैत्यवदिति ॥ ९७ ॥

भवत्वेवं धीराद्यनुमापकत्वं चैत्यस्य प्रकृते किमायातमित्याशङ्क्य तद्वत् अद्वयानन्दस्यापि सूक्ष्मानन्दानुमापकत्वमायातमित्याह यावदिति । अभ्यासयोगतः ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनीति श्रुत्यभिहितनिरोधसमाध्यभ्यासयोगेन यावद्यावदहङ्कारादिवृत्ति-विस्मरणात् चित्तस्य सूक्ष्मता जायते तावत्तावन्निजानन्दाभिव्यक्ति-र्भवतीत्यनुमीयते अयमत्र प्रयोगः अहङ्कारसङ्कोचविशेषविशिष्टक्षणेषु द्वितीयादिक्षणः पक्षः स पूर्वस्मात् क्षणात् अधिकनिजानन्दाविर्भाववान् अहङ्कारसङ्कोचविशेषसंयुक्तकालत्वात् अहङ्कारसङ्कोचसंयुक्ताद्य-क्षणवदिति ॥ ९८ ॥

सुषुप्तौ तत्र कोऽवधिरित्यत आह सर्वेति । तर्हि सा निद्रैव स्यादित्यत आह अलीनेति । सर्वात्मविस्मृतेऽप्यन्तःकरणस्य स्वरूपप्रवि-लयाभावात् नेयं निद्रा बुद्धेः कारणात्मनावस्थानं सुषुप्तिरित्याचार्यैरुक्त-त्वात् इत्यर्थः । अन्तःकरणस्वरूपविलयाभावे लिङ्गमाह तत इति । यत्र सुषुप्त्यादावहङ्कारविलयस्तत्र देहपातो दृष्टः इह तु तदभावाद्-विलीन इति मन्यते ॥ ९९ ॥

फलितमाह न द्वैतमिति । यस्मिन् काले द्वैतभानं नास्ति निद्रापि नागच्छति तस्मिन् काले उपलभ्यमानं यत् सुखमस्ति स ब्रह्मा-

स ब्रह्मानन्द इत्याह भगवानर्जुनं प्रति ॥ १०० ॥

शनैः शनैरुपरमेत् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ १०१ ॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ १०२ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभतमकल्मषम् ॥ १०३ ॥

---

नन्द इत्यर्थः । अयं ब्रह्मानन्द इति कुतोऽवगतमित्याशङ्क्य भगवद्वाक्यादित्याह इत्याहेति । गीतायां षष्ठाध्याये इति शेषः ॥ १०० ॥

तत्र कैः श्लोकैरुक्तवान् इत्याशङ्क्य तान् श्लोकान् पठत्यर्थक्रमानुसारेण शनैरिति । अयमर्थः धृतिगृहीतया धैर्ययुक्तया बुद्ध्या साधनभूतया शनैः शनैः न सहसा उपरमेत् मन उपरतं कुर्यात् । किंपर्यन्तमित्यत आह आत्मेति । मन आत्मसंस्थम् आत्मनि संस्था यस्य चिन्मात्रमेव इदं सर्वं न ततोऽन्यत् किंचिदस्तीत्येवंरूपा यस्य तदात्मसंस्थं तथाविधं कृत्वा न किंचिदपि चिन्तयेत्, एष योगस्य परमोऽवधिः ॥ १०१ ॥

एतस्मिन्नासने प्रवृत्तो योगी प्रथमं किं कुर्यादित्यत आह यतो यत इति । चञ्चलं मनः स्वभावदोषादत एवास्थिरम् एकत्र विषये अनियतम् एवंविधं मनो यदा यदा यतो यतो यस्मात् यस्माच्छब्दादेर्निमित्तात् निश्चरति निर्गच्छति तदा तदा तस्मात् तस्मात् शब्दादेः सकाशान्नियम्य तेषां शब्दादीनां मिथ्यात्वादिदोषदर्शनेनाभ्यासीकृत्य वैराग्यभावनापूर्वकं निवर्त्यैतन्मन आत्मन्येव वशं नयेत् आत्मवशतामापादयेत् ॥ १०२ ॥

एवं योगमभ्यस्यतोऽभ्यासवशादात्मन्येव मनः प्रशाम्यति मनःप्रशान्तौ किं भवति इत्यत आह प्रशान्तेति । शान्तरजसं प्रक्षीणमोहादिक्लेश-

यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ १०४ ॥
सुखमात्यन्तिकं यत् तद् बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ १०५ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥१०६ ॥

---

रजसम् अत एव प्रशान्तमनसं प्रकर्षेणात्यर्थं शान्तं विक्षेपशून्यं मनो यस्य तं ब्रह्मभूतं ब्रह्मैव इदं सर्वमिति निश्चयवत्तया जीवन्मुक्तम् अक- ल्मषम् अधर्मादिवर्जितम् एनं योगिनमुत्तमं सातिशयत्वादि- दोषरहितं सुखमुपैति उपगच्छतीति ॥ १०२ ॥

संप्रज्ञातार्थप्रपञ्चनपरान् गीतायामेव श्लोकान् पठति यत्रेति। चित्तं यत्र यस्मिन् काले योगसेवया योगानुष्ठानेन सर्वस्मात् विषयात् निवारितं सदुपरमते उपरमं गच्छतीति। किञ्च यत्र यस्मिन् काले आत्मना समाधिपरिशुद्धेनान्तःकरणेनात्मानं परं ज्योतिःस्वरूपं पश्यन् उपलभ्यमानः स्वस्मिन्नेव तुष्यति तुष्टिं भजते न विषयेष्वित्यर्थः ॥१०४॥

किञ्च यत्र यस्मिन् काले आत्मनि स्थितोऽयं योगी आत्यन्तिकम् अत्यन्तमेव भवतीति आत्यन्तिकम् अनन्तं बुद्धिग्राह्यम् इन्द्रियनिरपेक्षया बुद्ध्या ग्राह्यम् अतीन्द्रियम् इन्द्रियगोचरातीतम् अविषयजनितं यत् तदीदृशं सुखं वेत्ति अनुभवति किञ्चात्मनि स्थितोऽयं तत्त्वतस्तस्मात् आत्मस्वरूपात् चलति न प्रच्यवते ॥ १०५ ॥

किञ्च यमात्मानं लब्ध्वा प्राप्य अपरं लाभं लाभान्तरं ततोऽधिकं न मन्यते आत्मलाभात् परं विद्यते इति श्रुतेः किञ्च यस्मिन्नात्मतत्त्वे स्थितो गुरुणा महतापि दुःखेन शस्त्राभिघातादिलक्षणेन प्रह्लाद इव न विचाल्यते ॥ १०६ ॥

तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगी निर्विण्णचेतसा ॥ १०७ ॥
युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ १०८ ॥
उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वत् भवेदपरिखेदतः ॥ १०९ ॥

---

इदानीमुपपादितं योगं निगमयति तं विद्यादिति । शनैः शनैरित्यादिना यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तस्तं दुःखसंयोगवियोगं दुःखैः संयोगस्तेन वियोगस्तं विपरीतलक्षणया योगसंज्ञितं योग इत्येवं संज्ञितं विद्याज्जानीयात् । एवंविधयोगानुष्ठाने किञ्चित् कर्त्तव्यताविशेषमाह स निश्चयेनेति । स पूर्वोक्तो योगो निश्चयेनाध्यवसायेन अनिर्विण्णचेतसा निर्वेदरहितेन चित्तेन योक्तव्योऽनुष्ठेयः ॥ १०७ ॥

इदानीमुक्तमर्थमुपसंहरति युञ्जन्निति । विगतकल्मषो योगान्तरायवर्जितो योगी सदा आत्मानमेवं यथोक्तेन प्रकारेण युञ्जन्ननुसन्दधानः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा संस्पर्शो यस्य सुखस्य तद् ब्रह्मसुखं ब्रह्मस्वरूपभूतमिति यावत् । अत्यन्तमविनश्वरं निरतिशय सुखमश्नुते प्राप्नोतीत्यर्थः ॥ १०८ ॥

अनिर्वेदेन क्रियमाणो योगाभ्यासः फलपर्य्यन्तो भवतीत्येतत् सदृष्टान्तमाह उत्सेक इति । कुशाग्रेणोद्धृतेनैकेन बिन्दुना क्रियमाण उदधेरुत्सेकः शोषणं यद्वत् निर्वेदाभावे सति यद्वत् कालान्तरे भवेदेव तद्वदेव मनसो निग्रहोऽपि अपरिखेदेन क्रियमाणः कालान्तरे सिध्येत् इत्थं टिट्टिभोपाख्यानं सर्व्वत्र विख्यातमस्तीत्यर्थः ॥ १०९ ॥

बृहद्रथस्य राजर्षेः शाकायन्यो मुनिः सुखम् ।
प्राह मैत्राख्यशाखायां समाध्युक्तिपुरःसरम् ॥ ११० ॥
यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ १११ ॥
स्वयोनावुपशान्तस्य मनसः सत्यकामिनः ।
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥ ११२ ॥
चित्तमेव हि संसारस्तत् प्रयत्नेन शोधयेत् ।
यच्चित्तस्तन्मयो मर्त्यो गुह्यमेतत् सनातनम् ॥ ११३ ॥

---

न केवलमयमर्थो गीतायामभिहितः किन्तु मैत्रायणीयशाखाया-मपीत्याह बृहदिति । मैत्रायणीयनामके यजुःशाखाभेदे शाकायन्य-नामा कश्चिदृषिः क्षत्रियत्वेनोपपन्नस्य बृहद्रथाख्यस्य राजर्षेः सुखं समाध्यभिधानपूर्वकं यथा भवति तथोक्तवान् ॥ ११० ॥

येन प्रकारेणोक्तवानित्यपेक्षायां तत्प्रतिपादकान् तदीयान् मन्त्रान् पठति यथेति । निरिन्धनो दग्धकाष्ठो वह्निः स्वयोनौ स्वकारणे तेजोमात्रे उपशाम्यति ज्वालादिरूपं विशेषाकारं परित्यज्य तेजो-मात्ररूपेण यथावतिष्ठते तथा तेन प्रकारेण चित्तमन्तःकरणमपि वृत्ति-क्षयाच्चिरोधसमाध्यभ्यासेन राजसादिसकलवृत्तिनाशात् स्वकारणे चैत-न्ये उपशाम्यति चैतन्यमात्रावशेषं भवतीत्यर्थः ॥ १११ ॥

ततः किमित्यत आह स्वयोनाविति । सत्ये आत्मनि निर्विषये कामोऽस्यास्तीति सत्यकामी अत एव स्वयोनावुपशान्तस्य उपशान्त-त्वादेव इन्द्रियार्थविमूढस्येन्द्रियार्थेषु विषयेषु शब्दादिषु विमूढस्य विष-यस्य ज्ञानशून्यस्य मनसः कर्मवशमनुगच्छन्तीति कर्मवशानुगाः सुखा-दयः कर्मतापाविषयत्वाभावेन मिथ्याभूताः स्युरित्यर्थः ॥ ११२ ॥

ननु चित्तोपशान्तौ कर्मचिन्ता भवतु तदनुपपन्नं तद्गुणादानक्रमा-

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमक्षयमश्नुते ॥ ११४ ॥

---

भावात् तस्येत्याशङ्क्याह चित्तमिति । यद्यपि स्वरूपेण चित्तोपादानकं जगद्‌ भवति तथापि तस्य भोग्यत्वं चित्तकारणकमेव हि शब्देनात्र सर्वानुभवं प्रमाणयति सुषुप्त्यादौ चित्तविलये भोगादर्शनादिति भावः । यतश्चित्तात्मकः संसारः अतस्तच्चित्तमेव प्रयत्नेनाभ्यासवैराग्या-दिलक्षणेन शोधयेत् रजस्तमोमलराहित्येनैकाग्र्यं कुर्यात् । नन्वा-त्मनो विमुक्तये ह्यात्मैव शोधनीयो न चित्तमित्याशङ्क्याह यच्चित्तमिति । मर्त्यं इत्युपलक्षणं देहिमात्रस्य यो देही यच्चित्तो यस्मिन् पुत्रदारादौ विषये चित्तवान् भवति स तन्मयः तदात्मक एव तत्साकल्यवैकल्ययो-रात्मन्येव समारोपणात् एतत् सनातनमिदमनादिरिदं गुह्यं रहस्यम् । एतदुक्तं भवति स्वभावतः शुद्धस्यात्मनो यच्चित्तसम्पर्कादेव संसारित्वं ध्यायतीव लेलायतीवेति श्रुतेः अतश्चित्तस्य शोधनेनात्मनः संसार-निवृत्तिरिति ॥ ११३ ॥

नन्वनादिभवपरम्परोपार्जितसुखदुःखप्रदपुण्यपापकर्मणोः सतोश्चित्त-शोधनेनापि कथमात्मनः संसारनिवृत्तिर्भविष्यतीत्याशङ्क्य चित्तप्रसादोप-लक्षितब्रह्मात्मानुसन्धानेन सकलकर्मक्षयोपपत्तेर्मैवमिति परिहरति चित्त-स्येति । हिशब्देन तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते उपपातकेषु सर्वेषु पातकेषु महत्सु च, प्रविश्य रज-नीपादं ब्रह्मध्यानं समाचरेदित्यादिश्रुतिस्मृतिप्रसिद्धिं द्योतयति । ततः किमित्यत आह प्रसन्नेति । प्रसन्न आत्मा चेतो यस्य स तथोक्तः आत्मनि स्वस्वरूपभूतेऽद्वितीयानन्दलक्षणे ब्रह्मणि स्थित्वा तदेवाह-मिति निश्चयेन दृश्यजातं परिहृत्य चिन्मात्ररूपेणावस्थाय अक्षयम-विनाशि यत् सुखं स्वरूपभूतं तदश्नुते ॥ ११४ ॥

समासक्तं यथा चित्तं जन्तोर्विषयगोचरे।
यद्येवं ब्रह्मणि स्यात् तत् को न मुच्येत बन्धनात्॥११५॥

मनो हि द्विविधं प्रोक्तं शुद्धञ्चाशुद्धमेव च।
अशुद्धं कामसम्पर्कात् शुद्धं कामविवर्जितम् ॥ ११६ ॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ ११७ ॥

समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत् सुखं भवेत्।
न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते ॥ ११८ ॥

---

प्रत्यगात्मनि स्थितेत्युक्तमेवार्थं दृष्टान्तोक्तिपुरःसरं द्रढयति समासक्तमिति। प्राणिनश्चित्तं विषय एव गोचर इन्द्रियप्रचारभूमिस्तस्मिन् यथा स्वभावतः सम्यगासक्तं भवति तद्वेव चित्तं ब्रह्मणि प्रत्यगभिन्ने परमात्मनि यद्येवमासक्तं स्यात् तर्हि कः संसारात् न मुच्येत सर्वोऽपि मुच्यत एवेत्यर्थः ॥ ११५ ॥

उक्तार्थदार्ढ्याय मनसोऽवान्तरभेदमाह मन इति। तत्र कारणमाह अशुद्धमिति। काम इत्युपलक्षणं क्रोधादेरपि ॥ ११६ ॥

द्विविधस्यैव तस्य क्रमेण संसारमोक्षयोर्हेतुतां दर्शयति मन एवेति ॥ ११७ ॥

प्रत्यगात्मनि स्थित्वा सुखमक्षयमश्नुते इत्युक्तमेवार्थं श्रुतिः स्वयमेव प्रपञ्चयति समाधीति। आत्मनि प्रत्यगभिन्ने निवेशितस्य समाधिनिर्धूतमलस्य समाधिना प्रत्यग्ब्रह्मणोरैक्यगोचर-प्रमया हत्वा निर्धूतमलस्य निःशेषेण निवारितरजस्तमोमलस्य चेतसः

यद्यप्यसौ चिरं कालं समाधिर्दुर्लभो नृणाम् ।
तथापि क्षणिको ब्रह्मानन्दं निश्चाययत्यसौ ॥ ११९ ॥
श्रद्धालुर्व्यसनी योऽत्र निश्चिनोत्येव सर्वथा ।
निश्चिते तु सकृत् तस्मिन् विश्वसित्यन्यदाप्ययम् ॥ १२० ॥
तादृक् पुमानुदासीनकालेऽप्यानन्दवासनाम् ।
उपेक्ष्य मुख्यमानन्दं भावयत्येव तत्परः ॥ १२१ ॥

तस्मिन् समाधौ यत् सुखमुत्पद्यते तदा समाधावुत्पन्नं तत् सुखं गिरा वाचा वर्णयितुं न शक्यते अलौकिकत्वात् इत्यर्थः, किन्तु स्वयं तत्-स्वरूपभूतं सुखमन्तःकरणेनैव गृह्यते ॥ ११८ ॥

नन्वस्यैव समाधेर्दुर्लभत्वात् कथमनेन ब्रह्मानन्दनिश्चयसम्भव इत्याशङ्क्याह यद्यपीति । अस्य समाधेः सन्ततत्वासम्भवेऽपि क्षणिकस्य तस्य समाधानेनैव ब्रह्मानन्दो निश्चेतुं शक्यत इत्यर्थः ॥ ११९ ॥

नन्वात्मदर्शनाय श्रवणादौ प्रवृत्ता अपि केचिदानन्दत्वनिश्चयशून्या बहिर्मुखा वर्तन्ते इत्याशङ्क्य श्रद्धादिरहितानां तथात्वेऽपि श्रद्धादिमतां तन्निश्चयो भवत्येव इत्याह श्रद्धालुरिति । व्यसनं सर्वदा सम्या-गभ्यासेत्याग्रहः तद्वान् व्यसनी । अत्र समाधौ । सर्वथा अवश्यम् । ततः किमित्यत आह निश्चित इति । तस्मिन् ब्रह्मानन्दे सकृदेकदा क्षणिकसमाधौ निश्चिते सति अयं श्रद्धाव्यसनवानन्यदापि इतरस्मिन्नपि काले विश्वसिति आनन्दोऽस्तीति विश्वासं करोति ॥ १२० ॥

ततोऽपि किमित्यत आह तादृगिति । तादृक् पुमान् श्रद्धादि-पुरःसरं व्यसनवान् पुरुष औदासीन्यदशायामपि उपलभ्यमानां पूर्वोक्तामानन्दवासनामुपेक्ष्य तत्परो ब्रह्मानन्दे तात्पर्यवान् भूत्वा तमेव भावयति ॥ १२१ ॥

परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ।
तदेवास्वादयत्यन्तः परसङ्गरसायनम् ॥ १२२ ॥
/ एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ।
तदेवास्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥ १२३ ॥
धीरत्वमक्षप्राबल्येऽप्यानन्दास्वादवाञ्छया
तिरस्कृत्याखिलाक्षाणि तच्चिन्तायां प्रवर्त्तनम् ॥ १२४ ॥
भारवाही शिरोभारं मुक्त्वास्ते विश्रमङ्गतः ।
संसारव्यापृतित्यागे तादृग्बुद्धिस्तु विश्रमः ॥ १२५ ॥
विश्रान्तिं परमां प्राप्तस्त्वौदासीन्ये यथा तथा ।
सुखदुःखदशायाञ्च तदानन्दैकतत्परः ॥ १२६ ॥

---

एवं व्यवहारकालेऽपि निजानन्दं भावयति इत्यत्र दृष्टान्तमाह परेति ॥ १२२ ॥

दार्ष्टान्तिके योजयति एवमिति ॥ १२३ ॥

धीरपदार्थमाह धीरत्वमिति । इन्द्रियाणां विषयाभिमुख्येन पुरुषाकर्षणसामर्थ्येऽपि स्वस्वरूपभूतानन्दानुसन्धानेच्छया सर्वाणीन्द्रियाणि तिरस्कृत्यानन्दानुसन्धान एव प्रवर्त्तनात्त्वं धीरत्वमित्यर्थः ॥ १२४ ॥

विश्रान्तिपदस्य विवक्षितमर्थं सदृष्टान्तमाह भारवाहीति । यथा लोके भारं वहन् पुरुषः स्वमस्तके शिरसि स्थितं भारं परित्यज्य स्वस्थचित्तो वर्त्तते तथा संसारव्यापारत्यागे सति स्वस्थचित्त आत्मनि स्थितिं भावयतो या बुद्धिः सा विश्रमशब्देनोच्यते इत्यर्थः ॥ १२५ ॥

इदानीं फलितमर्थमाह विश्रान्तिमिति । परमां निरतिशयां विश्रान्तिम् उक्तरूपां प्राप्तः पुरुषः स्वस्य औदासीन्यदशायां यथा परमानन्दास्वादने तात्पर्यवान् भवति एवं सुखदुःखदशाप्राप्तिकालेऽपि

अग्निप्रवेशहेतौ धीः शृङ्गारे यादृशी तथा ।
धीरस्योदेति विषयेऽनुसन्धानविरोधिनि ॥ १२७ ॥
अविरोधिसुखे बुद्धिः स्वानन्दे च गमागमौ ।
कुर्वन्त्यास्ते क्रमादेषा काकाक्षिवदितस्ततः ॥ १२८ ॥
एकैव दृष्टिः काकस्य वामदक्षिणनेत्रयोः ।
यात्यायात्येवमानन्दद्वये तत्त्वविदो मतिः ॥ १२९ ॥
भुञ्जानो विषयानन्दं ब्रह्मानन्दञ्च तत्त्ववित् ।

---

तदनुसन्धानं परित्यज्य निजानन्दास्वादन एव तात्पर्यवान् भवतीत्यर्थः ॥ १२६ ॥

ननु दुःखस्य प्रतिकूलत्वेन तदनुसन्धानेच्छाभावेऽपि वैषयिकसुखस्यानुकूलत्वेन पुरुषैरपेक्ष्यमाणत्वात् तदनुसन्धानेच्छा कुतो न भवेदित्याशङ्क्य तस्य विषयसम्पादनादिद्वारा अतीव बहिर्मुखत्वापादनेन निजानन्दानुसन्धानविरोधित्वात् तदिच्छापि विवेकिनो न जायते इति दृष्टान्तप्रदर्शनपूर्वकमाह अग्नीति । यथा देहविमोचनेच्छायां दृढतरायां सत्यां तद्विषयमनःकरणे शृङ्गारादौ यथाग्निप्रवेष्टुर्वैराग्यबुद्धिरुत्पद्यते एवं वैराग्यादिसाधनसम्पन्नस्य विवेकिनो ब्रह्मानुसन्धानविरोधिनि विषयसुखेऽपीत्यर्थः ॥ १२७ ॥

मा भूद् विरोधिनि विषयसुखे इच्छा अप्रयत्नसाध्यत्वादबहिर्मुखत्वहेतौ विषये किं न भवतीत्यत आह अविरोधीति ॥ १२८ ॥

दृष्टान्तं विवृणोति एकैव दृष्टिरिति । यथा काकस्य दृष्टिर्दृश्यते अनयेति दर्शनसाधनं चक्षुरिन्द्रियमेव वामदक्षिणनेत्रयोर्गोलकयोः पर्यायेण गमनागमने करोति एवं विवेकिनो बुद्धिरप्यानन्दद्वये इत्यर्थः ॥ १२९ ॥

द्विभाषाभिज्ञवद् विद्यादुभौ लौकिकवैदिकौ ॥ १३० ॥
दुःखप्राप्तौ च नोद्वेगो यथा पूर्वं यतो द्विदृक् ।
गङ्गामग्नार्धकायस्य पुंसः शीतोष्णधीर्यथा ॥ १३१ ॥
इत्थं जागरणे तत्त्वविदो ब्रह्मसुखं सदा ।
भाति तद्वासनाजन्ये स्वप्ने तत् भासते तथा ॥ १३२ ॥
अविद्यावासनाप्यस्तीत्यतस्तद्वासनोत्थिते ।
स्वप्ने मूर्खवदेवैष सुखं दुःखञ्च वीक्षते ॥ १३३ ॥

दार्ष्टान्तिकं प्रपञ्चयति भुञ्जान इति । तत्त्वविद्‌विषयान् भुञ्जानस्तज्जन्यं विषयानन्दमुपनिषद्वाक्यादवगतं ब्रह्मानन्दञ्च लौकिकवैदिकावुभौ विषयानन्दब्रह्मानन्दौ भाषाद्वयवेदिवज्जानीयादित्यर्थः ॥ १३० ॥

ननु दुःखानुभवदशायामुद्वेगे सति कथं निजानन्दानुभव इत्याशङ्क्याह दुःखेति । यतो यस्मात् कारणात् विवेकी द्विदृक् लौकिकवैदिकव्यवहारयोरपि वेत्ता अतो दुःखप्राप्तावपि पूर्ववदज्ञानदशायामिव न तस्योद्वेगः विवेकेन तदा बाध्यमानत्वात् अतो दुःखानुभवकालेऽपि निजानन्दानुभवसम्भवो न विरुध्यते इत्यर्थः । युगपदुभयानुसन्धाने दृष्टान्तमाह गङ्गेति ॥ १३१ ॥

फलितमाह इत्थमिति । सदा सर्वदुःखानुभवदशायां तूष्णीं स्थितौ चेत्यर्थः । न केवलं जागरणे एव तद्भानं किन्तु स्वप्नावस्थायामपीत्याह तद्वासनेति । हेतुगर्भितं विशेषणं जाग्रद्वासनाजन्यत्वात् स्वप्नस्य तत्रापि तद्ब्रह्मसुखं तथा जाग्रदवस्थायामिव भासते इत्यर्थः ॥ १३२ ॥

ननु स्वप्नस्यानन्दानुभववासनाजन्यत्वे सति आनन्द एव भासेत इत्याशङ्क्याह अविद्येति । न केवलमानन्दवासनावशादेव स्वप्नो जायते

ब्रह्मानन्दाभिधे ग्रन्थे ब्रह्मानन्दप्रकाशकम् ।
योगिप्रत्यक्षमध्याये प्रथमेऽस्मिन्नुदीरितम् ॥ १२४ ॥

इति ब्रह्मानन्दे योगानन्दः समाप्तः ।

---

## द्वादशपरिच्छेदः ।

### ब्रह्मानन्दे आत्मानन्दः ।

नन्वेवं वासनानन्दाद् ब्रह्मानन्दादपीतरम् ।
वेत्तु योगी निजानन्दं मूढस्यात्रास्ति का गतिः ॥ १ ॥

किन्त्वविद्यावासनाबलादपि तत्तद्वासनानुरूपत्वात् तस्मात्तस्यैव सुखाद्यनुभवो भवतीत्यर्थः ॥ १२३ ॥

एतावता ग्रन्थसन्दर्भेण सिद्धमर्थं निगमयति ब्रह्मानन्देति ब्रह्मानन्दनामके अध्यायपञ्चकात्मके ग्रन्थेऽस्मिन् प्रथमाध्याये सुषुप्त्यवस्थायामौदासीन्यकालेऽपि, समाध्यवस्थायां सुखदुःखदशायाञ्च स्वप्रकाशचिद्रूपब्रह्मानन्दस्य प्रकाशकं योग्यनुभवरूपं प्रत्यक्षमुक्तमित्यर्थः । इदञ्चोपलक्षणम् आगमादीनां तेषामपि प्रदर्शितत्वात् ॥ १२४ ॥

इति ब्रह्मानन्दे योगानन्दव्याख्या समाप्ता ।

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
ब्रह्मानन्दाभिधे ग्रन्थे आत्मानन्दो विविच्यते ॥

तदेवं प्रथमाध्याये विवेकिनो योगेन निजानन्दानुभवप्रकारं

धर्म्माधर्म्मवशादेष जायतां म्रियतामपि।
पुनः पुनर्देहलक्षैः किं नो दाक्षिण्यतो वद ॥ २ ॥
अस्ति वोऽनुजिघृक्षुत्वाद् दाक्षिण्येन प्रयोजनम्।
तर्हि ब्रूहि स मूढ़ः किं जिज्ञासुर्वा पराङ्मुखः ॥ ३ ॥
उपास्तिं कर्म्म वा ब्रूयाद् विमुखाय यथोचितम्।
मन्दप्रज्ञन्तु जिज्ञासुमात्मानन्देन बोधयेत् ॥ ४ ॥

---

प्रदर्श्य मूढस्य जिज्ञासोरात्मानन्दश्रवणाभावत्वं पदार्थविवेचनमुखेन ब्रह्मानन्दानुभवप्रकारप्रदर्शनाय शिष्यप्रश्नमवतारयति नन्वेवमिति ॥ १ ॥

शिष्येणैवं पृष्टो गुरुरतिमूढस्य विद्याधिकार एव नास्तीत्याह धर्मेति। यथोऽतिमूढोऽस्मादृशो संसारे अतीतेषु जन्मसु अनुष्ठितसुकृतदुष्कृतवशान्नानाविधदेहस्वीकारेण पुनः पुनर्जायतां म्रियतामित्यर्थः ॥२॥

सर्वानुग्राहकत्वादाचार्य्येण तस्यापि काचन गतिर्वक्तव्येति शिष्य आह अस्तीति। वो युष्माकम् अनुजिघृक्षुत्वादनुग्रहीतुमिच्छावत्त्वादनुजिघृक्षावत्त्वं भावस्तस्मात् शिष्योद्धरणेच्छायुक्तत्वाद् दाक्षिण्येन तदुद्धरणप्रयोजनमस्तीत्यर्थः। एवं शिष्यवचनमाकर्ण्य गुरुस्तं विकल्प्य पृच्छति तर्हीति। यदि मूढस्यापि काचन गतिर्वक्तव्या तर्हि स मूढः किं रागी विरक्तो वेति वद ॥ ३ ॥

रागी चेत्तद्रागानुसारेण कर्म्मोपासनं वा वक्तव्यमिति प्रथमे परिहारमाह उपास्तिमिति। विमुखाय तत्त्वज्ञानविमुखाय बहिर्मुखाय इत्यर्थः, यथोचितं यथायोग्यं ब्रह्मलोकादिकामेऽदुपास्तिं ब्रूयात् स्वर्गादिकामश्चेत् कर्म ब्रूयादित्यर्थः। जिज्ञासुत्वेऽपि योऽतिविवेकी मन्दप्रज्ञो वेति विकल्प्य अतिविवेकिनः पञ्चाध्यायोक्तप्रकारेण योगेन ब्रह्मसाक्षात्कारमभिप्रेत्य मन्दप्रज्ञस्य तद्दर्शनोपायमाह मन्दप्रज्ञमिति। यो मन्दप्रज्ञः मन्दा जड़ा प्रज्ञा बुद्धिर्यस्य स मन्दप्रज्ञस्तं जिज्ञासुं साक्षाज्जिज्ञासुमात्मानन्देन आत्मानन्दविवेचनमुखेन बोधयेत् ॥४॥

बोधयामास मैत्रेयीं याज्ञवल्क्यो निजप्रियाम् ।
न वा अरे पत्युरर्थे पतिः प्रिय इतीरयन् ॥ ५ ॥
पतिर्जाया पुत्रवित्ते पशुब्राह्मणबाहुजाः ।
लोका देवा वेदभूते सर्वञ्चात्मार्थतः प्रियम् ॥ ६ ॥
पत्याविच्छा यदा पत्न्यास्तदा प्रीतिं करोति सा ।
क्षुदनुष्ठानरोगाद्यैस्तदा नेच्छति तत् पतिः ॥ ७ ॥
न पत्युरर्थे सा प्रीतिः स्वार्थ एव करोति ताम् ।

एवं केन का बोधिता इत्यत आह बोधयामासेति । याज्ञवल्क्यनामको यजुःशाखाविशेषप्रवर्त्तकः कश्चिदृषिर्मैत्रेयीमेतन्नामिकां निजप्रियां स्वभार्यां न वा अरे पत्युरर्थे पतिः प्रिय इति न वा अरे पत्युः कामाय पतिः प्रियो भवतीत्यादिप्रकारेण ईरयन् ब्रुवन् बोधयामास बोधितवानित्यर्थः ॥ ५ ॥

उक्तस्य परप्रेमास्पदत्वेन परमानन्दरूपतामिति वाक्येन परप्रेमास्पदत्वेन हेतुना आत्मनः परमानन्दरूपतां विसाधयिषुरादौ परप्रेमास्पदत्वहेतुसमर्थनाय तावदुदाहृतवाक्यस्योपक्रमपरतामभिप्रेत्य तत्प्रकरणस्थपञ्चमषष्ठीयवाक्यतात्पर्यमाह पतिरिति । पतिजायादिकं भोग्यजातं भोक्तृशेषत्वात् भोक्तृसम्बन्धेनैव प्रियं न स्वरूपेणेत्यभिप्रायः ॥ ६ ॥

इदानीं पूर्वोदाहृतस्य न वा अरे पत्युः कामाय पतिः प्रियो भवति इति आत्मनस्तु कामाय पतिः प्रियो भवति इत्यस्य वाक्यस्य तात्पर्यार्थं विभज्य दर्शयति पत्याविच्छेति । यदा यस्मिन् काले पत्या जायायाः पत्यौ भर्त्तरि विषये इच्छा कामो भवति तदा सा पत्नी पत्यौ प्रीतिं स्नेहं करोति तदा तत्पतिः क्षुधादिना इच्छाभावहेतुना युक्तो भवति चेत् नेच्छति न कामयते ॥ ७ ॥

पतिश्चात्मन एवार्थं न जायार्थं कदाचन।
अन्योऽन्यप्रेरणेऽप्येवं स्वेच्छयैव प्रवर्त्तनम् ॥ ८ ॥
श्मश्रुकण्टकवेधेन बाले रुदति तत्पिता।
चुम्बत्येव न सा प्रीतिर्बालार्थे स्वार्थ एव सा ॥ ९ ॥
निरिच्छमपि रत्नादि वित्तं यत्नेन पालयन्।
प्रीतिं करोति सा स्वार्थे वित्तार्थत्वं न शङ्कितम् ॥१०॥
अनिच्छति बलीवर्दे विवाहयिषते बलात्।

---

एवञ्च सति किं फलितमित्यत आह न पत्युरिति। जायया क्रियमाणा या प्रीतिः सा न पत्युः प्रयोजनाय किन्तु जाया वा पत्यौ प्रीतिं स्वार्थं एव स्वप्रयोजनायैव करोति। न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवतीत्यादि न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति इत्यन्तानां वाक्यानां तात्पर्यं क्रमेण विभज्य दर्शयति पतिश्चेत्यादिना। पतिश्च भर्त्ता स्वप्रयोजनायैव जायायां प्रीतिं करोति न जायाप्रीतये इत्यर्थः। नन्वेकेच्छया प्रवृत्तौ प्रीतिः स्वार्था भवतु युगपदुभयेच्छाप्रवृत्तौ तु प्रीतेरुभयार्थता स्यादित्याशङ्क्याह अन्योऽन्येति। एवमुक्तेन प्रकारेण स्वेच्छयैव स्वकामनापूर्त्त्येच्छयैव प्रवर्त्तनमुभयोरपीति शेषः ॥ ८ ॥

स्वेच्छया प्रवर्त्तनत्वमेव दर्शयति श्मश्रुकण्टकेति। पित्रा क्रियमाणं पुत्रस्य चुम्बनं न पुत्रप्रीत्यर्थं तस्य श्मश्रुकण्टकवेधेन रोदनकर्त्तृत्वात् स्वतस्तत्पितुः स्वसुखार्थमेवेत्यवगन्तव्यमित्यर्थः ॥ ९ ॥

चेतनेषु पतिजायापुत्रेषु क्रियमाणायाः प्रीतेः स्वार्थत्वपरार्थत्वसन्देहसंभवादचेतनत्वेनेच्छाभावाच्छङ्कितस्य वित्तविषयस्य तत्सद्भावे नास्ति दर्शयितुं न वा अरे वित्तस्य कामायेत्यादिवाक्यस्य तात्पर्यमाह निरिच्छमपीति ॥ १० ॥

प्रीतिः सा वणिगर्थैव बलीवर्दार्थता कुतः ॥ ११ ॥
ब्राह्मण्यं मेऽस्ति पूज्योऽहमिति तुष्यति पूजया ।
अचेतनाया जातेर्नो सन्तुष्टिः पुंस एव सा ॥ १२ ॥
क्षत्रियोऽहं तेन राज्यं करोमीत्यत्र राजता ।
न जातेर्वैश्यजात्यादौ योजनायेदमीरितम् ॥ १३ ॥
स्वर्गलोकब्रह्मलोकौ स्तां ममेत्यभिवाञ्छनम् ।
लोकयोर्नोपकाराय स्वभोगायैव केवलम् ॥ १४ ॥
ईशविष्ण्वादयो देवाः पूज्यन्ते पापनष्टये ।
न तन्निष्पापदेवार्थं स्वार्थं तत्तूपयुज्यते ॥ १५ ॥

---

चेतनत्वेऽपि वाहनादीच्छारहितपशुविषयस्य न वा अरे पशूना-मिति वाक्यस्य तात्पर्यमाह अनिच्छतीति । बलीवर्देऽनडुहि अनि-च्छति भारं वोढुमिच्छामकुर्वत्यपि बलाद् विवाहयिषते वाहयितुं कामयते तत्र वहनादिविषयायाः प्रीतेः वणिगर्थतैव न बलीवर्दार्थता इत्यर्थः ॥ ११ ॥

न वा अरे ब्राह्मणः कामाय इति वाक्यस्य तात्पर्यमाह ब्राह्मण्य-मिति । ब्राह्मण्यनिमित्तया पूजया ब्राह्मणोऽहमस्मीति अभिमानवानेव तुष्यति न जड़जातिरित्यर्थः ॥ १२ ॥

न वा अरे क्षत्रस्य इत्यादिवाक्यस्य तात्पर्यमाह क्षत्रियोऽहमिति । राज्योपभोगनिमित्तं सुखं क्षत्रियत्वजातिमतएव न क्षत्रियजातेरित्यर्थः । इदं क्षत्रियोदाहरणं वैश्याद्युपलक्षणार्थमित्याह वैश्येति ॥ १३ ॥

न वा अरे लोकानां कामायेत्यादिवाक्यस्य तात्पर्यमाह स्वर्गेति । लोकद्वयोपादानं कर्मोपासनासाधनद्वयसाध्यसकललोकोपलक्ष-णार्थम् ॥ १४ ॥

किञ्च ईशेति, पापनष्टये पापनिवृत्तये इत्यर्थः । तत् पूजनं न

ऋगादयो ह्यधीयन्ते दुर्ब्राह्मण्यानवाप्तये ।
न तत् प्रसक्तं वेदेषु मनुष्येषु प्रसज्यते ॥ १६ ॥
भूम्यादिपञ्चभूतानि स्थानतृट्पाकशोषणैः ।
हेतुभिश्चावकाशेन वाञ्छन्त्येषां न हेतवे ॥ १७ ॥
स्वामिभृत्यादिकं सर्वं स्वोपकाराय वाञ्छति ।
तत्तत्कृतोपकारस्तु तस्य तस्य न विद्यते ॥ १८ ॥
सर्वव्यवहृतिष्वेवमनुसन्धातुमीदृशम् ।
उदाहरणबाहुल्यं तेन स्वां वासयेन्मतिम् ॥ १९ ॥

निष्पापदेवार्थं स्वतः पापरहितानां देवानां न प्रयोजनाय किन्तु स्वार्थं पूजाकर्तुः प्रयोजनाय ॥ १५ ॥

किञ्च ऋगादय इति । दुर्ब्राह्मण्यं ब्रात्यत्वं तच्च दुर्ब्राह्मण्यं मनुष्यत्वावान्तरजातिरूपं तद्रहितेषु वेदेषु न प्रसज्यत इत्यर्थः ॥ १६ ॥

किञ्च भूम्यादीति । सर्वे प्राणिनः अवस्थानप्रदानतृड्निवारणपाककरणाङ्गशोषणावकाशप्रदानाख्यैर्हेतुभिर्निमित्तैः पृथिव्यादीनि पञ्च भूतानि वाञ्छन्ति अपेक्षन्ते एवं पृथिव्यादीनान्तु केनचिदवस्थानवाञ्छनादीनि निमित्तानि न सन्ति अतो न स्वयमाकाङ्क्षन्त इत्यर्थः ॥ १७ ॥

इदानीं न वा अरे सर्वस्य कामायेत्यस्य वाक्यस्य तात्पर्यमाह स्वामिभृत्यादीति । भृत्यादि सर्वो जनः स्वाम्यादिकं सर्वं स्वोपकाराय वाञ्छति एवं स्वाम्यादिरपि ॥ १८ ॥

ननु श्रुतावेवं बहूदाहरणदर्शनं किमर्थं कृतमित्याशङ्क्याह सर्वे इति । इच्छापूर्वकेषु सर्वेष्वपि भोजनादिव्यवहारेषु एवम् आत्मनस्तु कामाय सर्वं प्रियं भवतीत्युक्तेन प्रकारेणानुसन्धानाय इदं पति-जायादिषु प्रीतिदर्शनरूपम् उदाहरणबाहुल्यमुक्तमिति शेषः, तेन

अथ केयं भवेत् प्रीतिः श्रूयते या निजात्मनि ।
रागो बध्वादिविषये श्रद्धा यागादिकर्मणि ।
भक्तिः स्यात् गुरुदेवादाविच्छा त्वप्राप्तवस्तुनि ॥ २० ॥
तर्ह्यस्तु सात्त्विकी वृत्तिः सुखमात्रानुवर्त्तिनी ।
प्राप्ते नष्टेऽपि सद्भावादिच्छातो व्यतिरिच्यते ॥ २१ ॥

कारणेन स्वां स्वसम्बन्धिनीं मतिं बुद्धिं वासयेत् सर्वस्यापि स्वशेषत्वानु-गमेन स्वात्मनः प्रियतमत्वानुसन्धानवतीं कुर्य्यादित्यर्थः ॥ १९ ॥

नन्वात्मशेषत्वेन सर्वस्य प्रियत्वस्योक्तेरात्मनः प्रियतमत्वमुक्तमनुपपन्नं विकल्पे क्रियमाणे प्रीतेरेव दुर्निरूपत्वादित्यभिप्रायेण प्रीतिस्वरूपं पृच्छति अथ केयमिति । अथशब्दः प्रश्नार्थः । या निजात्मनि प्रीतिः श्रूयते इयं प्रीतिः का किं रागरूपा किंवा श्रद्धारूपा भक्तिरूपा इच्छारूपा वेति विकल्पार्थः । चतुर्ष्वपि पक्षेषु प्रीतेः सर्वविषयत्वं न सम्भवतीत्याह राग इति । रागश्चेद् बध्वादिष्वेव स्यात् न यागादिषु श्रद्धा चेत् यागादिष्वेव स्यात् न बध्वादिषु भक्तिश्चेत् गुर्वादिष्वेव स्यात् नेतरेषु इच्छा चेत् अप्राप्तवस्तुविषयैव स्यात् नेतरविषया अतो न सर्वविषयत्वं प्रीतेरित्यर्थः ॥ २० ॥

उक्तप्रकारचतुष्टयातिरिक्तं पक्षमादाय समाधानमाह तर्हीति । प्रीते-रागादिरूपत्वासम्भवे सति सुखमात्रानुवर्त्तिनी सुखमेव सुखमात्रमनु-सृत्य वर्त्तत इति सुखमात्रानुवर्त्तिनी सुखैकगोचरा इत्यर्थः सात्त्विकी सत्त्वगुणपरिणामरूपा वृत्तिरन्तःकरणवृत्तिः प्रीतिरस्तु । ननु तर्हि सा प्रीतिरिच्छैव स्यादित्याशङ्क्याह प्राप्त इति । इच्छा तावदप्राप्तवस्त्वादि-मात्रविषया इयन्तु सर्वविषया प्राप्ते बध्वे सुखादौ नष्टेऽपि तस्मिन् विनष्टे सद्भावात्तु इच्छातः इच्छाया व्यतिरिच्यते भिद्यते ॥ २१ ॥

सुखसाधनतोपाधेरन्नपानादयः प्रियाः ।
आत्मानुकूल्यादन्नादिसमश्चेदमुनात्र कः ।
अनुकूलयितव्यः स्यान्नैकस्मिन् कर्मकर्तृता ॥ २२ ॥
सुखे वैषयिके प्रीतिमात्रमात्मा त्वतिप्रियः ।
सुखे व्यभिचरत्येषा नात्मनि व्यभिचारिणी ॥ २३ ॥

---

इदानीं सुखसाधनभूतेषु अन्नादिष्विव आत्मन्यपि प्रीतिदर्शनात् आत्मनोऽप्यन्नादिवत् सुखसाधनता स्यात् इति शङ्कते सुखेति । अन्नपानादयः सुखसाधनत्वोपाधिना यथा प्रियादृष्टाः आत्मापि आनुकूल्यात् प्रियत्वात् अन्नादिसमः अन्नपानादिवत् सुखसाधनं स्यादित्यर्थः । तत्रेदमनुमानं सूचितं विमत आत्मा सुखसाधनं भवितुमर्हति प्रियत्वात् अन्नादिवत् इति । अन्नादिषु भोग्यत्वमुपाधिरित्यभिप्रायेण परिहरति अमुनेति । अत्र लोके अमुना सुखसाधनतया अनुकूलेन अनुकूलयितव्यः कः स्यात् न कोऽपि स्यात् आत्मातिरिक्तस्य भोक्तुरभावादित्यर्थः । ननु स्वयमेवानुकूलयितव्यः स्यात् इत्यत आह नैकस्मिन्निति । एकस्यैवात्मनो युगपदुपकार्य्यत्वमुपकारकत्वञ्चेति धर्मद्वयं विरुद्धमित्यर्थः ॥२२॥

ननु अन्नादिवत् सुखसाधनत्वाभावेऽपि सुखवत् भोक्तृशेषतादि स्यात् इत्याशङ्क्य आत्मनो निरतिशयप्रेमास्पदत्वात् नैवमिति परिहरति सुखेति । वैषयिके विषयजन्ये सुखे प्रीतिमात्रं प्रीतिरेव न निरतिशया आत्मा तु अतिप्रियः निरतिशयप्रेमविषयः अतो न विषयजन्यसुखवदित्यर्थः । तयोरुभयोरुपपत्तिमाह सुखे व्यभिचरतीति । सुखे वैषयिके सुखे जायमाना एषा प्रीतिर्व्यभिचरति कदाचित् सुखान्तरं गच्छति न तस्मिन्नेव नियतावतिष्ठते आत्मनि तु विद्यमाना प्रीतिर्न व्यभिचारिणी विषयान्तरगामिनी न भवति अतो निरतिशया सा इत्यर्थः ॥ २३ ॥

एकं त्यक्त्वान्यदादत्ते सुखं वैषयिकं सदा ।
नात्मा त्याज्यो न चादेयस्तस्मिन् व्यभिचरेत् कथम् ॥२४॥
हानादानविहीनेऽस्मिन्नुपेक्षा चेत् तृणादिवत् ।
उपेक्षितुः स्वरूपत्वान्नोपेक्ष्यत्वं निजात्मनः ॥ २५ ॥
रागक्रोधाभिभूतानां मुमूर्षा वीक्ष्यते क्वचित् ।
ततो द्वेषाद्भवेत्त्याज्य आत्मेति यदि तन्न हि ।
त्यक्तुं योग्यस्य देहस्य नात्मता त्यक्तुरेव सा ।
न त्यक्तर्यस्ति स द्वेषस्त्याज्ये द्वेषे तु का क्षतिः ॥२६॥

---

सुखगोचरायाः प्रीतेर्व्यभिचारं दर्शयति एकमिति । आत्मनि तदभावं दर्शयति नात्मेति । अयोग्यत्वादित्यर्थः । फलितमाह तस्मिन्निति ॥ २४ ॥

हानादिविषयत्वाभावेऽप्यात्मनः तृणादिवत् उपेक्षाविषयत्वं स्यादिति शङ्कते हानेति । हानं परित्यागः । आदानं स्वीकारः । उपेक्षा औदासीन्यम् । आत्मनो हानाद्यविषयत्ववत् उपेक्षाविषयत्वमपि न सम्भवति अयोग्यत्वादित्यभिप्रायेण परिहरति उपेक्षितुरिति । उपेक्षितुः उपेक्षाकर्तुर्यो निजात्मा अविनाशस्वरूपोऽस्ति तस्य स्वरूपत्वात् स्वस्वरूपत्व इव स्वव्यतिरिक्ततृणादिवत् नोपेक्ष्यत्वम् उपेक्षाविषयत्वं न विद्यत इति शेषः ॥ २५ ॥

ननु हानविषयत्वमात्मनो नास्तीत्युक्तमनुपपन्नं द्वेषात्त्याज्यत्वदर्शनादिति शङ्कते रागेति । यतो मुमूर्षा दृश्यते अत आत्मनि द्वेषसम्भवाद् वृश्चिकादिवदात्मापि त्याज्य इति यद्युच्यते इति शेषः । तत्त्यागस्यात्मव्यतिरिक्तदेहविषयत्वान्नैवमिति परिहरति तत इति । त्यक्तुमुद्युक्तं योग्यस्योचितस्य देहस्यात्मता नास्ति । कस्य तर्हि सा इत्यत आह त्यक्तुरिति । त्यक्तुर्देहत्यागकारिणो देहातिरिक्तस्य जीवस्य आत्मता

आत्मार्थत्वेन सर्वस्य प्रीतेश्चात्मा ह्यतिप्रियः ।
यथा पितुः पुत्रमित्रात् पुत्रः प्रियतरस्तथा ॥ २७ ॥
मा न भूवमहं किन्तु भूयासं सर्वदेत्यसौ ।
आशीः सर्वस्य दृष्टेति प्रत्यक्षा प्रीतिरात्मनि ॥ २८ ॥
इत्यादिभिस्त्रिभिः प्रीतौ सिद्धायामेवमात्मनि ।
पुत्रभार्य्यादिशेषत्वमात्मनः कैश्चिदीरितम् ॥ २९ ॥

---

इत्यर्थः । भवतु त्यक्तुरात्मत्वं प्रकृते किमायातमित्यत आह न त्यक्तुरिति । अतो नात्मनस्त्यज्यत्वमित्यभिप्रायः । मा भूदात्मनि द्वेषो देहे तूपलभ्यत एव इत्याशङ्क्याह त्याज्य इति । त्याज्ये देहगोचरे द्वेषे सत्यपि का क्षतिरात्मनस्त्यागाभाववादिनो ममेति शेषः ॥ २६ ॥

तदेवं न वा अरे पत्युः कामायेत्यारभ्य आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यन्तायाः श्रुतेस्तात्पर्य्यपर्य्यालोचनया आत्मनः प्रियतमत्वं प्रदर्श्य युक्तितोऽपि तद्दर्शयति आत्मेति । सर्वस्य सुखसहिततत्साधन-जातस्य पुत्रभार्यादेरात्मार्थत्वेन स्वस्योपकारकत्वेन प्रीतेश्च प्रियत्वादपि आत्मा उपकार्य्यः स्वयमतिशयेन प्रियः सिद्धो हीत्यर्थः । तदेव दृष्टान्त-प्रदर्शनेन स्पष्टयति यथेति । लोके यथा पुत्रमित्रात् पुत्रस्य मित्रभूतात् पुत्रद्वारा प्रीतिविषययज्ञदत्तादेः सकाशात् पुत्रो देवदत्तादिरव्यवधानेन प्रीतिविषयत्वात् अतिशयेन प्रियो भवति पितुर्विष्णुमित्रादेस्तथा तद्वत् स्वसम्बन्धित्वेव प्रीतिविषयात् सर्वस्मात् स्वयमतिशयेन प्रिय इत्यर्थः ॥ २७ ॥

एवमात्मनि श्रुतियुक्तिभ्याम् उपपादितां निरतिशयां प्रीतिमनुभव-दर्शनेन द्रढयति मा न भूवमिति । अहं मा न भूवमिति न कापि ममा-सत्त्वमस्तु किन्तु सर्वदैव भूयासं सदा मम सत्त्वमस्तु इत्येवंरूपा आशीः प्रार्थना सर्वस्य प्राणिजातस्य सम्बन्धिनी दृष्टा सर्वोऽप्येवमेव प्रार्थयते इत्यर्थः । फलितमाह प्रत्यक्षेति । यतः एवं सर्वैः प्रार्थ्यते अत आत्मनि निरतिशया प्रीतिः प्रत्यक्षसिद्धा इत्यर्थः ॥ २८ ॥

एतद् विवक्षया पुत्रे मुख्यात्मत्वं श्रुतीरितम् ।
आत्मा वै पुत्रनामेति तच्चोपनिषदि स्फुटम् ॥ ३० ॥
सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते ।
अथास्येतर आत्मायं कृतकृत्यः प्रमीयते ॥ ३१ ॥
सत्यप्यात्मनि लोकोऽस्ति नापुत्रस्यात एव हि ।
अनुशिष्टं पुत्रमेव लोक्यमाहुर्मनीषिणः ॥ ३२ ॥

---

इत्यनुकीर्त्तनपुरःसरं मतान्तरं दूषयितुमनुभाषते इत्यादिभि-रिति । इतिशब्देनानुभवः परामृश्यते आदिशब्देन युक्तिश्रुती इत्यादि-भिरनुभवश्रुतियुक्तिसहायैस्त्रिभिः प्रमाणैरेवमुक्तेन प्रकारेणात्मनि प्रीतौ सिद्धायामपि केचित् श्रुत्यादितात्पर्यानभिज्ञा आत्मनः पुत्रभार्यादिशेषत्वं पुत्रादीन् प्रति शेषोपसर्ज्जनत्वमीरितमभिहितम् ॥ २९ ॥

इदं कुतोऽवगतमित्यत आह एतदिति । एतद्विवक्षया केचिदीर्यंते इत्यनेनाभिव्यक्तीकरणाभिप्रायेण आत्मा वै पुत्रनामासीत्यादिकया श्रुत्या पुत्रस्य मुख्यात्मत्वमीरितमित्यर्थः । किञ्च तत् पुत्रस्य मुख्यात्मत्वमुप-निषदि ऐतरेयोपनिषदादौ स्फुटं व्यक्तम् अभिहितमिति शेषः ॥ ३० ॥

येन वाक्येन इत्याकाङ्क्षायां तद्वाक्यमर्थतः पठति । सोऽस्येति । अस्य पितुः अपुत्रस्येह वा अयमादितो गर्भो भवतीति प्रकरणादौ पुरुषे देहे गर्भत्वेनोक्तः अयं सोऽस्य एव कुमारं जन्मनोऽग्रेऽधिभावयति इत्यनेनाभिहितेन भावनीयतयोक्तः पुत्ररूप आत्मा पुण्येभ्यः कर्मभ्यः पुण्यकर्मानुष्ठानाय प्रतिधीयते प्रतिनिधित्वेनावस्थाप्यते पित्रेति शेषः । अथानन्तरमस्य पितुरयं प्रत्यक्षेण परिदृश्यमान इतरः पुत्रादन्यो अपरो यः पितृरूप आत्मा अयं कृतकृत्यः अनुष्ठितकर्त्तव्यतः वयः प्रमीयते म्रियत इत्यर्थः ॥ ३१ ॥

उक्तस्यार्थस्य दृढीकरणाय पुत्ररहितस्य परलोकाभावप्रदर्शनपरस्य

मनुष्यलोको जय्यः स्यात् पुत्रेणैवेतरेण नो ।
मुमूर्षुर्मन्त्रयेत् पुत्रं त्वं ब्रह्मेत्यादिमन्त्रकैः ॥ २३ ॥
इत्यादिश्रुतयः प्राहुः पुत्रभार्य्यादिशेषिताम् ।
लौकिका अपि पुत्रस्य प्राधान्यमनुमन्वते ॥ २४ ॥
स्वस्मिन् मृतेऽपि पुत्रादिर्जीवेद् वित्तादिना यथा ।
तथैव यत्नं कुरुते मुख्याः पुत्रादयस्ततः ॥ २५ ॥

---

नापुत्रस्य लोकोऽस्तीति वाक्यस्यार्थमाह सत्यपीति । यतः पुत्रस्य सुत-मात्रत्वमस्ति अत एवात्मनि अस्मिन् सत्यपि स्थितेऽपि अपुत्रस्य पुत्र-रहितस्य पितृलोकः परलोको नास्ति हि इदं पुराणादिषु प्रसिद्ध-मित्यर्थः । व्यतिरेकमुखेनोक्तस्यार्थस्यान्वयमुखेन प्रतिपादकस्य अमुमिदं लोकमभाष्ठुरिति वाक्यार्थमाह अमुमिदमिति । मनीषिणः शास्त्रार्था-भिज्ञा अमुमिदं लोकमावेशं ब्रह्मेत्यादिभिर्मन्त्रैः शिक्षितमेव पुत्रं लोक्यं लोकाय हितं परलोकसाधनमाहुरित्यर्थः ॥ २२ ॥

इदानीम् ऐहिकफलस्यापि पुत्रैकसाध्यत्वप्रतिपादनपरं सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणेति श्रुतिवाक्यमर्थतः पठति मनुष्येति । मनुष्यलोकरूपं पुत्रेणैव जय्यं स्यात् वश्यादृश्यं स्यात् इतरेण कर्मादिना साधनान्तरेण नो नैव भवति पुत्ररहितस्य तत्साधनमपि धनादिकं निर्वेदजनकं भवतीति भावः । अमुमिदं पुत्रमेव लोक्य-मित्यत्र पुत्रादिसाधनमुक्तम् इदानीं तत्साधनं तन्मन्त्रांश्च दर्शयति मुमू-र्षुरिति । आदिशब्देन त्वं यज्ञस्त्वं लोक इति मन्त्रौ गृह्येते एभिस्त्वं ब्रह्मेत्यादिभिस्त्रिभिर्मन्त्रैर्मुमूर्षुः पिता मरणावसरे पुत्रं मन्त्रयेत् पुत्र-स्यानुशासनं कुर्यादित्यर्थः ॥ २३ ॥

उक्तमर्थं निगमयति इत्यादीति । न केवलमयं श्रुतिसिद्धोऽर्थः किन्तु लोकप्रसिद्धोऽपीत्याह लौकिका इति ॥ २४ ॥

तदेवोपपादयति स्वस्मिन्निति । स्वस्मिन् पित्रादौ । पुत्रादिशब्देन

वाङ्मेतावता नात्मा प्रेयो भवति कस्य चित् ।
गौणमिथ्यामुख्यभेदैरात्मायं भवति त्रिधा ॥ २६ ॥
देवदत्तस्तु सिंहोऽयमित्यैक्यं गौणमेतयोः ।
भेदस्य भासमानत्वात् पुत्रादेरात्मता तथा ॥ २७ ॥
भेदोऽस्ति पञ्चकोषेषु साक्षिणो न तु भात्यसौ ।
मिथ्यात्मतातः कोषाणां स्थाणोश्चौरात्मता यथा ॥ २८ ॥

---

भार्यादयो गृह्यन्ते । द्वितीयेन क्षेत्रादयः । प्रतिवचनमाह मुख्या इति । तस्मात् आत्मप्रयासं योऽपि पुत्रादिपोषणोद्यमं कस्मात्करोति तत्सम्बन्धात् पुत्रादयो मुख्याः प्रधानभूता इत्यर्थः ॥ २५ ॥

एवं वेदलोकप्रसिद्धिभ्यां दर्शितं पुत्रादिप्राधान्यमङ्गीकरोति वाङ्-मिति । तस्यात्मनः प्रेयस्त्वोपपादनं व्याकुर्वन्निदमाह एतावतेति । एतावता कश्चित् पुत्रादेः प्राधान्यमस्त्वेतावता । न हि प्रतियोगिनात्मे-कार्यविविधादिरिव्यायमस्ति यत्र यत्र व्यवहारे यस्य यस्यात्मत्वं विवक्ष्यते तत्र तत्रात्मनस्तत्र तत्र प्राधान्यदर्शनार्थमपोद्धृतात्वेनात्मत्रैविध्यमाह गौणेति । गौणात्मा मिथ्यात्मा मुख्यात्मा च त्रिविधो भवति ॥ २६ ॥

तत्र पुत्रादेर्गौणात्मत्वप्रदर्शनाय लोके गौणप्रयोगमुदाहरति देव-दत्त इति । अयं देवदत्तः सिंह इति यद्देवदत्तसिंहयोरैक्यं तद्गौणमौप-चारिकम् । तत्र हेतुमाह एतयोरिति । दार्ष्टान्तिके योजयति पुत्रादेरिति ॥ २७ ॥

अनन्तरं मिथ्यात्मानं दर्शयति भेदोऽस्तीति । पञ्चकोषेष्वानन्द-मयाद्यन्नमयान्तेषु पञ्च कोषेषु साक्षिणः सकाशात् विद्यमानोऽपि भेदो नावभासते अतः कोषाणां मिथ्यात्मत्वमित्यर्थः । मिथ्यात्मत्वे दृष्टान्त-माह स्थाणोरिति । चक्षुषश्चौराद्भीतस्य स्थाणोश्चौरत्वरूपत्वं यथा मिथ्या तद्वदित्यर्थः ॥ २८ ॥

न भाति भेदो नाप्यस्ति साक्षिणोऽप्रतियोगिनः ।
सर्वान्तरत्वात् तस्यैव मुख्यमात्मत्वमिष्यते ॥ ३९ ॥
सत्येवं व्यवहारेषु येषु यस्यात्मतोचिता ।
तेषु तस्यैव शेषित्वं सर्वस्यान्यस्य शेषता ॥ ४० ॥
मुमूर्षोर्गृहदाहादौ गौणात्मैवोपयुज्यते ।
न मुख्यात्मा न मिथ्यात्मा पुत्रः शेषीभवत्यतः ॥ ४१ ॥

---

एवं गौणमिथ्यात्मनावुपपाद्य तदानीं साक्षिणो मुख्यात्मत्वमुपपादयति न भातीति । साक्षिणः साक्षिरूपस्यात्मनो गौणात्मनः पुत्रादेरिव स्वस्मादपि भेदो न भाति मिथ्यात्मनो देहादेरिव भेदो नास्त्यपि । तत्रोभयत्र हेतुरप्रतियोगिन इति । भेदगर्भितं विशेषणमप्रतियोगित्वात् यथा पुत्रादेर्देहादेरपि स्वयं प्रतियोगी विद्यते नैवं साक्षी वस्तुनो वस्तुभूतः कश्चित् प्रतियोग्यस्ति देहादेः सर्वस्यारोपितत्वादिति भावः । ननु भेदाभावेन साक्षिणो गौणात्मत्वं मा भूत् मुख्यात्मत्वं कुत इत्यत आह सर्वान्तरेति । सर्वस्माद्देहपुत्रादेरान्तरत्वात् सर्वसाक्षिणः प्रतीचः सर्वान्तरत्वेन प्रतीयमानत्वात् तस्यैव साक्षिण एवात्मत्वं मुख्यमनौपचारिकमिष्यते अभ्युपगम्यत इत्यर्थः । अत्रेदमनुमानं विमतः साक्षी मुख्य आत्मा भवितुमर्हति सर्वान्तरत्वात् यो मुख्य आत्मा न भवति स सर्वान्तरोऽपि न भवति यथा पुत्रादिरिति केवलव्यतिरेकी ॥ ३९ ॥

भवतु आत्मत्रैविध्यं पुत्रादेः शेषित्वाभिधाने किमायातमित्यत आह सत्येवमिति । एवमात्मत्रैविध्ये सति येषु लौकिकवैदिकव्यवहारेषु पालन-पोषणमुक्तात्मानुसन्धानादिषु व्यवहारविशेषेषु यस्य पुत्रादेर्देहादेः साक्षिणो वा तादात्म्यमुचितं भवति तेषु तस्य पुत्रादेर्देहादेः साक्षिणो वा शेषित्वं प्रधानत्वम् अन्यस्य तद्व्यतिरिक्तस्य सर्वस्य शेषता उपकरणत्वं भवतीति शेषः ॥ ४० ॥

एतदेव प्रपञ्चयति मुमूर्षोरित्यादिना श्लोकद्वयेन । मुमूर्षोर्मर्तुं

अध्येता वह्निरित्यत्र सन्नप्यग्निर्न गृह्यते ।
अयोग्यत्वेन योग्यत्वात् वटुरेवात्र गृह्यते ॥ ४२ ॥
कृशोऽहं पुष्टिमाप्स्यामीत्यादौ देहात्मतोचिता ।
न पुत्रं विनियुङ्क्तेऽत्र पुष्टिहेतुत्वभक्षणे ॥ ४३ ॥
तपसा स्वर्गमेष्यामीत्यादौ कर्त्रात्मतोचिता ।
अनपेक्ष्य वपुर्भोगं चरेत् कृच्छ्रादिकं ततः ॥ ४४ ॥

---

यज्ञादौ कर्मविशेषे गौणात्मैव पुत्रभार्य्यादिरूप एवोपयुज्यते उपयुक्तो भवति उत्तरत्र जिजीविषुत्वात् इत्यर्थः। मुख्यात्मा साक्षी नोपयुज्यते अविकारित्वात् नापि मिथ्यात्मा तस्य मरणोन्मुखत्वादित्यर्थः। फलित-माह पुत्र इति। स्पष्टम् ॥ ४१ ॥

उक्ते व्यवहारादिव्यवहारे सत्यपि स्वस्मिन् पुत्रादिस्वीकारे दृष्टान्त-माह अध्येता इति। अयम् अध्येता वह्निरित्यस्मिन् प्रयोगे स्वरूपेण विद्यमानोऽप्यग्निर्नाग्निपदार्थत्वेन गृह्यते तस्याध्येतृत्वायोगात् किन्तु अध्येतृत्वयोग्यो वटुर्माणवक एवास्मिन् प्रयोगे अग्निपदार्थत्वेन गृह्यते योग्यत्वादित्यर्थः ॥ ४२ ॥

एवं गौणात्मप्राधान्यव्यवहारमुदाहृत्य मिथ्यात्मप्राधान्यव्यवहारमुदाहरति कृशोऽहमिति। अहं कृशो जातः स्वभक्षणादिना पुष्टिः सम्पादयिष्यामीत्यादिलौकिकव्यवहारे भक्षणयोग्यस्य देहस्यैवात्मत्वं ग्रहीतुमुचितम्। तद्भक्षणं लोकव्यवहारप्रदर्शनेन दृढयति न पुत्र-मिति ॥ ४३ ॥

किञ्च तपसेति। यदा तु तपः कृत्वा स्वर्गं गमिष्यामीत्यादि-व्यवहारं करोति तदा कर्तृत्वाभिमानवतः एवात्मत्वमुचितं न देहादेरित्यर्थः। एतदेवोपपादयति अनपेक्ष्येति। अतो न देहात्म-

मोक्षेऽहमित्यत्र युक्तं चिदात्मत्वं तदा पुमान्।
तद्वेत्ति गुरुशास्त्राभ्यां न तु किञ्चित् चिकीर्षति ॥४५॥
विप्रक्षत्रादयो यद्वत् बृहस्पतिसवादिषु।
व्यवस्थितास्तथा गौणमिथ्यामुख्या यथोचितम् ॥ ४६ ॥
तत्र तत्रोचिते प्रीतिरात्मन्येवातिशायिनी।
अनात्मनि तु तच्छेषे प्रीतिरन्यत्र नोभयम् ॥ ४७ ॥

---

व्यवहारितं ततो देहभोगपरित्यागपूर्वकं कर्तृरूपकारकं कृच्छ्रचान्द्रायणादिकं चरतीत्यर्थः ॥ ४४ ॥

किञ्च मोक्षेऽहमिति। यदा पुमान् शमादीन् सम्पाद्य मुक्तिं प्राप्स्यामीति मतिं करोति तदा गुरुशास्त्राभ्याम् आचार्योपदेशवाक्यार्थविचारजन्यापरोक्षज्ञानेन नाहं कर्ता आत्मा सच्चिदानन्दरूपब्रह्मास्मीति चिदात्मानमवगच्छति तस्य चिदात्मत्वमेवोचितं न तु तत्र कर्त्राद्यात्मत्वमित्यर्थः ॥ ४५ ॥

उदाहृतानां त्रिविधानामात्मनां व्यवहारविशेषेषु व्यवस्थया प्राधान्ये दृष्टान्तमाह विप्रेति। यथा ब्राह्मणो बृहस्पतिसवेन यजेत इत्यत्र ब्राह्मणस्यैवाधिकारो न क्षत्रियवैश्ययोः राजा राजसूयेन इत्यत्र राज्ञ एवाधिकारो न ब्राह्मणवैश्ययोः वैश्यो वैश्यस्तोमेन यजेत इत्यत्र वैश्यस्याधिकारो नेतरयोः एवं गौणमिथ्यामुख्यभेदानाम् आत्मना यथायथं उचितव्यवहारेषु प्राधान्यमिति भावः ॥ ४६ ॥

तत्र तत्रेति। यस्मिन् यस्मिन् व्यवहारे यो य आत्मा उचितो भवति तस्मिन् तस्मिन् व्यवहारे उचिते उपयोगितया प्रधानभूते आत्मन्येव प्रीतिरतिशायिनी अतिशयवती तच्छेषे तस्यात्मनः शेषे शेषभूतेऽनात्मनि आत्मव्यतिरिक्ते वस्तुनि प्रीतिमात्रं न निरतिशयं प्रेम इत्यर्थः। अन्यत्र आत्मतच्छेषाभ्यामन्यस्मिन् वस्तुनि नोभयम् उभयविधमपि प्रेम नास्तीत्यर्थः ॥ ४७ ॥

उपेक्ष्यं द्वेष्यमित्यन्यत् द्वेधा मार्गतृणादिकम् ।
उपेक्ष्यं व्याघ्रसर्पादि द्वेष्यमेवं चतुर्विधम् ॥ ४८ ॥
आत्मा प्रेष्ठ उपेक्ष्यश्च द्वेष्यश्चेति चतुर्ष्वपि ।
न व्यक्तिनियमः किन्तु तत्तत्कार्य्यात् तथा तथा ॥ ४९ ॥
स्याद् व्याघ्रः संमुखो द्वेष्यो ह्युपेक्ष्यस्तु पराङ्मुखः ।
लालनादनुकूलश्चेद् विनोदायेति प्रेष्ठताम् ॥ ५० ॥
व्यक्तीनां नियमो मा भूल्लक्षणात्तु व्यवस्थितिः ।

---

अन्यत् नोभयमित्युक्ताभिहितप्रेष्ठान्यवस्त्वर्थस्यावान्तरभेदमाह उपेक्ष्यमिति । अन्यदित्युक्तमात्मान्यं वस्तु उपेक्ष्यम् उपेक्षाविषयः द्वेष्यं द्वेषविषयश्चेति द्विधा द्विप्रकारं भवति । तदुभयमुदाहरति मार्गेति । मार्गगत तृणलोष्टादिकमुपेक्ष्यं स्वस्योपद्रवहेतुव्याघ्रादिकं द्वेष्यमित्यर्थः । फलितमाह एवमिति ॥ ४८ ॥

चातुर्विध्यमेव दर्शयति आत्मेति । नन्वात्मादीनां चतुर्णामात्म-प्रियतमत्वादिकं किं नियतं नेत्याह चतुर्ष्विति । अयमेव प्रियतमः अयमेव प्रियः इदमेव उपेक्ष्यमिदमेव द्वेष्यं नान्यदिति नियमो नास्तीत्यर्थः । किं तर्हि तत्र आह किन्त्विति । तस्मात् तस्मात् कार्यविशेषादुपकारादिरूपात् तथा तथा प्रियाप्रियादिरूपेणेत्यर्थः ॥ ४९ ॥

एवं व्यक्त्यनियमप्रयोजनाय प्रसिद्धद्वेष्ये व्याघ्रे तदभावं दर्शयति स्यादिति । यदा व्याघ्रः स्वभक्षणाय सम्मुखमागच्छति तदा द्वेष्यो भवति । स एव पराङ्मुखो गच्छति चेत् उपेक्ष्यो भवति । स एव यदि लालनात् अनुकूलो भवति तदा विनोदायेति विनोदसाधनं भवतीति प्रेष्ठतां स्वोपकारकत्वेन प्रियत्वं भजते इत्यभिप्रायः ॥ ५० ॥

नन्वेवमेव वस्तुनः प्रियत्वादिधर्मव्यवस्थाभावे व्यवहारव्यवस्था न स्यादित्याशङ्क्याह व्यक्तीनामिति । व्यक्तिनियमाभावेऽपि लक्षणवशात्

आनुकूल्यं प्रातिकूल्यं द्वयाभावश्च लक्षणम् ॥ ५१ ॥
आत्मा प्रेयान् प्रियः शेषो द्वेष्योपेक्ष्ये तदन्ययोः ।
इति व्यवस्थितौ लोको याज्ञवल्क्यमतञ्च तत् ॥ ५२ ॥
अन्यत्रापि श्रुतिः प्राह पुत्राद् वित्तात् तथान्यतः ।
सर्वस्मादान्तरं तत्त्वं तदेतत् प्रेय इष्यताम् ॥ ५३ ॥
श्रौत्या विचारदृष्ट्यायं साक्ष्येवात्मा न चेतरः ।

---

व्यवस्था भविष्यतीत्यर्थः । किं लक्षणमित्याकाङ्क्षायां तल्लक्षणमाह आनुकूल्यमिति । अनुकूलत्वं प्रियत्वस्य लक्षणं व्यावर्त्तको धर्मः प्रतिकूलत्वं द्वेष्यलक्षणम् उपेक्ष्यस्यानुकूल्यप्रातिकूल्यरूपद्वयाभावश्च लक्षणमित्यर्थः ॥ ५१ ॥

एतावता प्रबन्धसन्दर्भेण उपपादितमर्थं बुद्धिसौकर्याय संक्षिप्य दर्शयति आत्मेति । आत्मा प्रत्यगानन्दः प्रेयानतिशयेन प्रियः शेषः स्वोपसर्जनभूतः पदार्थः प्रियः तदन्ययोस्ताभ्यामात्मनस्तच्छेषाच्चान्ययो-र्व्याघ्रादितृणादिरूपयोर्द्वेष्योपेक्ष्ये यथाक्रमं भवत इत्यर्थः । एवं चातुर्विध्येन लोको व्यवस्थितः अवस्थां प्राप्तः उक्तप्रकारचतुष्टयातिरिक्तं न किञ्चिदस्तीत्यभिप्रायः । अयमर्थः श्रुत्यभिमतोऽपीत्याह याज्ञवल्क्येति । आत्मादीनां प्रियतमत्वादिकं यत्तद् याज्ञवल्क्यमतं याज्ञवल्क्यस्यापि सम्मतमित्यर्थः ॥ ५२ ॥

न केवलं मैत्रेयीब्राह्मण एवात्मनः प्रियतमत्वमुक्तं किन्तु पुरुषविधब्राह्मणेऽपीत्यभिप्रायेण तद्वाक्यार्थं संगृह्णाति अन्यत्रापीति । तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मेति अनेनैव वाक्येनैव वाक्येन पुत्रवित्तादेः सर्वस्मादान्तरस्यात्मतत्त्वस्य प्रियतमत्वमीरितमित्यर्थः ॥ ५३ ॥

अथाप्येवं श्रुत्याभिधानं प्रकृते विचारातिशयमाह श्रौत्या

कोशान् पञ्च विविच्यान्तर्वस्तुदृष्टिर्विचारणा ॥ ५४ ॥
जागरस्वप्नसुप्तीनामागमापायभासनम् ।
यतो भवत्यसावात्मा स्वप्रकाशचिदात्मकः ॥ ५५ ॥
शेषाः प्राणादिवित्तान्ता आसन्नास्तारतम्यतः ।
प्रीतिस्तथा तारतम्यात् तेषु सर्वेषु वीक्ष्यते ॥ ५६ ॥
वित्तात् पुत्रः प्रियः पुत्रात् पिण्डः पिण्डात् तथेन्द्रियम् ।
इन्द्रियाच्च प्रियः प्राणः प्राणादात्मा परः प्रियः ॥ ५७ ॥

---

विचारेणेति । श्रुत्यर्थपर्यालोचनरूपया विचारदृष्ट्या साक्षिण एव मुख्यात्मत्वं नेतरस्य पुत्रादेरित्यर्थः । विचारदृष्टेत्यभिहितस्य विचारस्य स्वरूपमाह कोशानिति । अन्नमयादीन् पञ्च कोशान् विविच्य तैत्तिरीयश्रुत्युक्तप्रकारेण आत्मनः पृथक् कृत्वान्तःस्थितस्यात्मनोऽनुभवो विचारणेत्यर्थः ॥ ५४ ॥

अन्तःस्थितस्य वस्तुनो दर्शनप्रकारमाह जागरेत्यादिना । जाग्रदाद्यवस्थानां मध्ये उत्तरोत्तरावस्थां गतस्य पूर्वपूर्वावस्थानिवृत्तेरवभासनं यतो नित्यचैतन्यरूपात् साक्षिणो भवति स स्वप्रकाशचिद्रूप आत्मेत्यर्थः ॥ ५५ ॥

सापेक्षमात्मत्वं स्फुटार्थं प्रपञ्चयति शेषा इति । साक्षिव्यतिरिक्ताः प्राणादिवित्तान्ता वक्ष्यमाणाः पदार्थाः तारतम्येनात्मन आसन्नाः सर्वोपकारिणो भवन्ति । तत्रोपपत्तिमाह प्रीतिरिति । यथा तारतम्येनान्तरत्वं तद्वदेव तेषु प्राणादिषु तारतम्यात् प्रीतिर्वीक्ष्यते सर्वैरपीति शेषः ॥ ५६ ॥

प्रीतेस्तारतम्येनानुभवमेव विशदयति वित्तादिति । पिण्डोऽन्नमयो देहः । अयं भावः सर्वैः प्राणिभिः पुत्रदेहपोषणपरिरक्षणाय वित्तव्ययः क्रियते स्वदेहरक्षणाय कदाचित् पुत्रादिरपि दीयते इन्द्रियनाश-

एवं स्थिते विवादोऽत्र प्रतिबुद्धविमूढयोः ।
श्रुत्योदाहारि तत्रात्मा प्रेयानित्येव निर्णयः ॥ ५८ ॥
साक्ष्येव दृश्यादन्यस्मात् प्रेयानित्याह तत्त्ववित् ।
प्रेयान् पुत्रादिरेवेमं भोक्तुं साक्षीति मूढधीः ॥ ५९ ॥
आत्मनोऽन्यं प्रियं ब्रूते शिष्यश्च प्रतिवाद्यपि ।
तस्योत्तरं वचो बोधशापौ कुर्य्यात् तयोः क्रमात् ॥ ६० ॥
प्रियं त्वां रोत्स्यतीत्येवमुत्तरं वक्ति तत्त्ववित् ।

---

परिहाराय ताडनादिना देहपीडाप्यङ्गीक्रियते मरणप्रसक्तौ तत्परिहाराय इन्द्रियवैकल्यमप्यङ्गीक्रियते अत एवोत्तरोत्तरमतिशयेन प्रियत्वमत्रानुभवसिद्धम् आत्मनस्तु निरतिशयप्रेमास्पदत्वं विद्वदनुभवसिद्धमिति ॥ ५७ ॥

एवमात्मनः प्रियतमत्वे प्रमाणसिद्धेऽपि । ज्ञान्यज्ञानिनोर्विप्रतिपत्तिनिरसनाय श्रुत्या तद्विप्रतिपत्तिर्दर्शिता इत्याह एवमिति । तत्त्वनिर्णयमाह तत्रात्मेति । आत्मनः प्रियतमत्वस्योपपादितत्वादित्यर्थः ॥ ५८ ॥

तामेव विप्रतिपत्तिमाह साक्ष्येवेति ॥ ५९ ॥

आत्मातिरिक्तस्य प्रियतमत्ववादिनो विभज्य उत्तराभिधानाय तमेव वादिनं विभज्य कथयति आत्मन इति । उत्तराभिधानप्रकारमेवाह तस्योत्तरमिति । तयोः शिष्यप्रतिवादिनोः सम्बन्धिनस्तस्य वचनस्योत्तरं वचः प्रत्युत्तररूपं वाक्यं क्रमेण बोधशापौ बोधरूपं शापरूपञ्च कुर्य्यादित्यर्थः ॥ ६० ॥

अनयोः प्रतिवचनप्रदानरूपं च योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यतीति वचनान्तरश्रुतिवाक्यमर्थतः पठति प्रियमिति । तत्त्ववित् शिष्यप्रतिवादिनावुभावपि प्रति हे शिष्य ! हे प्रतिवादिन् ! प्रियं

स्वोक्तप्रियस्य दुष्टत्वं शिष्यो वेत्ति विवेकतः ॥ ६१ ॥
अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम्।
लब्धोऽपि गर्भपातेन प्रसवेन च बाधते।
जातस्य ग्रहरोगादि कुमारस्य च मूर्खता।
उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते।
यूनश्च परदारादि दारिद्र्यञ्च कुटुम्बिनः।
पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा।
एवं विविच्य पुत्रादौ प्रीतिं त्यक्त्वा निजात्मनि।
निश्चित्य परमां प्रीतिं वीक्ष्यते तमहर्निशम्॥६२॥६३॥६४॥६५॥
आग्रहाद् ब्रह्मविद्द्वेषादपि पक्षमपश्यतः।

---

त्वदभिप्रेत पुत्रादिरूप स्वनाशेन त्वा शिष्यं प्रतिवादिनं वा रोत्स्यति रोदयिष्यति इत्येवमुक्तेन प्रकारेण उत्तरं प्रतिवचनं वक्ति ब्रवीति। इदमेवैकं वचनं शिष्यप्रतिवादिनोरुभयोः कथमुत्तरं जातमित्याशङ्क्य शिष्यं प्रत्युत्तरत्वमुपदेशरूपत्वं तावत् द्योतयति स्वोक्तप्रियस्येत्यादिना वीक्ष्यते तमहर्निशम् इत्यन्तेन सार्द्धश्लोकचतुष्टयेन। शिष्यः स्वोक्तप्रियस्य स्वेनाभिहितस्य पुत्रादिरूपस्य प्रीतिविषयस्य विवेकतः वक्ष्यमाणदोषविचारेण दुष्टत्वं वेत्ति अवगच्छति ॥ ६१ ॥

दोषविचारप्रकारं दर्शयति अलभ्येति एवम्। पुत्रगतदोषसंकीर्त्तनं दारादिसर्वविषयदोषोपलक्षणार्थम्। एवं विविच्येति। एवमुक्तेन प्रकारेण पुत्रादौ विषयजाते विवेच्य विद्यमानान् दोषान् विभज्य ज्ञात्वा तेषु प्रीतिं परित्यज्य निजात्मनि प्रत्यग्रूपे साक्षिणि परमां निरतिशयां प्रीतिं निश्चित्य तं प्रत्यगात्मानमहर्निशं सर्वदा वीक्ष्यते अनुसन्धत्त इत्यर्थः ॥ ६२ । ६३ । ६४ । ६५ ॥

अथ त्वा रोत्स्यतीत्यस्यैव वाक्यस्य प्रतिवादिनं प्रति शापरूपत्वं

वादिनो नरकः प्रोक्तो दोषश्च बहुयोनिषु ॥ ६६ ॥
ब्रह्मविद् ब्रह्मरूपत्वादीश्वरस्तेन वर्णितम् ।
यद् यत् तत्तत् तथैव स्यात् तच्छिष्यप्रतिवादिनोः ॥ ६७ ॥
यस्तु साचिणमात्मानं सेवते प्रियमुत्तमम् ।
तस्य प्रेयानसावात्मा न नश्यति कदाचन ॥ ६८ ॥

---

प्रकटयति आपहादिति । आपहादुक्तं पुत्त्रादिप्रियत्वं सर्वथा न त्यजामीत्येवरूपात् ब्रह्मविद् द्वेषात् अनेनोक्तं विघटयिष्यामीत्येवरूपाच्च पक्षं पुत्त्रादीनामेव प्रियत्वाभिधानरूपमपरित्यजतः प्रतिवादिनो नरकप्राप्तिः तथा बहुयोनिषु नरतिर्य्यगादिषु असंख्येषु अनेकेषु जन्मसु दोषः पुत्त्रभार्य्यादिषु इष्टवियोगानिष्टप्राप्तिरूपः प्रोक्तः प्रियं त्वा रोत्स्यतीति वदता ज्ञानिना इति शेषः ॥ ६६ ॥

ननु ज्ञानिनोक्तस्यैकस्यैव वाक्यस्य शिष्यं प्रत्युपदेशरूपत्वं वादिनं प्रति शापरूपत्वञ्चेति विरुद्धं रूपद्वयं कथं घटत इत्याशङ्क्य उत्तरप्रदातुरीश्वररूपत्वात् तस्याभिप्रायानुसारेण उभयं भविष्यतीति मन्वानस्तदुपपादकस्य ईश्वरोऽहं तथैव स्यात् इति समनन्तरवाक्यस्य तात्पर्य्यमाह ब्रह्मविदिति । यतो ब्रह्मविदः अस्य ब्रह्मत्वानुभवादीश्वरत्वमस्ति अतस्तेन यं यं शिष्यादिकं प्रति यद् यदिष्टमनिष्टं वाभिधीयते तच्छिष्यप्रतिवादिनोस्तस्य ज्ञानिनो यः शिष्यः यश्च प्रतिवादी तयोः तथैव स्यात् इष्टमनिष्टं वावश्यं भवेदित्यर्थः ॥ ६७ ॥

व्यतिरेकमुखेनोक्तस्यार्थस्यान्वयमुखेन प्रतिपादकम् आत्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवतीति समनन्तरं वाक्यमर्थतः पठति यस्त्विति । तत्र श्लोकैवाक्यव्याख्यातमार्थः । अनात्मप्रियवादिनोऽन्यो यः शिष्यः आत्मानमेवोत्तमं प्रियं निरतिशयप्रेमगोचरं सेवते सदानुस्मरति तस्य शिष्यादेः प्रेयान्

परप्रेमास्पदत्वेन परमानन्दरूपता ।
सुखवृद्धिः प्रीतिवृद्धौ सार्वभौमादिषु श्रुता ॥ ६९ ॥
चैतन्यवत् सुखं चास्य स्वभावश्चेच्चिदात्मनः ।
धीवृत्तिष्वनुवर्त्तेत सर्व्वास्वपि चितिर्यथा ॥ ७० ॥
मैवमुष्णप्रकाशात्मा दीपस्तस्य प्रभा गृहे ।
व्याप्नोति नोष्णता तद्वच्चितेरेवानुवर्त्तनम् ॥ ७१ ॥

---

प्रियतमत्वेनाभिमतोऽयमात्मा प्रतिवाद्यभिमतप्रियमिव न कदाचिद् विनश्यति किन्तु सदानन्दरूपः स्वस्वभावत इत्यर्थः ॥ ६८ ॥

इत्थमात्मनः परप्रेमास्पदत्वे हेतुं प्रसाध्य इदानीं फलितमाह परप्रेमास्पदत्वेनेति । अत्रायं प्रयोगः आत्मा परमानन्दरूपः निरतिशयप्रेमविषयत्वात् यः परमानन्दरूपो न भवति स निरतिशयप्रेमविषयोऽपि न भवति यथा घटादिरिति केवलव्यतिरेकी । परप्रेमास्पदहेतोरात्मनः परमानन्दरूपतासाधने सामर्थ्यद्योतनाय प्रीतिवृद्धौ सुखवृद्धिसद्भावमाह सुखवृद्धिरिति । यतः सार्वभौमादिहैरण्यगर्भान्तेषु पदविशेषेषु यत्र यत्र प्रीतिर्वर्द्धते तत्र तत्र सुखाभिवृद्धिरस्तीति तैत्तिरीयबृहदारण्यकश्रुत्योरभिहितम् अतः प्रीतेर्निरतिशयत्वे सति आनन्दस्यापि निरतिशयत्वमवगन्तुं शक्यत इति भावः ॥ ६९ ॥

नन्वात्मनः परमानन्दरूपत्वमनुपपन्नं तथात्वे चैतन्यस्येव तत्स्वरूपभूतस्यानन्दस्यापि सर्वासु धीवृत्तिषु अनुवृत्तिः प्रसज्येतेति शङ्कते चैतन्यवदिति ॥ ७० ॥

चिदानन्दयोरेकत्वेऽपि आत्मस्वरूपत्वेऽपि वृत्तिषु चित एवानुवृत्तिर्नानन्दस्येति दृष्टान्तप्रदर्शनेन परिहरति मैवमिति । यथोष्णप्रकाशात्मकस्य दीपस्य प्रकाश एव प्रभारूपेणानुगच्छति नोष्णता एवं चैतन्यस्यैवानुवृत्तिर्नानन्दस्य इत्यर्थः ॥ ७१ ॥

गन्धरूपरसस्पर्शेष्वपि सत्सु यथा पृथक् ।
एकाक्षेणैक एवार्थो गृह्यते नेतरस्तथा ॥ ७२ ॥
चिदानन्दौ नैव भिन्नौ गन्धाद्यास्तु विलक्षणाः ।
इति चेत् तदभेदोऽपि साक्षिण्यन्यत्र वा वद ॥ ७३ ॥
आद्ये गन्धादयोऽप्येवमभिन्नाः पुष्पवर्त्तिनः ।
अक्षभेदेन तद्भेदे वृत्तिभेदात् तयोर्भिदा ॥ ७४ ॥
सत्त्ववृत्तौ चित्सुखैक्यं तद्वृत्तेर्निर्मलत्वतः ।

---

ननु चिदानन्दयोरभेदे चिदभिव्यञ्जकधीवृत्तावानन्दाभिव्यक्तिरपि स्यादित्याशङ्क्य तथा नियमाभावे दृष्टान्तमाह गन्धेति । यथैकद्रव्यवर्त्तिनां गन्धादीनां चतुर्णां मध्ये घ्राणादिष्वेकेनेन्द्रियेण गन्धादिरेकैक एव गुणो गृह्यते नेतरः तथा चिदानन्दयोर्मध्ये चित एवावभासनमित्यर्थः ॥ ७२ ॥

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं शङ्कते चिदानन्दाविति । विलक्षणा भिन्ना इत्यर्थः । उक्तवैषम्यं परिहर्तुं दार्ष्टान्तिके चिदानन्दयोरभेदः किं स्वाभाविक उत औपाधिक इति विकल्पयति तदभेदोऽपीति । तदभेदस्तयोश्चिदानन्दयोरभेद ऐक्यं साक्षिण्यात्मस्वरूपे वान्यत्र एतदुपाधिभूतायां वृत्तौ वेत्यर्थः ॥ ७३ ॥

प्रथमे पक्षे दृष्टान्तदार्ष्टान्तिकयोः साम्यमाह आद्य इति । आद्ये चिदानन्दयोः साक्षिणि भेदाभावपक्षे पुष्पवर्त्तिनो गन्धादयोऽप्येवं चिदानन्दवदेवाभिन्नाः परस्परं भेदरहिताः इतरपरिहारेणैकस्यानेव-मग्राह्यत्वादिति भावः । द्वितीयेऽपि पक्षे साम्यमाह अक्षेति । अक्षाणां गन्धादिग्राहकाणां घ्राणादीन्द्रियाणां भेदेन तद्भेदे तेषां गन्धादीनां भेदाभ्युपगमे तद्वदेव वृत्तिभेदाच्चिदानन्दाभिव्यञ्जकानां राजससा-त्त्विकवृत्तीनां भेदात् तयोश्चिदानन्दयोर्भिदा भेदो भविष्यतीत्यर्थः ॥ ७४ ॥

ननु तर्हि चिदानन्दयोरैक्यं कुत्रोपलभ्यते इत्याशङ्क्याह सत्त्वेति ।

रजोवृत्तेस्तु मालिन्यात् सुखांशोऽत्र तिरस्कृतः ॥७५॥
तिन्तिडीफलमत्यम्लं लवणेन युतं यदा ।
तदाम्लस्य तिरस्कारादीषदम्लं यथा तथा ॥ ७६ ॥
ननु प्रियतमत्वेन परमानन्दतात्मनि ।
विवेक्तुं शक्यतामेवं विना योगेन किं भवेत् ॥ ७७ ॥
यद्योगेन तदेवेति वदामो ज्ञानसिद्धये ।
योगः प्रोक्तो विवेकेन ज्ञानं किं नोपजायते ॥ ७८ ॥

---

सत्त्ववृत्तौ शुभकर्मोपस्थापितायां सत्त्वगुणपरिणामरूपायां बुद्धिवृत्तौ चित्सुखैक्यं चिदानन्दैक्यं भासते इति शेषः । तत्रोपपत्तिमाह तद्वृत्तेरिति । कुतस्तर्हि भेदो भासते इत्यत आह रजोवृत्तेरिति ॥७५॥

विद्यमानस्यापि सुखस्य तिरस्कारे दृष्टान्तमाह तिन्तिडीफलमिति । यथा तिन्तिडीफले लवणयोगादत्यम्लत्वं तिरोहितं तद्वद्रजोवृत्त्याऽऽनन्दस्य तिरोभाव इत्यर्थः ॥ ७६ ॥

गूढाभिसन्धिः शङ्कते नन्विति । ननूक्तेन प्रकारेणात्मनः परमानन्दरूपत्वं परप्रेमास्पदत्वहेतुना गौणमिथ्यात्मरूपेभ्यः प्रियोपेक्ष्य-द्वेष्येभ्यो विवेक्तुं विविच्य ज्ञातुं शक्यतां नाम तथापि नायं विवेको मुक्तिसाधनम् अपरोक्षज्ञानद्वारा मुक्तिहेतोर्योगस्यानभिधानादिति गूढोऽभिसन्धिः ॥ ७७ ॥

गूढाभिसन्धिरेवोत्तरमाह यद्योगेनेति । यथा योगस्यापरोक्षज्ञान-हेतुत्वमस्ति एवं विवेकस्यापीत्यस्माकमपि गूढोऽभिसन्धिः । इदानीं चोद्य-परिहारयोरुभयोरभिसन्धिं प्रकटयति ज्ञानेति । यथापरोक्षज्ञान-साधनत्वेन योगोऽभिहितः पूर्वस्मिन्नध्याये तथा एतदध्यायाभिहितेन गौणाद्यात्मविवेकद्वारा चोपपन्नविवेकेनापि ज्ञानमुत्पद्यते एवेत्यर्थः ॥७८॥

यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
इति स्मृतं फलैकत्वं योगिनाञ्च विवेकिनाम् ॥ ७९ ॥
असाध्यः कस्यचिद् योगः कस्यचिज्ज्ञाननिश्चयः ।
इत्थं विचार्य्य मार्गौ द्वौ जगाद परमेश्वरः ॥ ८० ॥
योगे कोऽतिशयस्तेऽत्र ज्ञानमुक्तं समं द्वयोः ।
रागद्वेषाद्यभावश्च तुल्यो योगिविवेकिनोः ॥ ८१ ॥
न प्रीतिर्विषयेष्वस्ति प्रेयानात्मेति जानतः ।
कुतो रागः कुतो द्वेषः प्रातिकूल्यमपश्यतः ॥ ८२ ॥

---

तत्र किं प्रमाणमित्याशङ्क्याह यत् सांख्यैरिति । सांख्यैरात्मानात्मविवेकिभिर्यत् स्थानं मोक्षरूपं प्राप्यते गम्यते तद्योगैर्योगिभिरपि गम्यते प्राप्यते इति वचनेन योगिनां विवेकिनाञ्च फलैकत्वं ज्ञानद्वारा मोक्षलक्षणफलैकत्वमुक्तमित्यर्थः ॥ ७९ ॥

ननु विवेकयोगयोरेकमेव चेत् फलं तर्ह्यनयोरन्यतरस्यैव युक्तं शास्त्रेषु प्रतिपादनं नोभयोरित्याशङ्क्याधिकारिभेदमात्रात् युक्तमुभयोः प्रतिपादनमित्यभिप्रायेणाह असाध्य इति ॥ ८० ॥

नन्वसम्प्रज्ञातावस्थायां योगस्य निरोधावस्थत्वभावे विवेकादतिशयो वक्तव्य इत्याशङ्क्य कोऽतिशयः किम् अपरोक्षज्ञानजनकत्वादुच्यते उत रागद्वेषनिवृत्तिहेतुत्वात् अथवा द्वैतानुपलब्धिकारणत्वात् इति विकल्प्य प्रथमे पक्षे फलसाम्यमित्याह योगिकोऽतिशय इति द्वयोर्विवेकयोगयो-रुभयोरपि ज्ञानद्वारकं फलं समानं यत् सांख्यैरित्यादिना उक्तत्वात् योगे कोऽतिशयः न कोऽपीत्यर्थः । द्वितीयं प्रत्याह रागद्वेषेति ॥ ८१ ॥

विवेकिनो रागाद्यभावमुपपादयति न प्रीतिरिति । आत्मा प्रियतम इति जानतः पुरुषस्य न तावद् विषयेषु प्रीतिरस्ति अतो न तेषु

देहादेः प्रतिकूलेषु द्वेषस्तुल्योद्वयोरपि ।
द्वेषं कुर्वन्नयोगी चेदविवेक्यपि तादृशः ॥ ८३ ॥
द्वैतस्य प्रतिभानन्तु व्यवहारे द्वयोः समम् ।
समाधौ नेति चेत् तद्वदद्वैतत्वविवेकिनः ॥ ८४ ॥
विवक्ष्यते तदस्माभिरद्वैतानन्दनामके ।
अध्याये हि तृतीये तत् सर्व्वमप्यतिमङ्गलम् ॥ ८५ ॥

---

रागो जायते रागहेतोरानुकूल्यज्ञानस्याभावात् । नापि द्वेषः तद्धेतोः प्रातिकूल्यज्ञानस्याभावात् इत्यर्थः ॥ ८२ ॥

ननु विवेकिनो व्यवहारदशायां देहाद्युपद्रवकारिषु द्वेषो दृश्यते इत्याशङ्क्य तदा योगिविवेकिनोस्तुल्य इति परिहरति देहादेरिति । प्रतिकूलेषु हिंस्रकादिषु द्वेषकर्त्तुस्तदा योगित्वमेव नाभ्युपगम्यते चेत् तर्हि तादृशस्य विवेकित्वमपि नाभ्युपगच्छाम इत्याह द्वेषमिति । तादृशो द्वेषकर्त्ता चेदविवेक्यपि विवेकवानपि न भवतीत्यर्थः ॥ ८३ ॥

ननु विवेकिनो द्वैतदर्शनमस्ति योगिनस्तु तन्नास्तीति तृतीये विकल्पे योगिनोऽतिशयो भविष्यतीत्याशङ्क्य विवेकिनस्तु द्वैतदर्शनं किं व्यवहारदशायामुच्यते उतान्यदेति विकल्प्य आद्ये यद्व योगिनोऽपि समानमित्याह द्वैतस्येति । द्वितीयमाशङ्कते समाधाविति । योगिनः समाधिकाले द्वैतदर्शनं नास्तीत्युच्यते चेदित्यध्याहारः । तर्हि विवेकिनोऽपि विवेकदशायां द्वैतादर्शनं तुल्यमिति परिहरति तद्वदिति । योगिनः समाधिदशायामिवाद्वैततत्वविवेकिनोऽद्वैततत्वं श्रुतियुक्तिभ्यां विवेचनं कुर्वतोऽपि तस्मिन् काले द्वैतदर्शनं नास्तीत्यर्थः ॥ ८४ ॥

कथ तदभाव इत्याशङ्क्य उपरितनेऽध्याये तदुपपादयिष्यते इत्याह विवक्ष्यते इति । उक्तमर्थं निगमयति तत् सर्व्वमपीति ॥ ८५ ॥

सदा पश्यन् निजानन्दमपश्यन्नखिलं जगत्।
अर्थाद् योगीति चेत् तर्हि सन्तुष्टो वर्द्धतां भवान्॥८६॥
ब्रह्मानन्दाभिधे ग्रन्थे मन्दानुग्रहसिद्धये।
द्वितीयेऽध्याय एतस्मिन्नात्मानन्दो विवेचितः॥८७॥
इति ब्रह्मानन्दे आत्मानन्दः समाप्तः।

---

## त्रयोदशपरिच्छेदः।

---

### ब्रह्मानन्देऽद्वैतानन्दः।

योगानन्दः पुरोक्तो यः स आत्मानन्द इष्यताम्।
कथं ब्रह्मत्वमेतस्य सद्वयस्येति चेत् शृणु॥१॥

---

ननु द्वैतादर्शनपूर्व्वकात्मदर्शनवतो योगित्वमेव भविष्यतीति शङ्कते सदा पश्यन्निति। इष्टापत्त्या परिहरति तर्हीति॥८६॥

अध्यायतात्पर्य्यं संक्षिप्य दर्शयति ब्रह्मानन्देति॥८७॥

इति ब्रह्मानन्दे आत्मानन्दव्याख्या समाप्ता।

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ।
ब्रह्मानन्दाभिधे ग्रन्थेऽद्वैतानन्दो विविच्यते॥

ननु आनन्दस्त्रिविधो ब्रह्मानन्दो विद्यानन्दं तथा विषयानन्द इति प्रथमाध्याये आनन्दत्रयमेव प्रतिज्ञाय द्वितीयाध्याये तदतिरिक्तात्मानन्द·

आकाशादि स्वदेहान्तं तैत्तिरीयश्रुतीरितम्।
जगन्नास्त्यन्यदानन्दादद्वैतब्रह्मता ततः॥ २॥
आनन्दादेव तज्जातं तिष्ठत्यानन्द एव तत्।
आनन्द एव लीनं चेत्युक्तानन्दात् कथं पृथक्॥ ३॥
कुलालाद् घट उत्पन्नो भिन्नश्चेति न शङ्क्यताम्।

---

निरूपणात् तद्विरोधो जायत इत्याशङ्क्याह योगानन्द इति। यथा प्रतिज्ञातस्यैव ब्रह्मानन्दस्य योगजन्यसाक्षात्कारविषयत्वेन योगानन्दत्वं निरुपाधिकत्वेन निजानन्दत्वं च अवगतं तथा च तस्यैव गौणमिथ्यामुख्यात्मविवेचनेनावगम्यत्वविवक्षया आत्मानन्दत्वमभिहितमिति भावः। ननु सजातीयाद् गौणात्मनः पुत्रभार्यादेर्मिथ्यात्मनो देहादेर्विजातीयादाकाशादेश्च भिन्नस्य षष्ठयस्यात्मानन्दस्य प्रथमाध्यायोक्ताद्वितीययोगानन्दरूपता न सम्भवतीति शङ्कते कथमिति। सजातीयत्वेनाभिमतस्य गौणात्मनः पुत्रादेर्मिथ्यात्मनो देहादेश्च तैत्तिरीयश्रुत्यभिहितजगदन्तःपातित्वादाकाशादेश्च जगतः आत्मानन्दातिरेकेणासत्त्वाद्द्वितीयब्रह्मरूपता तस्य घटते इति सदृष्टान्तमुत्तरमाह द्वाभ्यामिति॥ १॥

आकाशादीति। तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यादिकया तैत्तिरीयश्रुत्या अभिहितं जगत् स्वकारणभूतादानन्दात् यतः पृथक् नास्ति अतस्तस्यात्मानन्दस्याद्वितीयत्वमित्यभिप्रायः॥ २॥

ननूदाहृतश्रुतिवाक्येनात्मनः कारणत्वं श्रूयते नानन्दस्येत्याशङ्क्य तत्प्रतिपादकं तदीयमेव आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इत्यादिवाक्यमर्थतः पठति आनन्दादिति। व्याख्यातम्। फलितमाह इत्युक्तेति। तत्रेदमनुमानं सूचितं विमतं जगदानन्दान्न भिद्यते तत्कार्यत्वात् यद् यत् कार्य्यं तत् ततो न भिद्यते यथा मृत्कार्य्यं घटादि मृदो न भिद्यते इति॥ ३॥

कुलालादुत्पन्नस्य घटस्य ततो भेददर्शनादनैकान्तिकता हेतोरित्या-

मृद्वदेष उपादानं न निमित्तं कुलालवत् ॥ ४ ॥
स्थितिर्लयश्च कुम्भस्य कुलाले स्तो न हि क्वचित्।
दृष्टौ तौ मृदि तद्वत् स्यादुपादानं तयोः श्रुतेः ॥ ५ ॥
उपादानं त्रिधा भिन्नं विवर्त्ति परिणामि च।
आरम्भकञ्च तत्रान्त्यौ न निरंशेऽवकाशिनौ ॥ ६ ॥
आरम्भवादिनोऽन्यस्मादन्यस्योत्पत्तिमूचिरे।

---

ननु कुलालस्य निमित्तकारणत्वात् दृष्टान्तस्योपादानत्वसमर्थनाक्षमत्व-मित्याह कुलालवदिति। एष आनन्दो मृद्वत् मृद्घटस्येव उपादानम् उपादानकारणम्। कुलालवत् कुलाल इव न निमित्तं निमित्तकारणं न भवतीति ॥ ४ ॥

ननु कुतो नोपादानत्वं कुलालस्यापि इत्याशङ्क्य स्थितिलयाधारत्व-रूपोपादानलक्षणाभावादित्याह स्थितिरिति। हि यस्मात् कारणात् घटस्य स्थितिलयौ कुलालाधारौ न भवतः अतो नोपादानत्वमिति शेषः। तत्र तर्हि तावित्यत आह दृष्टौ ताविति। घटस्य स्थितिलयौ तदुपा-दानभूतायां मृद्येव दृष्टौ प्रत्यक्षेणोपलब्धौ। भवत्वेवं तत्र प्रकृते किमा-यातमित्यत आह तद्वदिति। यद्वत् घटस्य मृदुपादानत्वं तद्वज्जगतोऽ-प्यानन्दोपादानत्वं स्यात्। तत्र हेतुः तयोः श्रुतेरिति। तयोर्जगत्-स्थितिलययोः श्रुतेः आनन्दाद्ध्येवेत्यादिवाक्ये आनन्दहेतुकत्वश्रवणादि-त्यर्थः ॥ ५ ॥

आनन्दस्य स्वाभिमतं जगदुपादानत्वं वक्तुं तदवान्तरभेदमाह उपादानमिति। तत्र विवर्त्तं परिशेषयितुम् इतरौ पक्षौ दूषयति तत्रेति। अन्त्यौ आरम्भपरिणामपक्षौ निरंशे निरवयवे वस्तुनि नाव-काशिनौ अवकाशवन्तौ न भवतः ॥ ६ ॥

तयोरनवकाशित्वमेव दर्शयितुं तावदारम्भवादिमतमनुवदति आर-

तन्तोः पटस्य निष्पत्तेर्भिन्नौ तन्तुपटौ खलु ॥ ७ ॥
अवस्थान्तरतापत्तिरेकस्य परिणामिता ।
स्यात् क्षीरं दधि मृत् कुम्भः सुवर्णं कुण्डलं यथा ॥ ८ ॥
अवस्थान्तरभानन्तु विवर्त्तो रज्जुसर्पवत् ।
निरंशेऽप्यस्त्यसौ व्योम्नि तलमालिन्यकल्पनात् ॥ ९ ॥
ततो निरंश आनन्दे विवर्त्तो जगदिष्यताम् ।

---

भ्येति । आरम्भवादिनो वैशेषिकादयः अन्यस्मात् कार्यापेक्षया अन्यस्मात् कारणादन्यस्य कारणापेक्षया अन्यस्य कार्यस्योत्पत्तिमूचिरे उक्तवन्तः । कुत एवं वदन्ति इत्यत्राह तन्तोरिति । निष्पत्तेरुत्पत्तेर्दर्शनादिति शेषः । एतावता कथं कार्यकारणभेदसिद्धिरित्यत आह भिन्नाविति । विरुद्धपरिमाणाद् विरुद्धार्थक्रियावत्त्वाच्चेति भावः ॥ ७ ॥

इदानीं परिणामस्वरूपमाह अवस्थान्तरेति । एकस्यैव वस्तुनः पूर्वावस्थात्यागपुरःसरमवस्थान्तरप्राप्तिः परिणाम इत्यर्थः । तदुदाहरति स्यात् क्षीरमिति । यथा क्षीरमृत्सुवर्णादीनां क्षीरादिव्यवहारयोग्यतां परित्यज्य दध्यादिव्यवहारयोग्यतापत्तिः ॥ ८ ॥

इदानीं विवर्त्तलक्षणमाह अवस्थान्तरेति । तुशब्दः पूर्वस्मात् पक्षद्वयात् वैलक्षण्यद्योतनार्थः । पूर्वावस्थामपरित्यज्य एव अवस्थान्तरभासनं विवर्त्तः । उदाहरति रज्जुसर्पवदिति । यथा रज्ज्वात्मनावस्थितस्यैव द्रव्यस्य सर्पात्मनाभासनम् । ननु विवर्त्तमानस्य रज्ज्वादेः सांशत्वदर्शनात् निरंशे सोऽपि न घटते इत्याशङ्क्य निरवयवगगनादावपि तद्दर्शनान्नैवमित्याह निरंशेऽपीति । असौ विवर्त्तः व्योम्नि तलत्वमधोमुखेन्द्रनीलकटाहतुल्यत्वं मालिन्यं नीलवर्णता तयोः कल्पनादाकाशस्वरूपानभिज्ञैरारोप्यमाणत्वादित्यर्थः ॥ ९ ॥

फलितमाह तत इति । ततो निरंशेऽपि विवर्त्तसम्भवाज्जगद्वि-

मायाशक्तिः कल्पिका स्यादैन्द्रजालिकशक्तिवत् ॥१०॥
शक्तिः शक्तात् पृथङ्नास्ति तद्वद् दृष्टेर्नचाभिदा ।
प्रतिबन्धस्य दृष्टत्वात् शक्त्यभावे तु कस्य सः ॥११॥
शक्तेः कार्य्यानुमेयत्वादकार्य्ये प्रतिबन्धनम् ।

---

द्वंशे आनन्दे विवर्त्तः कल्पितमित्यङ्गीकार्य्यमित्यर्थः । नन्वद्वितीये आनन्दे जगत्कल्पनमनुपपन्नं कल्पनाहेतोरभावादित्याशङ्क्याह मायाशक्तिरिति । शक्तेः कल्पकत्वं क्व दृष्टमित्यत आह ऐन्द्रजालिकेति । यथैन्द्रजालिकनिष्ठाया मणिमन्त्रादिरूपाया मायाशक्तेर्गन्धर्वनगरादिकल्पकत्वं तथेत्यर्थः ॥ १० ॥

नन्वानन्दातिरिक्तमायाया अभ्युपगमे द्वैतापत्तिरित्याशङ्क्याह अनिर्वचनीयत्वेनाद्वैतत्वं वक्तुम् उत्तरत्र वक्ष्यमाणाया लौकिक्या अग्न्यादिगतशक्तेः स्वरूपभेदेन वा अभेदेन वा निर्वक्तुमशक्यत्वं दर्शयति शक्तिरिति । शक्तिरग्न्यादिनिष्ठा स्फोटादिजनिका शक्तात् अग्न्यादिस्वरूपात् पृथक् भेदेन नास्ति । कुत इत्यत आह तद्वदिति । तथात्वस्य दृष्टेर्दर्शनादग्न्यादिस्वरूपातिरेकेणानुपलभ्यमानत्वादित्यर्थः । नाप्यग्न्यादिस्वरूपमेव शक्तिरित्याह न चाभिदेति । अभिदा अभेदोऽपि न च नैव । तत्रापि हेतुमाह प्रतिबन्धस्येति । मणिमन्त्रादिभिः शक्तिकार्य्यस्य स्फोटादेः प्रतिबन्धदर्शनात् स्वरूपातिरिक्ता शक्तिरेष्टव्येत्यभिप्रायः । भवतु प्रतिबन्धदर्शनं शक्तेर्भेदोऽपि मा भूत् को दोषस्तत्राह शक्तीति । प्रत्यक्षसिद्धस्याग्न्यादिस्वरूपस्य प्रतिबन्धासम्भवात् तद्व्यतिरिक्तशक्त्यनभ्युपगमे प्रतिबन्धो निर्विषयः स्यादित्यभिप्रायः ॥ ११ ॥

नन्वतीन्द्रियायाः शक्तेः कथ प्रतिबन्धोऽवगन्तुं शक्यते इत्याशङ्क्याह शक्तेरिति । अतीन्द्रियापि शक्तिर्यतः कार्य्यलिङ्गगम्या अतः स्वकार्ये सत्यपि कारणे कार्य्यानुत्पत्तौ सत्यां प्रतिबन्धनं प्रतिबन्धोऽव-

ज्वलतोऽग्नेरदाहे स्यान्मन्त्रादिप्रतिबन्धता ॥ १२ ॥
देवात्मशक्तिं स्वगुणैर्निगूढां मुनयोऽविदन् ।
परास्य शक्तिर्विविधा क्रियाज्ञानबलात्मिका ॥ १३ ॥
इति वेदवचः प्राह वशिष्ठश्च तथाब्रवीत् ।
सर्वशक्तिपरं ब्रह्म नित्यमापूर्णमव्ययम् ।

---

गम्यते इति शेषः । उक्तमर्थं दृष्टान्तप्रदर्शनेन स्पष्टयति ज्वलत इति । लोके स्वरूपेण प्रज्वलतोऽग्नेः सकाशाद् दाहादिलक्षणे कार्येऽनुत्पद्यमाने सति मन्त्रादिप्रतिबन्धता मन्त्रादीनाम् अग्निशक्तिप्रतिबन्धकत्वमित्यर्थः ॥ १२ ॥

इत्थं लौकिकशक्तिं स्वरूपतः प्रमाणतश्चोपन्यस्य इदानीं मायाशक्तिसद्भावे ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामिति श्वेताश्वतरोपनिषद्वाक्यमर्थतः पठति देवात्मशक्तिमिति । मुनयः कालस्वभावादिषु कारणवादेषु दोषदर्शनवन्तो जगत्कारणजिज्ञासया ध्यानयोगमास्थिताः अधिकारिणो देवात्मशक्तिं देवस्य द्योतमानस्य स्वप्रकाशचिद्रूपस्यात्मनः प्रत्यगभिन्नस्य ब्रह्मणः शक्तिं मायारूपां स्वगुणैः स्वकार्यभूतैः स्थूलसूक्ष्मशरीरैर्निगूढाम् आवृताम् अविदन् साक्षात्कृतवन्त इत्यर्थः । तस्यामेवोपनिषदि स्थितं परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति वाक्यान्तरमर्थतः पठति परास्येति । अस्य परा ब्रह्मणः उत्कृष्टा जगत्कारणभूता शक्तिर्विविधा श्रूयते इति वाक्यशेषः । विविधत्वमेवाह क्रियेति । क्रियाज्ञाने प्रसिद्धे बलमिच्छाशक्तिर्ज्ञानक्रियाशक्तिसाहचर्यात् । क्रियादित्रयमात्मा स्वरूपं यस्याः सा क्रियाज्ञानबलात्मिका ॥ १३ ॥

इदं वाक्यद्वयं कृत्स्नमित्यत आह इतीति । न केवलं मायाशक्तिः श्रुतिसिद्धा किन्तु स्मृतिसिद्धापीत्याह वशिष्ठश्चेति । यथा श्रुति-

यथोल्लसति शक्त्यासौ प्रकाशमधिगच्छति ॥ १४ ॥
चिच्छक्तिर्ब्रह्मणो राम ! शरीरेषूपलभ्यते ।
स्पन्दशक्तिश्च वातेषु दार्ढ्यशक्तिस्तथोपले ।
द्रवशक्तिस्तथाम्भःसु दाहशक्तिस्तथानले ।
शून्यशक्तिस्तथाकाशे नाशशक्तिर्विनाशिनि ॥ १५॥१६ ॥
यथाण्डान्तर्महासर्पो जगदस्ति तथात्मनि ।
फलपत्रलतापुष्पशाखाविटपमूलवान् ।
वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥ १७ ॥
क्वचित् काश्चित् कदाचिच्च तस्मादुद्यन्ति शक्तयः ।

---

र्निर्वचनां मायाशक्तिम् उक्तवती वशिष्ठोऽपि तां तथोक्तवान् वाशिष्ठाभिधान्ये इति शेषः । मायाशक्तिप्रतिपादिकान् वाशिष्ठश्लोकान् पठन्नर्वेति । नित्यमिति ब्रह्मणः पारमार्थिकं रूपमुक्तम् । सर्वशक्तीति तस्यैव सोपाधिकं रूपम् । तत् परं ब्रह्म यदा यदा यथा यथा शक्त्या उल्लसति विकसति विवर्त्तते इत्यर्थः तदा तदा असौ शक्तिः प्रकाशमधिगच्छति अभिव्यक्तिं प्राप्नोति ॥ १४ ॥

इदानीं तामेवाभिव्यक्तिं प्रपञ्चयति चिच्छक्तिरिति । शरीरेषु देवतिर्यङ्मनुष्यादिलक्षणेषु चिच्छक्तिः चेतनं व्यवहारहेतुभूतोपलभ्यते दृश्यते । स्पन्दशक्तिश्चलनहेतुभूता ॥ १५ ॥ १६ ॥

प्रकाशमधिगच्छतीत्युक्त्याऽनभिव्यक्तिदशायामपि ब्रह्मणि जगत्सत्ता दर्शिता अनभिव्यक्तस्यापि सत्त्वे दृष्टान्तमाह यथेति । विचित्रस्यापि तस्य सत्त्वे दृष्टान्तमाह फलेति ॥ १७ ॥

ननु सर्वेषामपि शक्तीनां युगपदेवाभिव्यक्तिः कुतो न स्यादित्याशङ्क्याह क्वचिदिति । क्वचिद्देशविशेषे । कदाचित् कालविशेषे । काश्चित्

देशकालविचित्रत्वात् क्ष्मातलादिव शालयः ॥ १८ ॥

स आत्मा सर्वगो राम ! नित्योदितमहावपुः ।
यन्मनाङ्मननीं शक्तिं धत्ते तन्मन उच्यते ॥ १९ ॥

आदौ मनस्तदनु बन्धविमोक्षदृष्टी
पश्चात् प्रपञ्चरचना भुवनाभिधाना ।
इत्यादिका स्थितिरियं हि गता प्रतिष्ठा-
माख्यायिका सुभगबालजनोदितेव ॥ २० ॥

---

शक्तयः । तासामयुगपदभिव्यक्तौ दृष्टान्तमाह देशकाल इत्यादि । यथा भूमिगतानां सर्वेषां बीजानां मध्ये देशविशेषे कालविशेषे च केषाञ्चिदेव बीजानाम् अङ्कुरोत्पत्तिर्नान्येषां तद्वदित्यर्थः ॥ १८ ॥

इदानीं जगतः कल्पनामात्ररूपतां दर्शयितुं तत्कल्पकस्य मनसो रूपं तावद्दर्शयति स आत्मेति । नित्योदितमहावपुर्नित्यं सदा उदितं प्रकाशमानं महद्देशकालादिपरिच्छेदरहितं वपुः शरीरं यस्य स तथा यत् यस्मिन् काले मनाक् ईषन्मननीं स्वपरावबोधनरूपां शक्तिं मायापरिणामरूपां धत्ते धारयति तत् तदा मन इत्युच्यते ॥ १९ ॥

इदानीं कल्पनाप्रकारमाह आदौ मन इति । आदौ प्रथमं मननशक्त्युद्रेकेण मनो भवति तदनु तदनन्तरं बन्धमोक्षदृष्टी बन्धमोक्षकल्पने भवतः पश्चादनन्तरं बन्धदृष्टावेव भुवनाभिधाना भुवनमित्यभिधानं यस्याः सा भुवनाभिधाना प्रपञ्चस्य गिरिनदीसरित्समुद्रादेरचना कल्पनं भवति इत्यादिका एवम्प्रकारा इयं जगतः स्थितिः प्रतिष्ठां स्थैर्यं गता प्राप्ता । कल्पितस्यापि वास्तवत्वप्रतीतौ दृष्टान्तमाह आख्यायिकेति । बालजनाय उदिता उक्ता आख्यायिका यथा यथा वास्तवबुद्धिं गता तथेदं जगदपीत्यर्थः ॥ २० ॥

बालस्य हि विनोदाय धात्री वक्ति शुभां कथाम् ।
क्वचित् सन्ति महाबाहो ! राजपुत्रास्त्रयः शुभाः ॥ २१ ॥
द्वौ न जातौ तथैकस्तु गर्भ एव हि न स्थितः ।
वसन्ति ते धर्मयुता अत्यन्तासति पत्तने ॥ २२ ॥
स्वकीयाच्छून्यनगरान्निर्गत्य विमलाशयाः ।
गच्छन्तो गगने वृक्षान् ददृशुः फलशालिनः ॥ २३ ॥
भविष्यन्नगरे तत्र राजपुत्रास्त्रयोऽपि ते ।
सुखमद्य स्थिताः पुत्र ! मृगयाव्यवहारिणः ॥ २४ ॥
धात्र्यैवं कथिता राम ! बालकाख्यायिका शुभा ।
निश्चयं स ययौ बालो निर्विचारणया धिया ॥ २५ ॥
इयं संसाररचना विचारोज्झितचेतसाम् ।
बालकाख्यायिकेवेत्थमवस्थितिमुपागता ॥ २६ ॥
इत्यादिभिरुपाख्यानैर्मायाशक्तेस्तु विस्तरम् ।
वशिष्ठः कथयामास सैव शक्तिर्निरूप्यते ॥ २७ ॥
कार्य्यादाश्रयतः सैषा भवेच्छक्तिर्विलक्षणा ।
स्फोटाङ्गारौ दृश्यमानौ शक्तिस्तत्रानुमीयते ॥ २८ ॥

---

तामेव कथां कथयति बालस्य हीति ॥ २१ ॥ २२ ॥ २३ ॥ ॥ २४ ॥ २५ ॥

दृष्टान्तमिदमर्थं दार्ष्टान्तिके योजयति इत्थमिति ॥ २६ ॥

वशिष्ठोक्तमुपसंहरति इत्यादिभिरिति । एवं मायासद्भावे प्रमाणमुपन्यस्य तस्यानिर्वचनीयत्वं वक्तुं प्रतिजानीते सैव शक्तिरिति ॥ २७ ॥

कार्य्यादिति । एषा मायाशक्तिः कार्यात् तत्कार्यभूतात् जगतः आश्रयतः आश्रयात् ब्रह्मणश्च विलक्षणा विपरीतस्वभावा भवेत् ।

पृथुबुध्नोदराकारो घटः कार्य्योऽत्र मृत्तिका।
शब्दादिभिः पञ्चगुणैर्युक्ता शक्तिस्त्वतद्विधा ॥ २९ ॥

न पृथ्वादिर्न शब्दादिः शक्तावस्तु यथा तथा।
अतएव ह्यचिन्त्यैषा न निर्वचनमर्हति ॥ ३० ॥

कार्य्योत्पत्तेः पुराः शक्तिर्निगूढा मृद्यवस्थिता।
कुलालादिसहायेन विकाराकारतां व्रजेत् ॥ ३१ ॥

---

मायाशक्तेः कार्य्यात् आश्रयो वैलक्षण्यं दृष्टान्तेन स्पष्टयति स्फोटा-ङ्गारावित्ति। वह्निगतशक्तेः कार्य्यरूपः स्फोट आश्रयरूपोऽङ्गारश्च प्रत्यक्षगम्यौ शक्तिस्तु कार्य्यानुमेया अतस्ताभ्यां सा विलक्षणेत्यर्थः ॥२८॥

उक्तन्यायं मृत्शक्तावपि योजयति पृथुबुध्न इति। यः पृथुबुध्नो-दराकारः पृथुः स्थूलं बुध्नं वर्तुलम्, उदरं यस्य, सः पृथुबुध्नोदरः तथाविध आकारो यस्य स तथाविधः तादृग्घटः कार्य्यः शब्दस्पर्श-रूपरसगन्धाख्यपञ्चगुणोपेता मृत्तिका आश्रयः शक्तिस्त्वतद्विधा उभय-विलक्षणेत्यर्थः ॥ २९ ॥

वैलक्षण्यमेवाह न पृथ्वादिरिति। शक्तौ पृथुत्वादिकार्य्यधर्मो नास्ति शब्दादिक आश्रयधर्मोऽपि न विद्यते अतो विलक्षणेत्यर्थः। तर्हि कीदृशीत्यत आह अस्त्विति। यथा तथेत्युक्तमेवार्थं विशदयति अतएव इति। यतः कार्य्याद्याश्रयतश्च विलक्षणा अतएवैषा अचिन्त्या चिन्तयितुमशक्या। ननु तर्हि अचिन्त्यत्वमेतस्याः रूपं स्यादित्याशङ्क्याह न निर्वचनमर्हति। भेदेनाभेदेन चिन्त्यत्वाचिन्त्यत्वादिना वा केनापि रूपेण निर्वचनं नार्हतीत्यर्थः ॥ ३० ॥

ननु कारणस्वरूपातिरिक्ता शक्तिर्यद्यस्ति तर्हि कारणस्वरूपमिव न सा कुतोऽवभासते इत्याशङ्क्याह कार्य्येति। मृच्छक्तिर्घटादिकार्य्योत्पत्तेः पूर्वं मृदि निगूढावतिष्ठते अतो नावभासते इत्यर्थः। निगूढत्वे उप-रत्वादपि न तस्या अभिव्यक्तिः स्यादित्याशङ्क्याभिव्यक्तावपि नवनी-

पृथुत्वादि विकारान्तं स्पर्शादिगुणमृत्तिकाम् ।
एकीकृत्य घटं प्राहुर्विचारविकला जनाः ॥ ३२ ॥
कुलालव्यापृतेः पूर्वो यावानंशः स नो घटः ।
पश्चात्तु पृथुबुध्नादिमत्त्वे युक्ता हि कुम्भता ॥ ३३ ॥
स घटो न मृदो भिन्नो वियोगे सत्यनीक्षणात् ।
नाप्यभिन्नः पुरा पिण्डदशायामनवेक्षणात् ॥ ३४ ॥
अतोऽनिर्वचनीयोऽयं शक्तिवत्तेन शक्तिजः ।
अव्यक्तत्वे शक्तिरुक्ता व्यक्तत्वे घटनामभृत् ॥ ३५ ॥

---

तादिमर्थनादिनैव कुलालादिव्यापारेण तस्याभिव्यक्तिः स्यादित्याह कुला-लादीति । आदिशब्देन दण्डचक्रादयो गृह्यन्ते ॥ ३१ ॥

ननु कारणातिरिक्तस्य शक्तिकार्यद्वयस्य सत्त्वे कार्यकारणयोर्भेदो न कुतोऽवभासत इत्याशङ्क्य भेदप्रतीतिहेतोर्विचारस्याभावादित्याह पृथु-त्वादीति । अविवेकिनो जनाः पृथुबुध्नादिरूपं कार्यं शब्दस्पर्शादि-गुणरूपां कारणभूतां मृत्तिकाम् अविचारत एकीकृत्य घट इत्या-चक्षते ॥ ३२ ॥

उक्तस्य घटव्यवहारस्याविचारमूलत्वं कुत इत्याशङ्क्याह कुलाल-व्यापृतेरिति । कुलालव्यापारात् पूर्वभाविनो मृदंशस्य घटत्वेनाव्यव-हारादविचारमूलत्वं तस्येति भावः । कस्य तर्हि घटत्वमित्यत आह पश्चादित्विति । कुलालादिव्यापारानन्तरभाविनः पृथुबुध्नोदराकारस्यैव घटशब्दवाच्यत्वमुचितं तदुत्पत्त्यनन्तरमेव घटशब्दप्रयोगदर्शनात् इति भावः ॥ ३३ ॥

ननु पारमार्थिकस्य घटस्यानिर्वचनीयशक्तिकार्यत्वमयुक्तमित्याशङ्क्य तस्यापि पारमार्थिकत्वमसिद्धमित्याह स घट इति । घटो मृदः पृथक्-कृत्य दृष्टुमशक्यत्वान्न मृदो भिद्यते नापि मृदेव पिण्डावस्थायाम-नुपलभ्यमानत्वात् अतः शक्तिवदनिर्वचनीय एव घटः । फलितमाह

ऐन्द्रजालिकनिष्ठापि माया न व्यज्यते पुरा ।
पश्चाद् गन्धर्वसेनादिरूपेण व्यक्तिमाप्नुयात् ॥ २६ ॥
एवं मायामयत्वेन विकारस्यानृतात्मताम् ।
विकाराधारमृद्वस्तुसत्यत्वञ्चाब्रवीत् श्रुतिः ॥ २७ ॥
वाङ्निष्पाद्यं नाममात्रं विकारो नास्य सत्यता ।
स्पर्शादिगुणयुक्ता तु सत्या केवलमृत्तिका ॥ २८ ॥
व्यक्ताव्यक्ते तदाधार इति विष्वाद्ययोर्द्वयोः ।
पर्य्यायः कालभेदेन तृतीयस्त्वनुगच्छति ॥ २९ ॥

---

तेनेति । ननु शक्तिकार्य्ययोरुभयोरपि अनिर्वचनीयत्वे शक्तिः कार्य्य-मिति भेदव्यवहारः कुत इत्यत आह अव्यक्तेति ॥ २४ ॥ २५ ॥

पूर्वमनभिव्यक्ता मायाशक्तिः पश्चादभिव्यज्यते इत्येतत् प्रसिद्धं मायिकेष्वप्यवगम्यत इत्याशयेनाह ऐन्द्रजालिकेति । पुरा औषधमन्त्रादि-प्रयोगात् पूर्वम् ॥ २६ ॥

शक्तिकार्य्यस्य घटादेरनृतत्वं शक्त्याधारस्य मृदादेः सत्यत्वमित्ये-तच्छान्दोग्यश्रुतावप्यभिहितमित्याह एवमिति । मायामयत्वेन माया-कार्य्यत्वेन विकारस्य कार्य्यरूपस्य घटादेरनृतात्मतां मिथ्यात्वं विका-राधारायाः घटादीनामाधारभूताया मृदः सत्यत्वञ्च वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुतिरब्रवीदित्यर्थः ॥ २७ ॥

इदानीं वाचारम्भणमित्युदाहृतं वाक्यमर्थतः पठति वाङ्नि-ष्पाद्यमिति । विकारो मृत्कार्य्यो घटादिः वाङ्निष्पाद्यं वागिन्द्रिये-णोच्चार्य्यं नाममात्रं नामैव अस्य घटादेर्न सत्यता नामातिरेकेण न पारमार्थिकं रूपमस्ति किन्तु तदाधारभूता मृदेव सत्येत्यर्थः ॥ २८ ॥

शक्तितत्कार्य्ययोरनृतत्वे तदाधारस्य सत्यत्वे च कारणमाह व्यक्तेति । व्यक्तो घटादिरवयवः कार्य्यः अव्यक्ता तत्कारणभूता

निस्तत्त्वं भासमानञ्च व्यक्तमुत्पत्तिनाशभाक् ।
तदुत्पत्तौ तस्य नाम वाचा निष्पाद्यते नृभिः ॥ ४० ॥
व्यक्ते नष्टेऽपि नामैतन्नृवक्त्रेष्वनुवर्त्तते ।
तेन नाम्ना निरूप्यत्वात् व्यक्तं तद्रूपमुच्यते ॥ ४१ ॥
निस्तत्त्वत्वाद् विनाशित्वाद् वाचारम्भणनामतः ।
व्यक्तस्य न तु तद्रूपं सत्यं किञ्चिन्मृदादिवत् ॥ ४२ ॥

---

शक्तिं ते व्यक्ताव्यक्ते तदाधारस्तयोराधारभूता मृत्तिका एषु त्रिषु मध्ये आद्ययोः प्रथमोद्दिष्टयोर्द्वयोः कार्य्यशक्त्योः सम्बन्धिनौ यौ कालौ तयोर्भेदेन भेदस्य विद्यमानत्वात् पर्य्यायः क्रमेण भवनम् । तृतीयस्तदुभयाधारस्तु मृदादिरनुगच्छति उभयमनुवर्त्तते । अयं भावः शक्तिकार्य्ययोः कादाचित्कत्वात् असत्यत्वम् आधारस्य तु कालत्रयानुगामित्वात् सत्यत्वम् ॥ ३९ ॥

इदानीं विकारस्यैवासत्यत्वे हेतुत्रयमाह निस्तत्त्वमिति । व्यक्तशब्दवाच्यं घटादिकं कार्य्यं स्वरूपेणासदेवावभासते तथोत्पत्तिविनाशवदुपलभ्यते उत्पत्त्यनन्तरं वागिन्द्रियजन्यनामात्मकत्वेन व्यवह्रियते च । किञ्च व्यक्ते कार्य्यरूपे नष्टेऽपि एतत् कार्य्यादभिन्नं नाम नृवक्त्रेषु नराणां शब्दप्रयोक्तॄणां मनुष्याणां वदनेष्वनुवर्त्तते । ततः किं तत्राह तेनेति । व्यक्तं कार्य्यं तेन वाचा व्यवह्रियमाणेन नाम्ना शब्देन निरूप्यत्वात् व्यवह्रियमाणत्वात् तद्रूपं तस्य नाम्नो रूपमेव रूपं यस्य तत्तथाभूतमुच्यते इत्यर्थः । अयं भावः विनष्टो घटो घटशब्दात्मको अनुवर्त्तते घटशब्देन व्यवह्रियमाणत्वात् घटशब्दवत् ॥ ४० ॥ ४१ ॥

एवं हेतुत्रयं प्रसाध्येदानीम् अनुमानप्रयोगप्रकारं सूचयति निस्तत्त्वत्वादिति । व्यक्तस्य घटादिरूपस्य कार्य्यस्य यत् पृथुबुध्नोदराकारं तद्रूपमस्ति तत् किञ्चित् किमपि सत्यं न भवति निस्तत्त्वत्वात् निस्तत्त्वं

व्यक्तकाले ततः पूर्वमूर्ध्वमप्येकरूपभाक् ।
सतत्त्वमविनाशञ्च सत्यं मृद्वस्तु कथ्यते ॥ ४३ ॥
व्यक्तं घटो विकारश्चेत्येतैर्नामभिरीरितः ।
अर्थश्चेदनृतः कस्मान्न मृद्बोधे निवर्त्तते ॥ ४४ ॥
निवृत्त एव यस्मात् ते तत्सत्यत्वमतिर्गता ।
ईदृङ्निवृत्तिरेवात्र बोधजा न त्वभासनम् ॥ ४५ ॥

---

निर्गतं तत्त्वं वास्तवं रूपं यस्मात् तन्निस्तत्त्वं तस्य भावस्तत्त्वं तस्मात् तथाऽविनाशित्वात् मृदि सत्यामेव नाशप्रतियोगित्वात् वाचारम्भण-मात्रतः वागिन्द्रियजन्यशब्दमात्रात्मकत्वात् वा । त्रिष्वपि हेतुषु घट इति वैधर्म्यदृष्टान्तः । अत्रैवं प्रयोगः घटादिरूपः कार्योऽसत्यो भवितुमर्हति निस्तत्त्वत्वात् यदेवं न भवति न तन्निस्तत्त्वं यथा घटाद्युपादानं मृदिति केवलव्यतिरेकी । एवमितरे हेतुद्वयेऽपि योजनीयम् ॥ ४२ ॥

एवं विकारस्यासत्यत्वमुपपाद्येदानीं तदधिष्ठानभूताया मृदः सत्यत्व-मुपपादयति व्यक्तेति । व्यक्तकाले स्थितिकाले ततः पूर्वं व्यक्तेरुत्पत्तेः पूर्वकाले ऊर्ध्वमपि व्यक्तिविनाशोत्तरकालेऽपि एकरूपभाक् एकाकारं सतत्त्वं तत्त्वेन वास्तवरूपेण सह वर्त्तते इति सतत्त्वम् अविनाशं विकारेण सह नाशरहितञ्च यन्मृद्वस्तु तत् सत्यमिति कथ्यते । विमतं मृद्वस्तु सत्यं भवितुमर्हति सतत्त्वत्वात् आत्मवदित्यादि योज्यम् ॥ ४३ ॥

ननु घटादेः कार्यस्यासत्यत्वे तस्यारोपितरजतादेरिवाधिष्ठान-ज्ञाननिवर्त्यता स्यादिति शङ्कते व्यक्तमिति । व्यक्तमित्यादिभिर्नामभि-शब्दैरभिधीयमानो योऽर्थः कार्यरूपः तस्य कारणातिरेकेणासत्यत्वे चेत् कथमसौ मृद्रूपकारणस्य ज्ञाने किं न तन्निवृत्तिः स्यादित्य-र्थः ॥ ४४ ॥

दृष्टान्तांशेऽपि परिहरति निवृत्त इति । तत्रोपपत्तिमाह यस्मा-

पुमानधोमुखो नीरे भातोऽप्यस्ति न वस्तुतः।
तटस्थमर्त्यवत् तस्मिन् नैवास्था कस्यचित् क्वचित् ॥४६॥
ईदृग्बोधे पुमर्थत्वं मतमद्वैतवादिनाम्।
मृद्रूपस्यापरित्यागात् विवर्त्तत्वं घटे स्थितम् ॥ ४७ ॥
परिणामे पूर्वरूपं त्यजेत् तत् क्षीररूपवत्।
मृत्सुवर्णे निवर्त्तेते घटकुण्डलयोर्न हि ॥ ४८ ॥

---

दिति। यस्मात् कारणात् तव घटादिविषया सत्यत्वबुद्धिर्नष्टा अत एव निवृत्त एवेत्यर्थः। नन्वारोपितरजतादिस्वरूपस्यैवाप्रतीतिरूपबाधो दृश्यते न सत्यत्वबुद्ध्यपगम इत्याशङ्क्य तस्य निरुपाधिकभ्रमत्वादस्तु तथात्वम् इह तु सोपाधिकभ्रमे सत्यत्वबुद्ध्यपगम एव निवृत्तिः स्यादित्यभिप्राये-णाह ईदृशमिति। यत्र सोपाधिकभ्रमस्तत्र ईदृगेव सत्यत्वबुद्ध्यपगम-रूपैव बाधस्य अधिष्ठानयाथात्म्यज्ञानजन्या निवृत्तिरभ्युपेया न तथा-त्र न स्वरूपाप्रतीतिरूपेत्यर्थः ॥ ४५ ॥

एवं क दृष्टान्तमाह पुमानध इति। अधोऽधोमुखत्वेन प्रति-भासमानोऽपि पुमान् परमार्थतो नास्ति। तमेवोपदर्शितमाह तटस्थेति। कस्यचित् विवेकिनोऽविवेकिनो वा तस्मिन्नधोमुखे पुरुषे तीरस्थपुरुष इव सत्यत्वाभिमानः क्वचिद्देशे काले वा नैवास्ति इति ॥ ४६ ॥

नन्वारोपितस्याऽसत्यत्वज्ञानमात्रेण पुरुषार्थसिद्धिरित्याशङ्क्याह ईदृग्बोध इति। अद्वैतवादे आत्मानन्यातिरिक्तस्य सर्वस्य मिथ्यात्वनिश्चये सत्यद्वितीयानन्दात्मनिष्ठस्य पुरुषार्थः सिद्ध्यतीत्यभिप्रायः। ननु घटस्य मृद्विवर्तत्वे सिद्धे तज्ज्ञानाद् घटसत्यत्वबुद्धिर्निवर्तेत न चैतदि-ष्टान्तौ सिद्धमित्याशङ्क्याह मृद्रूपस्येति ॥ ४७ ॥

घटे मृद्रूपापरित्यागाभावेऽपि सत्परिणामता घटस्य किं न स्या-दित्याशङ्क्याह परिणाम इति। यत्र क्षीरादौ परिणामोऽभ्युपगम्यते

घटे नष्टे न तद्भावः कपालानामवेक्षणात्।
नैवं चूर्णेऽस्ति मृद्रूपं स्वर्णरूपं त्वतिस्फुटम्॥ ४९॥
क्षीरादौ परिणामोऽस्तु पुनस्तद्भाववर्जनात्।
एतावता मृदादीनां दृष्टान्तत्वं न हीयते॥ ५०॥
आरम्भवादिनः कार्ये मृदो द्वैगुण्यमापतेत्।
रूपस्पर्शादयः प्रोक्ताः कार्यकारणयोः पृथक्॥ ५१॥

---

तत्र क्षीरादिभावस्य पूर्वरूपस्य त्याग उपलभ्यते इत्यर्थः। ननु विवर्ते पूर्वरूपापरित्यागः क्व दृष्ट इत्याशङ्क्य मृत्सुवर्णयोर्दृश्यते इत्याह मृत्सुवर्णेति। मृत्सुवर्णविवर्तयोर्घटकुण्डलयोर्भिन्नयोरपि तत्कारणमृत्सुवर्णरूपे न निवर्तेते इति हि प्रसिद्धमित्यर्थः॥ ४८॥

ननु घटस्य मृद्विवर्तत्वमनुपपन्नं घटनाशे पुनस्तद्भावादर्शनादिति शङ्कते घटे इति। तद्भावाभावे कारणमाह कपालेति। कपालानामपि नाशे मृद्भावो विनंक्ष्यः स्यादिति परिहरति नैवमिति। सुवर्णे त्वेतच्चोद्यानवकाश एवेत्याह स्वर्णेति॥ ४९॥

ननु परिणामदृष्टान्तत्वेनाभिहितानां क्षीरमृत्सुवर्णानां मध्ये यदि मृत्सुवर्णयोर्विवर्ते दृष्टान्तत्वमङ्गीक्रियते तर्हि तद्वत् क्षीरस्यापि तथात्वं स्यादित्याशङ्क्याह क्षीरेति। तर्हि क्षीरादेरवस्थान्तरमापद्यमानयोस्तयोः विवर्ते दृष्टान्तता न भवेदित्याशङ्क्याह एतावतेति। एतावता क्षीरादेः परिणामित्वेन मृदादीनां मृत्सुवर्णादीनां दृष्टान्तत्वं विवर्तदृष्टान्तभावः न हीयते न नश्यति। अयमभिप्रायः क्षीरस्य पूर्वरूपपरित्यागपुरःसरमवस्थान्तरापत्तिसद्भावात् परिणामित्वमेव मृत्सुवर्णयोस्तु अवस्थान्तरापत्तिसद्भावेऽपि पूर्वरूपपरित्यागाभावाद्विवर्ततापीति॥ ५०॥

ननु मृत्सुवर्णयोः परिणामविवर्तयोरिवारम्भकत्वमपि किं नाङ्गी-

मृत्सुवर्णमयश्चेति दृष्टान्तत्रयमारुणिः ।
प्राहातो वासयेत् कार्य्यानृतत्वं सर्ववस्तुषु ।
कारणज्ञानतः कार्य्यविज्ञानञ्चापि सोऽवदत् ॥ ५२ ॥
सत्यज्ञानेऽनृतज्ञानं कथमत्रोपपद्यते ।
समृत्कस्य विकारस्य कार्य्यता लोकदृष्टितः ।
वास्तवोऽत्र मृदंशोऽस्य बोधः कारणबोधतः ॥ ५३ ॥

क्रियते इत्याशङ्क्याह आरम्भवादिन इति । आरम्भवादिनो मते कार्य्ये घटादिरूपे मृदो मृत्तिकादेर्द्रव्यस्य द्वैगुण्यं कार्य्याकारेण कारणाकारेण च द्विगुणत्वमापद्यते तथा च सति गुरुत्वात् द्वैगुण्यमापद्येतेति भावः । कुत एतदित्याशङ्क्याह रूपेति । रूपस्पर्शादीनां गुणानां कार्य्यकारणयोर्भेदस्य नैवाङ्गीकृतत्वादिति भावः ॥ ५१ ॥

ननु मृत्सुवर्णयोः किं द्वयोरेव विवर्त्ते दृष्टान्तत्वं नेत्याह मृत्सुवर्णेति । अरुणस्य पुत्र उद्दालकाख्यः कश्चिदृषिः यथा सोम्यैकेन मृत्पिण्डेन इत्यारभ्य कार्ष्णायसमित्यन्तेन वाक्यसन्दर्भेण कार्य्यस्यानृतत्वे मृत्सुवर्णयो रूपं दृष्टान्तत्रयमुक्तवानित्यर्थः । किमर्थमेवं दृष्टान्तत्रयमुक्तवानित्याशङ्क्याह अत इति । यत एवं वस्तुषु घटादिषु कार्य्यानृतत्वमुपपन्नमतो भूतभौतिकरूपेषु वस्तुषु कार्य्यानृतत्वं वासित कुर्य्यादित्यर्थः । ननु कार्य्यानृतत्वानुसन्धानमपि किमर्थमुक्तमित्याशङ्क्य कारणज्ञानात् कार्य्यज्ञानसिद्धये इत्यभिप्रायेणाह कारणज्ञानत इति । कारणस्य मृदादेर्ज्ञानात् कार्य्यजातस्य घटादेर्ज्ञानमपि यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादि वाक्यजातेनोक्तवानित्यर्थः ॥ ५२ ॥

ननु मृत्सुवर्णादिरूपस्य पारमार्थिकस्य कारणस्य विज्ञानात् तद्विलक्षणस्य घटशरावादेर्विज्ञानमनुपपन्नमिति शङ्कते सत्येति । कार्य्यस्य

अनृतांशो न बोद्धव्यस्तद्बोधानुपयोगतः ।
तत्त्वज्ञानं पुमर्थं स्यान्नानृतांशावबोधनम् ॥ ५४ ॥
तर्हि कारणविज्ञानात् कार्य्यज्ञानमितीरिते ।
मृद्बोधान्मृत्तिका बुद्धेत्युक्तं स्यात् कोऽत्र विस्मयः ॥ ५५ ॥
सत्यं कार्य्येषु वस्त्वंशः कारणात्मेति जानतः ।
विस्मयो मास्त्विहाज्ञस्य विस्मयः केन वार्य्यते ॥ ५६ ॥

सत्यानृतद्वयरूपत्वात् कारणज्ञानात् कार्य्यगतसत्यांशविज्ञानं भवतीति अभिप्रेत्याह समृत्कस्येति । समृत्कस्याधिष्ठानभूतमृत्सहितस्य विकारस्यारोपितस्य घटादिरूपस्य कार्य्यता कार्य्यशब्दार्थत्वं लोकप्रसिद्धमित्यर्थः । भवत्वेवम् एतावता कारणज्ञानात् कार्य्यज्ञानं न सम्भवतीति चोद्यस्य कः परिहारो जात इत्याशङ्क्य कार्य्यगतानृतांशज्ञानाभावेऽपि तद्गतसत्यांशज्ञानं भवत्येवेति परिहरति वास्तवोऽस्तीति । अत्र कार्य्ये यो वास्तवो मृदंशोऽस्ति अस्य वास्तवांशस्य बोधो ज्ञानं कारणज्ञानात् भवतीत्यर्थः ॥ ५३ ॥

ननु कारणगतसत्यांशवदनृतांशोऽपि बोद्धव्य इत्याशङ्क्य प्रयोजनाभावान्नेत्यभिप्रेत्याह अनृतांशो न बोद्धव्य इति । प्रयोजनाभावमेव प्रकटयति तत्त्वज्ञानमिति । तत्त्वस्य अबाध्यस्य वस्तुनो ज्ञानं पुमर्थं स्यात् पुरुषस्यार्थः प्रयोजनं यस्मात् तत् पुमर्थमिति बहुव्रीहिः अनृतांशस्य विकारस्यावबोधनं प्रयोजनवन्न भवतीत्यर्थः ॥ ५४ ॥

ननु कारणज्ञानात् कार्य्यज्ञानं भवतीत्येतदर्थः श्रुत्युक्तो चमत्कारहेतुर्भविष्यतीत्यभिप्रायेणोक्तं तदेतन्न सम्भवतीति शङ्कते तर्हीति । कारणस्य मृदादेर्ज्ञानात् कार्य्यगतं मृदादिसत्यांशज्ञानं भवतीत्युक्ते मृज्ज्ञानात् मृदो ज्ञानमित्युक्तं भवति एवं सति यच्छ्रुत एव चमत्कारो नायत इत्यर्थः ॥ ५५ ॥

आरम्भी परिणामी च लौकिकश्चैककारणे ।
ज्ञाते सर्वमतं श्रुत्वा प्राप्नुवन्त्येव विस्मयम् ॥ ५७ ॥
अद्वैतेऽभिमुखीकर्त्तुमेवात्रैकस्य बोधतः ।
सर्वबोधः श्रुतौ नैव नानात्वस्य विवक्षया ॥ ५८ ॥
एकमृत्पिण्डविज्ञानात् सर्वमृण्मयधीर्यथा ।
तथैकब्रह्मबोधेन जगद्बुद्धिर्विभाव्यताम् ॥ ५९ ॥

ईदृग्विवेकवतां विस्मयाभावोऽपि तद्रहितानां विस्मयः स्यादेवेति परिहरति सत्यमिति । कार्य्येषु घटादिषु विद्यमानो वास्तवोऽंशः कारणस्वरूपमेवेति ये जानन्ति तेषामाश्चर्य्यं माभूत् इतरेषां तज्ज्ञानशून्यानां जायमानो विस्मयो न निवारयितुं शक्य इत्यर्थः ॥ ५६ ॥

अज्ञस्य विस्मयो भवेदित्युक्तमेवार्थं प्रपञ्चयति आरम्भीति । आरम्भो नाम समवाय्यसमवायिनिमित्ताख्यकारणेभ्यो भिन्नस्य कार्य्यस्योत्पत्तिः तां यो वक्ति सोऽयमारम्भीत्युच्यते पूर्वरूपपरित्यागेन रूपान्तरप्राप्तिलक्षणं परिणामं यो वक्ति स परिणामीत्युच्यते प्रक्रियाद्वयमजानन् व्यवहारमात्रपरः लौकिक इत्युच्यते एतेषां त्रयाणामपि कारणस्यैकस्य ज्ञानादनेकधा कार्य्याणां विज्ञानं भवतीति वाक्यश्रवणात् विस्मयः भवेदित्यर्थः ॥ ५७ ॥

ननु यथाश्रुतमर्थं परित्यज्य इत्थं व्याख्याने किं कारणमित्याशङ्क्य श्रुतेस्तत्र तात्पर्य्याभावादित्याह अद्वैतेति । अद्वैतविज्ञानविषयमभिमुखीकर्त्तुमेव छान्दोग्यश्रुतावेकस्य कारणस्य विज्ञानात् सर्वेषां कार्य्याणां विज्ञानमुक्तं न तु कार्य्याणामनेकधा विज्ञानविवक्षयेत्यभिप्रायः ॥ ५८ ॥

इदानीमेकविज्ञानेन सर्वविज्ञानदृष्टान्तप्रदर्शनपरस्य यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादिति वाक्यस्यार्थं निरूपयन् [illegible]

सच्चित्सुखात्मकं ब्रह्म नामरूपात्मकं जगत् ।
तापनीये श्रुतं ब्रह्म सच्चिदानन्दलक्षणम् ॥ ६० ॥
सद्रूपमारुणिः प्राह प्रज्ञानं ब्रह्म बह्वृचाः ।
सनत्कुमार आनन्दमेवमन्यत्र गम्यताम् ॥ ६१ ॥

---

दार्ष्टान्तिकप्रदर्शनपरत्वेन उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतमिति वाक्यस्यार्थं प्रदर्शयन् प्रकृते फलितमाह एक मृत्पिण्डेति । यथा घटशरावाद्युपादानस्यैकस्य मृत्पिण्डस्यावबोधात् तद्विकाराणां सर्वेषां घटादीनां बोधो भवति एवं सर्वोपादानभूतस्य एकस्य ब्रह्मणो बोधात् कार्यस्य तद्रूपस्य जगतो बोधो भवतीत्यवगन्तव्यमित्यर्थः ॥५९॥

ननु ब्रह्मजगतोः स्वरूपापरिज्ञाने ब्रह्मज्ञानात् जगतो ज्ञानं भवतीत्येवं भावगन्तुं शक्यते इत्याशङ्क्य तदवगमनाय तदुभयस्वरूपं दर्शयति सच्चिदिति । ब्रह्मणः सच्चिदानन्दरूपत्वे किं प्रमाणमित्याशङ्क्य तापनीयादिश्रुतयः प्रमाणमित्यभिप्रायेणाह तापनीय इति । उत्तरतापनीये आथर्वणिके तावत् ब्रह्मैवेदं सर्वं सच्चिदानन्दात्मम् इत्यादिप्रदेशेषु ब्रह्मणः सच्चिदानन्दरूपत्वमुक्तमित्यर्थः ॥ ६० ॥

आदिपदेन विवक्षितानि श्रुत्यन्तराणि दर्शयति सद्रूपेति । अरुण-पुत्रेणोद्दालकेन छान्दोग्यश्रुतौ सदेव सोम्येदमग्र आसीदित्यादिना सद्रूपं ब्रह्म निरूपितम् । तथा च बह्वृचाः ऋक्शाखाध्यायिनः ऐतरेयोपनिषदि प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मेति प्रज्ञानरूपत्वं ब्रह्मणो दर्शयन्ति एवं पूर्वोदाहृतायां छान्दोग्यश्रुतावेव सनत्कुमाराख्यो गुरुः नारदाख्याय शिष्याय सुखं त्वेव विजिज्ञासितव्यमित्युपक्रम्य यो वै भूमा तत्सुखमिति भूमशब्दाभिधेयस्य ब्रह्मण आनन्दरूपत्वमुक्तवानित्यर्थः । उक्तन्यायमन्यत्रातिदिशति एवमन्यत्रेति । अन्यत्र तैत्तिरीयकादिश्रुतिषु आनन्दो ब्रह्मेति व्यजानादित्यादिवाक्यैरानन्दरूपत्वादिकमवगन्तव्यमिति द्रष्टव्यमिति भावः ॥ ६१ ॥

विचिन्त्य सर्वरूपाणि कृत्वा नामानि तिष्ठति ।
अहं व्याकरवाणीमे नामरूपे इति श्रुतिः ॥ ६२ ॥
अव्याकृतं पुरा सृष्टेरूर्द्ध्वं व्याक्रियते द्विधा ।
अचिन्त्यशक्तिर्मायैषा ब्रह्मण्यव्याकृताभिधा ॥ ६३ ॥
अविक्रियब्रह्मनिष्ठा विकारं यात्यनेकधा ।
मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ॥ ६४ ॥

---

सच्चिदानन्देष्विव नामरूपयोरपि श्रुतिं दर्शयति विचिन्त्येति । सर्वाणि रूपाणि विचिन्त्य । धीरो नामानि कृत्वा अभिवदन् यदास्ते इति अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणीति च श्रुत्युक्ते जगन्निष्ठे नामरूपे श्रुत्या दर्शिते इत्यर्थः ॥ ६२ ॥

तत्रैव श्रुत्यन्तरमुदाहरति अव्याकृतमिति । वृहदारण्यकश्रुतौ तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूपमिति सृष्टस्य जगतो नामरूपात्मकत्वं दर्शितमित्यर्थः । सृष्टेः पूर्वमिदं जगदव्याकृतम् अव्यक्तनामरूपात्मकम् अभूत् । ऊर्द्ध्वं सृष्ट्यवसरे द्विधा वाच्यवाचकभावेन व्याक्रियते व्यक्तीकृतमित्यर्थः । इदानीं तद्धेदं तर्ह्यव्याकृतमासीदित्यत्र अव्याकृतशब्दस्यार्थमाह अचिन्त्यशक्तिरिति । येयं ब्रह्मणि अचिन्त्यशक्तिर्मायास्ति एषा व्याकृताभिधा अस्मिन् वाक्ये त्वव्याकृतशब्देनाभिधीयत इत्यर्थः ॥ ६३ ॥

तन्नामरूपाभ्यामेव व्याक्रियत इत्यस्यार्थमाह अविक्रियेति । अविकारिण्यपि ब्रह्मणि वर्त्तमाना या अनेकधा भूतभौतिकप्रपञ्चरूपेण बहुधा विकारं परिणामं प्राप्नोति । माया ब्रह्मणि वर्त्तते इत्यत्र प्रमाणमाह मायान्त्विति । मायां पूर्वोक्तां प्रकृतिं प्रक्रियते अनयेति प्रकृतिरुपादानकारणं विद्याज्जानीयात् । मायिनं मायाश्रयत्वेन तद्वन्तं महेश्वरं मायानियामकं विद्यादित्यनुवर्त्तते । अथवा तुशब्दः पर-स्यैवाद्वयद्योतनार्थः ॥ ६४ ॥

आद्यो विकार आकाशः सोऽस्ति भात्यपि च प्रियः ।
अवकाशस्तस्य रूपं तन्मिथ्या न तु तत्त्रयम् ॥ ६५ ॥
न व्यक्तेः पूर्वमस्त्येवं न पश्चाच्च विनाशतः ।
आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत् तथा ॥ ६६ ॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ! ।
अव्यक्तनिधनान्येवेत्याह कृष्णोऽर्जुनं प्रति ॥ ६७ ॥
मृद्वत् ते सच्चिदानन्दा अनुगच्छन्ति सर्वदा ।
निराकाशे सदादीनामनुभूतिर्निजात्मनि ॥ ६८ ॥
अवकाशे विस्मृतेऽथ तत्र किं भाति ते वद ।

इदानीं मायोपहितस्य तस्य ब्रह्मणः प्रथमं कार्य्यमाह आद्य इति । तस्य कारणादागतं रूपत्रयमाह सोऽस्तीति । सच्चिदानन्दरूपमित्यर्थः । तस्य प्रातीतिकं रूपमाह अवकाश इति । तस्य पूर्व्वोक्त रूपत्रयाद् वैलक्षण्यमाह तन्मिथ्येति । सदादिरूपत्रयं वास्तवमित्यर्थः ॥ ६५ ॥

तस्य चतुर्थरूपस्य मिथ्यात्वे हेतुमाह न व्यक्तेरिति । ननूत्पत्ति-विनाशयोर्मध्ये प्रतीयमानस्यावकाशस्य कथमसत्त्वमित्याशङ्क्याह आदा-वन्ते इति ॥ ६६ ॥

उक्तेऽर्थे श्रीकृष्णवाक्यं प्रमाणयति अव्यक्तेति ॥ ६७ ॥

सदादिरूपत्रयस्याकाशे सत्त्वे किं प्रमाणमित्याशङ्क्यानुभूतिरेव प्रमाणमित्याह मृद्वदिति । मृद्वदिति दृष्टान्तप्रदर्शनार्थं घटादिषु यथा कालत्रयेऽपि मृदनुवर्त्तते तथा सदादिरूपत्रयं सर्व्वदानुगतमित्यर्थः । ननु आकाशं विहाय सदादिरूपत्रयं कथमनुभूतमित्याशङ्क्याह निरा-काश इति ॥ ६८ ॥

तदेवोपपादयति अवकाश इति । पूर्व्वार्द्धेन बोध्यमनुवदति शून्य-

**शून्यमेवेति चेदस्तु नाम तादृग्विभाति हि ॥ ६८ ॥**
तादृक्त्वादेव तत्सत्त्वमौदासीन्येन तत् सुखम् ।
आनुकूल्यप्रातिकूल्यहीनं यत् तन्निजं सुखम् ॥ ७० ॥
आनुकूल्ये हर्षधीः स्यात् प्रातिकूल्ये तु दुःखधीः ।
द्वयाभावे निजानन्दो निजं दुःखन्तु न क्वचित् ॥ ७१ ॥
निजानन्दे स्थिते हर्षशोकयोर्व्यत्ययः क्षणात् ।
मनसः क्षणिकत्वेन तयोर्मानसतेष्यताम् ॥ ७२ ॥
आकाशेऽप्येवमानन्दः सत्ताभाने तु संमते ।
वाय्वादिदेहपर्यन्तवस्तुष्वेव विभाव्यताम् ॥ ७३ ॥

---

मिति । अङ्गीकृत्य परिहारमाह अस्तु नामेति । यद्यतः शून्यमस्तु अर्थतत्त्वस्वरूपाभावविशेषणस्य विशेष्यत्वेन प्रतीयमानं किञ्चिदस्ति इत्यभ्युपगन्तव्यमित्याह तादृगिति । हिशब्दो लोकप्रसिद्धिद्योतनार्थः ॥ ६८ ॥

एवमेवं प्रकृते किमायातमित्याशङ्क्य विशेष्यत्वेन प्रतीयमानस्य स्वरूपमभ्युपेयमित्याह तादृक्त्वादेवेति । अस्य सुखस्वरूपत्वमाह औदासीन्येनेति । औदासीन्यरूपत्वात् तस्य सुखस्वरूपत्वमित्यर्थः । नन्वनुकूलत्वरहितस्य कथं सुखस्वरूपत्वमित्याशङ्क्याह आनुकूल्येति ॥ ७० ॥

तदेवोपपादयति आनुकूल्ये हर्षधी इति । ननु निजानन्दवत् निजदुःखमपि किं न स्यादित्याशङ्क्य दुःखे निजस्वरूपत्वप्रमाणाभावान्नैवमित्याह निजं दुःखमिति ॥ ७१ ॥

ननु निजानन्दस्य सदानन्दत्वात् सर्वदा हर्ष एव स्यात् न तु शोक इत्याशङ्क्य तस्य निजत्वेऽपि तदुपाधिभूतो मनसः क्षणिकत्वेन मानसयोरपि व्यत्ययमित्याह निजानन्द इति ॥ ७२ ॥

दृष्टान्ते विद्यमानं दार्ष्टान्तिके योजयति आकाशेऽपीति । एव

गतिस्पर्शौ वायुरूपं वह्नेर्दाहप्रकाशने ।
जलस्य द्रवता भूमेः काठिन्यं चेति निर्णयः ।
असाधारण आकाशे श्रोतव्यन्तवपुष्वपि ।
एवं विभाव्य मनसा तत्तद्रूपं यथोचितम् ॥ ७४॥७५ ॥
अनेकधा विभिन्नेषु नामरूपेषु चैकधा ।
तिष्ठन्ति सच्चिदानन्दा विसंवादो न कस्यचित् ॥७६॥
निस्तत्त्वे नामरूपे द्वे जन्मनाशयुते च ते ।
बुद्धा ब्रह्मणि वीक्षस्व समुद्रे बुद्बुदादिवत् ॥ ७७ ॥
सच्चिदानन्दरूपेऽस्मिन् पूर्णे ब्रह्मणि वीक्षिते ।
स्वयमेवावजानाति नामरूपे शनैः शनैः ॥ ७८ ॥
यावद् यावदवज्ञा स्यात् तावत् तावत् तदीक्षणम् ।
यावद् यावद् वीक्ष्यते तत् तावत् तावदुभे त्यजेत् ॥७९॥

---

विज्ञातमन्यत्प्रकारेण इत्यर्थः । यत्राभावे तु भवताप्युपगम्यते अतो नोपपादनीये इत्यर्थः । आकाशे प्रतिपादितमर्थं वाय्वादिष्वतिदिशन्नेव-मुपमन्तव्यमित्याह वाय्वादीति ॥ ७३ ॥

अत्र वाय्वादीनामसाधारणधर्मान् दर्शयति गतिस्पर्शावित्यादि द्वाभ्याम् ॥ ७४ ॥ ७५ ॥

फलितमाह अनेकधेति ॥ ७६ ॥

तर्हि प्रतीयमाननामरूपयोः का गतिरित्याशङ्क्य कल्पितत्वम् एव इत्याह निस्तत्त्वे इति । कल्पितत्वे हेतुः जन्मेति ॥ ७७ ॥

ततः किम् इत्यत आह सच्चिदानन्देति ॥ ७८ ॥

ब्रह्मध्यानदार्ढ्यस्य द्वैतावज्ञापूर्वकत्वात् ध्यानादिवत् द्वैतावज्ञापि कर्तव्येत्याह यावदिति ॥ ७९ ॥

तदभ्यासेन विद्यायां सुस्थितायामयं पुमान् ।
जीवन्नेव भवेन्मुक्तो वपुरस्तु यथा तथा ॥ ८० ॥
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वञ्च तदभ्यासं विदुर्बुधाः ॥ ८१ ॥
वासनानेककालीना दीर्घकालं निरन्तरम् ।
सादरञ्चाभ्यस्यमाने सर्वथैव निवर्त्तते ॥ ८२ ॥
मृच्छक्तिवद् ब्रह्मशक्तिरनेकाननृतान् सृजेत् ।
यद् वा जीवगता निद्रा स्वप्नश्चात्र निदर्शनम् ॥ ८३ ॥
निद्राशक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी ।
ब्रह्मण्येषा तथा माया सृष्टिस्थित्यन्तकारिणी ॥ ८४ ॥
स्वप्ने वियद्गतिं पश्येत् स्वमूर्द्धच्छेदनं तथा ।
मुहूर्त्ते वत्सरौघञ्च मृतं पुत्रादिकं पुनः ॥ ८५ ॥

---

उभयाभ्यासफलमाह तदभ्यासेनेति ॥ ८० ॥

इदानीं ब्रह्माभ्यासस्य स्वरूपमाह तच्चिन्तनमिति ॥ ८१ ॥

ननु अनादिकालमारभ्य प्रतिभासमानस्य द्वैतस्य कादाचित्केन ज्ञानाभ्यासेन कथं निवृत्तिरित्याशङ्क्य दैर्घ्यकालनैरन्तर्यसत्कारसेवितेनाभ्यासेन निवर्त्तत एवेत्याह वासनेति ॥ ८२ ॥

ननु ब्रह्मण एकस्यानेकाकारजगद्धेतुत्वमनुपपन्नमित्याशङ्क्य मायाशक्तस्य तस्य तदुपपद्यत इत्याह मृच्छक्तीति । अनृतान् कार्याणीत्यर्थः । अस्तु मृच्छक्तेः सत्यत्वादनेकहेतुत्वात् विषमो दृष्टान्त इत्याशङ्क्य दृष्टान्तान्तरमाह यद् वा जीवेति ॥ ८३ ॥

तत्र दृष्टान्तं विशदयति निद्राशक्तिरिति । दार्ष्टान्तिकमाह ब्रह्मणीति ॥ ८४ ॥

दुर्घटकारित्वमेव दर्शयति स्वप्न इति ॥ ८५ ॥

इदं युक्तमिदं नेति व्यवस्था तत्र दुर्लभा ।
यथा यथेक्ष्यते यद्यत् तत्तद्युक्तं तथा तथा ॥ ८६ ॥
ईदृशो महिमा दृष्टो निद्राशक्तेर्यदा तदा ।
मायाशक्तेरचिन्त्योऽयं महिमेति किमद्भुतम् ॥ ८७ ॥
शयाने पुरुषे निद्रा स्वप्नं बहुविधं सृजेत् ।
ब्रह्मण्येवं निर्विकारे विकारान् कल्पयत्यसौ ॥ ८८ ॥
खानिलाग्निजलोर्व्यण्डलोकप्राणिशिलादिकाः ।
विकाराः प्राणिधीष्वन्तश्चिच्छाया प्रतिबिम्बति ॥ ८९ ॥
चेतनाचेतनेष्वेषु सच्चिदानन्दलक्षणम् ।
समानं ब्रह्म भिद्येते नामरूपे पृथक् पृथक् ॥ ९० ॥
ब्रह्मण्येते नामरूपे पटे चित्रमिव स्थिते ।
उपेक्ष्य नामरूपे द्वे सच्चिदानन्दधीर्भवेत् ॥ ९१ ॥

---

स्वप्नस्य दुर्घटत्वे हेतुमाह इदमिति ॥ ८६ ॥

उक्तमर्थं कैमुतिकन्यायेन स्पष्टयति ईदृश इति ॥ ८७ ॥

अपरिणममानब्रह्मनिष्ठाया मायाया जगद्धेतुत्वे दृष्टान्तमाह शयाने इति ॥ ८८ ॥

मायया सृष्टान् पदार्थान् दर्शयति खानिलाग्नीति । ननु पाञ्चभौतिकत्वेन साम्येऽपि केषाञ्चित् चेतनत्वं केषाञ्चिज्जडत्वं कुत इत्याशङ्क्याह प्राणीति । प्राणिशरीरेष्वन्तःकरणेषु चैतन्यप्रतिबिम्बितत्वात् चेतनत्वम् इतरत्र तदभावाज्जडत्वमित्यर्थः ॥ ८९ ॥

ननु चेतनाचेतनविभागविरूपप्रपञ्चकृत एव किं न स्यादित्याशङ्क्य ब्रह्मणः सर्वोपादानत्वेन सर्वत्र समत्वान्नैवमित्याह चेतनेति ॥ ९० ॥

ब्रह्मण्यविच्छेदबाधनत्वे हेतुमाह ब्रह्मणीति । ब्रह्मणः सर्व-

जलस्थेऽधोमुखे स्वस्य देहे दृष्टेऽप्युपेक्ष्य तम् ।
तीरस्थ एव देहे स्वे तात्पर्यं स्याद् यथा तथा ॥८२॥
सहस्रशो मनोराज्ये वर्त्तमाने सदैव तत् ।
सर्वैरुपेक्ष्यते यद्वदुपेक्षा नामरूपयोः ॥ ८३ ॥
क्षणे क्षणे मनोराज्यं भवत्येवान्यथान्यथा ।
गतं गतं पुनर्नास्ति व्यवहारो बहिस्तथा ॥ ८४ ॥
न बाल्यं यौवने लभ्यं यौवनं स्थविरे तथा ।
मृतः पिता पुनर्नास्ति नायात्येव गतं दिनम् ॥ ८५ ॥
मनोराज्यात् विशेषः कः क्षणध्वंसिनि लौकिके ।
अतोऽस्मिन् भासमानेऽपि तत्सत्यत्वधियं त्यजेत् ॥८६॥
उपेक्षिते लौकिके धीर्निर्विघ्ना ब्रह्मचिन्तने ।

---

कल्पनाधारत्वात् सर्वगतत्वमित्यर्थः । एतत् कथमवगन्तव्यमित्याकाङ्क्षायां कल्पितनामरूपत्यागेऽधिष्ठानं ब्रह्मावगम्यत इत्याह उपेक्षेति ॥ ८१ ॥

उक्तार्थे दृष्टान्तमाह जलस्थे इति । नीरेऽधोमुखे स्वस्य देहे परिदृश्यमानेऽपि तस्मादरं परित्यज्य तीरस्थे स्वदेहे तद्विपरीते यथा बुद्धिसंश्लेष इत्यर्थः ॥ ८२ ॥

इदानीं सर्वजनप्रसिद्धं दृष्टान्तान्तरमाह सहस्रश इति । उपेक्षा कर्त्तव्येति शेषः ॥ ८३ ॥

प्रपञ्चवैचित्र्ये दृष्टान्तमाह क्षण इति । दार्ष्टान्तिकमाह व्यवहार इति ॥ ८४ ॥

तदेव विवृणोति न बाल्यमिति ॥ ८५ ॥

द्वैतमिथ्यात्वमुपसंहरति मनोराज्यादिति । कर्त्तव्यसाधने प्रयोजनमाह अतोऽस्मिन्निति ॥ ८६ ॥

नटवत् कृत्रिमास्थायां निर्वहत्येव लौकिकम् ॥ ९७ ॥
प्रवहत्यपि नीरेऽधः स्थिरा प्रौढा शिला यथा।
नामरूपान्यथात्वेऽपि कूटस्थं ब्रह्म नान्यथा ॥ ९८ ॥
निश्छिद्रे दर्पणे भाति वस्तुगर्भं बृहद् वियत्।
सच्चिद्घने तथा नानाजगद्गर्भमिदं वियत् ॥ ९९ ॥
अदृष्ट्वा दर्पणं नैव तदन्तःस्थे क्षणं यथा।
अमत्वा सच्चिदानन्दं नामरूपमतिः कुतः ॥ १०० ॥
प्रथमं सच्चिदानन्दे भासमानेऽथ तावता।
बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः ॥ १०१ ॥

ननु लौकिकोपेक्षायां को लाभ इत्याशङ्क्य ब्रह्मणि धीः स्थिरा भवतीत्याह उपेक्षित इति। तर्हि ज्ञानिनो व्यवहारः कथमित्याशङ्क्याह नटवदिति ॥ ९७ ॥

ननु ज्ञानिनो व्यवहाराभ्युपगमे विकारित्वं प्रसज्येत इत्याशङ्क्य बुद्धौ व्यवहरन्त्यामपि तत्साक्षी आत्मा निर्विकार इति सदृष्टान्तमाह प्रवहत्यपीति। उदके उपरि प्रवहत्यपि अधः स्थिता प्रौढा शिला यथा न चलति तथैव बुद्धौ व्यवहरन्त्यामपि न ज्ञानी चलतीत्यर्थः ॥ ९८ ॥

ननु स्वप्रकाशे ब्रह्मणि तद्विलक्षणस्य जगतः कथमवभासनमित्याशङ्क्य निश्छिद्रे दर्पणे व्यापकवस्तुनो यथा भासनं तद्वदित्याह निश्छिद्र इति ॥ ९९ ॥

नन्वदृष्टे ब्रह्मणि कथं जगत्प्रतीतिरित्याशङ्क्य सच्चिदानन्दप्रतीतिपुरःसरमेव जगत्प्रतीतिरिति सदृष्टान्तमाह अदृष्ट्वेति ॥ १०० ॥

ननु नामरूपयोरपि भासमानत्वात् कथं निर्विषयब्रह्मप्रतीतिरित्याशङ्क्य तदुपायमाह प्रथममिति ॥ १०१ ॥

एवञ्च निर्जगद्ब्रह्म सच्चिदानन्दलक्षणम् ।
अद्वैतानन्द एतस्मिन् विश्राम्यन्तु जनाश्चिरम् ॥ १०२ ॥
ब्रह्मानन्दाभिधे ग्रन्थे तृतीयेऽध्याय ईरितः ।
अद्वैतानन्द एव स्याज्जगन्मिथ्यात्वचिन्तया ॥ १०३ ॥

इति ब्रह्मानन्देऽद्वैतानन्दः समाप्तः ।

---

## चतुर्द्दशपरिच्छेदः ।

---

### ब्रह्मानन्दे विद्यानन्दः ।

योगेनात्मविवेकेन द्वैतमिथ्यात्वचिन्तया ।
ब्रह्मानन्दं पश्यतोऽथ विद्यानन्दो निरूप्यते ॥ १ ॥

---

सच्चिदानन्दे ब्रह्मणि कल्पितनामरूपात्मके प्रपञ्चे सच्चिदानन्दमात्रं, बुद्ध्या गृहीत्वा नामरूपयोर्बुद्धिं न धारयेत् एवञ्च सति निर्जगद्ब्रह्म सच्चिदानन्दलक्षणं भवतीत्यर्थः ॥ १०२ ॥

इदानीमध्यायार्थमुपसंहरति ब्रह्मानन्देति ॥ १०३ ॥

इति ब्रह्मानन्देऽद्वैतानन्दव्याख्या समाप्ता ।

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
ब्रह्मानन्दाभिधे ग्रन्थे विद्यानन्दो विविच्यते ॥

इदानीं वृत्तवर्त्तिष्यमाणयोरध्याययोः सम्बन्धमाह योगेनेति ॥ १ ॥

विषयानन्दवद् विद्यानन्दो धीवृत्तिरूपकः ।
दुःखाभावादिरूपेण प्रोक्त एष चतुर्विधः ॥ २ ॥
दुःखाभावश्च कामाप्तिः कृतकृत्योऽहमित्यसौ ।
प्राप्तप्राप्योऽहमित्येवं चातुर्विध्यमुदाहृतम् ॥ ३ ॥
ऐहिकञ्चामुष्मिकञ्चेत्येवं दुःखं द्विधेरितम् ।
निवृत्तिमैहिकस्याह बृहदारण्यकं वचः ॥ ४ ॥
आत्मानञ्चेद् विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ ५ ॥
जीवात्मा परमात्मा चेत्यात्मा द्विविध ईरितः ।
चित्तादात्म्यात् त्रिभिर्देहैर्जीवः सन् भोक्तृतां व्रजेत् ॥ ६ ॥
परात्मा सच्चिदानन्दस्तादात्म्यं नामरूपयोः ।
गत्वा भोग्यत्वमापन्नस्तद्विवेके तु नोभयम् ॥ ७ ॥

---

विद्यानन्दस्वरूपमाह विषयेति । तस्यावान्तरभेदमाह दुःखेति ॥ २ ॥

चातुर्विध्यमेव दर्शयति दुःखाभावश्चेति ॥ ३ ॥

निवर्त्तनीयं दुःखं विभजते ऐहिकमिति । ऐहिकस्य दुःखस्य निवृत्तिर्वृहदारण्यकवाक्येनोच्यते इत्याह निवृत्तिमिति ॥ ४ ॥

तत्श्रुतिवाक्यं पठति आत्मानञ्चेदिति ॥ ५ ॥

आत्मनि भोक्तृत्वं दर्शयितुं तद्भेदमाह जीवात्मेति । आत्मनो जीवत्वे निमित्तमाह चित्तादात्म्यादिति । चैतन्यस्य स्थूलसूक्ष्म-कारणरूपैस्त्रिभिः शरीरैस्तादात्म्यभ्रमे सति चितो भोगकर्तृत्वं भवति स भोक्ता जीव इत्युच्यते ॥ ६ ॥

इदानीं परात्मनः स्वरूपमाह परात्मेति । तस्य भोग्यरूपता-प्राप्तिप्रकारमाह तादात्म्यमिति । नामरूपकल्पनाधिष्ठानत्वेन तत्तादात्म्यं

भोग्यमिच्छन् भोक्तुरर्थं शरीरमनुसंज्वरेत् ।
ज्वरास्त्रिषु शरीरेषु स्थिता न त्वात्मनो ज्वराः ॥ ८ ॥
व्याधयो धातुवैषम्ये स्थूलदेहे स्थिता ज्वराः ।
कामक्रोधादयः सूक्ष्मे द्वयोर्बीजन्तु कारणे ॥ ९ ॥
अद्वैतानन्दमार्गेण परात्मनि विवेचिते ।
अपश्यन् वास्तवं भोग्यं किन्नामेच्छेत् परात्मवित् ॥ १० ॥
आत्मानन्दोक्तरीत्यास्मिन् जीवात्मन्यवधारिते ।
भोक्ता नैवास्ति कोऽप्यत्र शरीरानुज्वरः कुतः ॥ ११ ॥
पुण्यपापद्वये चिन्ता दुःखमामुष्मिकं भवेत् ।

---

प्राप्य भोग्यमित्युच्यते इत्यर्थः । भोगकर्तृत्वाद्यभावे कारणमाह तद्विवेके त्विति । ताभ्यां शरीरत्रयजगद्भ्यां विवेके भेदे ज्ञाते सति उभयं भोगकर्तृभोग्यरूपं नास्तीत्यर्थः ॥ ७ ॥

उक्तमर्थं विवृणोति भोग्यमिच्छन्निति ॥ ८ ॥

कस्मिन् शरीरे को ज्वर इत्याशङ्क्य स्थूलदेहे विद्यमानान् ज्वरान् दर्शयति व्याधय इति । लिङ्गदेहगतान् ज्वरानाह कामेति ॥ ९ ॥

इदानीमुदाहृतश्रुतितात्पर्यकथनव्याजेन पूर्वोक्तमेवार्थं विशदयन् अद्वैतानन्देति । तृतीयाध्यायोक्तप्रकारेण मायाकार्यनामरूपाभ्यां सच्चिदानन्दपरमात्मनि विवेचिते भेदेन ज्ञाते सति सर्वं प्रपञ्चं मिथ्येति जानन् किं नाम भोग्यमिच्छति ॥ १० ॥

ततः षष्ठाध्यायोक्तरीत्या जीवात्मस्वरूपे असङ्गकूटस्थचैतन्यरूपे निश्चिते सति कामयितृभावाज्ज्वरादिसम्बन्धो नास्तीत्याह आत्मानन्द इति ॥ ११ ॥

इदानीमामुष्मिकं ज्वरं प्रदर्शयति पुण्यपापेति । तत्राभाव प्रथ

प्रथमाध्याय एवोक्तं चिन्ता नेमं तपेदिति ॥ १२ ॥
यथा पुष्करपर्णेऽस्मिन्नपामश्लेषणं तथा ।
वेदनादूर्ध्वमागामिकर्मणोऽश्लेषणं बुधे ॥ १३ ॥
इषीकाद्यणतूलस्य वह्निदाहः क्षणाद् यथा ।
तथा सञ्चितकर्मास्य दग्धं भवति वेदनात् ॥ १४ ॥
यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ १५ ॥
यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमान् लोकान् न हन्ति न निबध्यते ॥१६॥
मातापित्रोर्वधः स्तेयं भ्रूणहत्यान्यदीदृशम् ।
न मुक्तिं नाशयेत् पापं मुखकान्तिर्न नश्यति ॥ १७ ॥

---

माध्याये निरूपितः इत्याह प्रथमेति । कस्मिन् श्लोके इत्याह चिन्तेति ॥ १२ ॥

ननु ज्ञानिन आरब्धकर्मविषया चिन्ता मा भूत् आगामिकर्मविषया चिन्ता भवत्येव इत्याशङ्क्य यथा पुष्करपलाश इत्यादिश्रुत्या ज्ञानिन आगामिकर्मसम्बन्धनिराकरणात् तद्विषयापि चिन्ता नास्ति इत्याह यथेति ॥ १३ ॥

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते इति श्रुत्यन्तरावष्टम्भेन सञ्चितकर्मविषयापि चिन्ता ज्ञानिनो नास्तीत्याह इषीकेति ॥ १४ ॥

उक्तार्थे भगवद्वाक्यमपि प्रमाणयति यथैधांसीति ॥ १५ ॥ १६ ॥

अस्मिन्नेवार्थे न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं न च कृषं मुखं नीलं वेति कौषीतकिब्राह्मणवाक्यमर्थतः पठति मातापित्रोरिति । न चेत्येकं पदं नीलमिति कान्तिरित्यर्थः ॥ १७ ॥

दुःखाभाववदेवास्य सर्वकामाप्तिरीरिता ।
सर्वान् कामानसावाप्य ह्यमृतो भवदित्यतः ॥ १८ ॥
जक्षत् क्रीड़न् रतिं प्राप्तः स्त्रीभिर्यानैस्तथेतरैः ।
शरीरं न स्मरेत् प्राणं कर्मणा जीवयेदमूम् ॥ १९ ॥
सर्वान् कामान् सहाप्नोति नान्यवज्जन्मकर्मभिः ।
वर्त्तन्ते श्रोत्रिये भोगा युगपत् क्रमवर्ज्जिताः ॥ २० ॥
युवा रूपी च विद्यावान् नीरोगो दृढ़चित्तवान् ।
सैन्योपेतः सर्वपृथ्वीं वित्तपूर्णां प्रपालयन् ।
सर्वैर्मानुष्यकैर्भोगैः सम्पन्नस्तृप्तभूमिपः ।
यमानन्दमवाप्नोति ब्रह्मविच्च तमश्नुते ॥ २१ ॥ २२ ॥

---

उक्तचातुर्विध्यमध्ये द्वितीयप्रकारमाह दुःखेति। ईरिता श्रुत्येति शेषः। अस्मिन्नर्थे ऐतरेयश्रुतिवाक्यमर्थतः पठति सर्वान् कामा-निति ॥ १८ ॥

जक्षत् क्रीड़न् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरमिति छान्दोग्यश्रुतिवाक्यमर्थतः पठति जक्षदिति ॥१९॥

तत्र तैत्तिरीयश्रुतिवाक्यमर्थतः पठति सर्वान् कामानिति। ननु कर्मफलभोगाङ्गीकारे जन्मापि प्रसज्येत इत्याशङ्क्याह नान्यवदिति। ज्ञानेन सञ्चितकर्मणां दग्धत्वात् अस्य जन्म नास्तीत्यर्थः ॥ २० ॥

इदानीं तैत्तिरीयबृहदारण्यकवाक्यं सङ्गृह्यार्थतः पठति युवेति। ननु सार्वभौमादिहिरण्यगर्भान्तानां जीवनिष्ठानाम् आनन्दानां कथं ज्ञानिनि सम्भव इत्याशङ्क्य सर्वेषामानन्दानां ज्ञानिनोऽवगतब्रह्मांशत्वात् सम्भव इत्याह सर्वैरिति ॥ २१ ॥ २२ ॥

मर्त्यभोगे द्वयोर्नास्ति कामस्तृप्तिरतः समा ।
भोगान्निष्कामतैकस्य परस्यापि विवेकतः ॥ २३ ॥
श्रोत्रियत्वाद् वेदशास्त्रैर्भोग्यदोषानवेक्षते ।
राजा बृहद्रथो दोषांस्तान् गाथाभिरुदाहरत् ।
देहदोषाश्चित्तदोषा भोग्यदोषा अनेकशः ।
शुना वान्ते पायसे नो कामस्तद्वद्विवेकिनः ॥ २४ ॥ २५ ॥
निष्कामत्वे समेऽप्यत्र राज्ञः साधनसञ्चये ।
दुःखमासीद्भाविनाशादतिभीरनुवर्त्तते ।
नोभयं श्रोत्रियस्यातस्तदानन्दोऽधिकोऽन्यतः ।
गन्धर्वानन्द आशास्ति राज्ञो नास्ति विवेकिनः ॥२६॥२७
अस्मिन् कल्पे मनुष्यः सन् पुण्यपाकविशेषतः ।
गन्धर्वत्वं समापन्नो मर्त्यो गन्धर्व उच्यते ॥ २८ ॥

---

ननु सार्वभौमश्रोत्रिययोर्विषयप्राप्तिसाम्याभावात् कथमानन्दसाम्यमित्याशङ्क्य नैरपेक्ष्यसाम्यात् तत्प्राप्तिसाम्यमित्याह मर्त्येति। तत्प्राप्तिसाम्ये हेतुमाह भोगादिति ॥ २३ ॥

विवेकत इत्युक्तमर्थं विवृणोति श्रोत्रियेति। विषयदोषाः कस्यां शाखायां केनोक्ता इत्याशङ्क्य बृहद्रथेन मैत्रायणीयाख्यशाखायां गाथाभिरुक्ता इत्याह राजा बृहद्रथ इति। विवेकिनः कामानुदये दृष्टान्तमाह शुनेति ॥ २४ ॥ २५ ॥

सार्वभौमात् श्रोत्रियस्याधिक्यमाह निष्कामत्व इति। सार्वभौमस्य साधनसाध्यं यथास्ति तथापायभीतिश्चेति दोषद्वयमस्ति श्रोत्रिये तु तदुभयाभावादाधिक्यमित्यर्थः। श्रोत्रियस्याधिक्यान्तरमाह गन्धर्वेति ॥ २६ ॥ २७ ॥

पूर्वकल्पे कृतात् पुण्यात् कल्पादावेव चेद् भवेत् ।
गन्धर्वत्वं तादृशोऽत्र देवगन्धर्व उच्यते ॥ २९ ॥
अग्निष्वात्तादयो लोके पितरश्चिरवासिनः ।
कल्पादावेव देवत्वं गता आजानदेवताः ॥ ३० ॥
अस्मिन् कल्पेऽश्वमेधादि कर्म कृत्वा महत् पदम् ।
अवाप्याजानदेवैर्याः पूज्यास्ताः कर्मदेवताः ॥ ३१ ॥
यमाग्निमुख्या देवाः स्युर्जाताविन्द्रबृहस्पती ।
प्रजापतिर्विराट् प्रोक्तो ब्रह्मा सूत्रात्मनामकः ॥ ३२ ॥
सार्वभौमादिसूत्रान्ता उत्तरोत्तरकामिनः ।
अवाङ्मनसगम्योऽयमात्मानन्दस्ततः परः ॥ ३३ ॥
तैस्तैः काम्येषु सर्वेषु सुखेषु श्रोत्रियो यतः ।
निःस्पृहस्तेन सर्वेषामानन्दाः सन्ति तस्य ते ॥ ३४ ॥

---

इदानीं गन्धर्वानन्दद्वैविध्यं दर्शयितुं श्लोकद्वयेन गन्धर्वभेदमाह [illegible]ति ॥ २८ ॥ २९ ॥

चिरलोकपित्रानन्दप्रदर्शनाय चिरलोकपितॄनाह अग्निष्वात्तेति । देवानन्दद्वैविध्यप्रदर्शनाय देवभेदमाह कल्पेति ॥ ३० ॥ ३१ ॥

इन्द्रबृहस्पती प्रसिद्धावित्यर्थः ॥ ३२ ॥

सार्वभौमादिसूत्रान्तानां श्रोत्रियानन्दस्य [illegible] सार्वभौमादीति । एभ्यः सर्वेभ्योऽधिकमानन्दमाह अवाङ्मनसेति । अतोऽयमानन्दः अवाङ्मनसगम्यः अत एभ्यः सर्वेभ्योऽधिक इत्यर्थः ॥ ३३ ॥

इदानीमेतां सर्वेषामानन्दा ये ते श्रोत्रिये विद्यन्ते यस्य तेषु निःस्पृहत्वात् इत्याह तैस्तैरिति ॥ ३४ ॥

सर्वकामाप्तिरेषोक्ता यद् वा साक्षिचिदात्मता ।
स्वदेहवत् सर्वदेहेष्वपि भोगानवेक्षते ॥ ३५ ॥
अज्ञस्याप्येतदस्त्येव न तु तृप्तिरबोधतः ।
यो वेद सोऽश्नुते सर्वान् कामानित्यब्रवीत् श्रुतिः ॥३६॥
यद् वा सर्वात्मता स्वस्य साम्ना गायति सर्वदा ।
अहमन्नं तथान्नादश्चेति सामस्वधीयते ॥ ३७ ॥
दुःखाभावश्च कामाप्तिरुभे ह्येवं निरूपिते ।
कृतकृत्यत्वमन्यच्च प्राप्तप्राप्यत्वमीक्ष्यताम् ॥ ३८ ॥
उभयं तृप्तिदीपे हि सम्यगस्माभिरीरितम् ।
त एवात्रानुसन्धेयाः श्लोका बुद्धिविशुद्धये ॥ ३९ ॥

उपपादितमर्थमुपसंहरति सर्वकामेति । इदानीं पक्षान्तरमाह यद्वा इति । यथा स्वदेहे आनन्दाकारबुद्धिसाक्षित्वेनानन्दित्वम् इतरेष्वपि देहेषु तद्वदित्यर्थः ॥ ३५ ॥

ननूक्तप्रकारेणाज्ञस्यापि सर्वानन्दप्राप्तिरस्तु इत्याशङ्क्य सत्यं बुद्धि-साक्ष्यहमिति ज्ञानाभावान्नैवमित्याह अज्ञस्येति । उक्तार्थे तैत्तिरीय-श्रुतिं प्रमाणयति यो वेद इति । गुहायां निहितं ब्रह्म यो वेद सोऽश्नुते इति योजना ॥ ३६ ॥

इदानीं तृतीयप्रकारमाह यद्वेति । इमान् लोकान् कामान्नी-कामरूप्यनुसञ्चरन् इत्यादिनेत्यर्थः ॥ ३७ ॥

अतीतग्रन्थेन सिद्धमर्थं संक्षिप्य दर्शयति दुःखेति ॥ ३८ ॥

अवशिष्टं कृतकृत्यत्वं प्राप्तप्राप्यत्वमित्युभयं तृप्तिदीपे ऐहिका-मुष्मिकव्रातेत्यादौ द्रष्टव्यमित्याह उभयमिति ॥ ३९ ॥

ब्रह्मानन्दाभिधे ग्रन्थे चतुर्थोऽध्याय ईरितः ।
विद्यानन्दस्तदुत्पत्तिपर्यन्तोऽभ्यास इष्यताम् ॥ ४० ॥

इति ब्रह्मानन्दे विद्यानन्दः
समाप्तः ।

---

## पञ्चदशपरिच्छेदः ।



### ब्रह्मानन्दे विषयानन्दः ।

अथात्र विषयानन्दो ब्रह्मानन्दांशरूपभाक् ।
निरूप्यते द्वारभूतस्तदंशत्वं श्रुतिर्जगौ ॥ १ ॥

---

एतदध्यायार्थमुपसंहरति ब्रह्मानन्देति ॥ ४० ॥

इति ब्रह्मानन्दे विद्यानन्दव्याख्या
समाप्ता ।

---

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
तन्यते विषयानन्दो ब्रह्मानन्दे तु पञ्चमः ॥

पञ्चमाध्याये प्रतिपाद्यमर्थमाह अथेति । ननु विषयानन्दस्य लौकिकत्वात् मोक्षशास्त्रे निरूपणमनुपपन्नमित्याशङ्क्य तस्य लौकिकत्वेऽपि ब्रह्मानन्दैकदेशत्वेन ब्रह्मज्ञानोपयोगित्वात् तन्निरूपणं युक्तमित्याह द्वारभूत इति । ब्रह्मानन्दांशत्वे किं प्रमाणमित्याशङ्क्याह तदंशत्वमिति ॥ १ ॥

एषोऽस्य परमानन्दो योऽखण्डैकरसात्मकः ।
अन्यानि भूतान्येतस्य मात्रामेवोपभुञ्जते ॥ २ ॥

शान्ता घोरास्तथा मूढा मनसो वृत्तयस्त्रिधा ।
वैराग्यं क्षान्तिरौदार्य्यमित्याद्याः शान्तवृत्तयः ॥ ३ ॥

तृष्णा स्नेहो रागलोभावित्याद्या घोरवृत्तयः ।
संमोहो भयमित्याद्याः कथिता मूढवृत्तयः ॥ ४ ॥

वृत्तिष्वेतासु सर्वासु ब्रह्मणश्चित्स्वभावता ।
प्रतिबिम्बति शान्तासु सुखञ्च प्रतिबिम्बति ॥ ५ ॥

रूपं रूपं बभूवासौ प्रतिरूप इति श्रुतिः ।
उपमासूर्य्यकेत्यादि सूत्रयामास सूत्रकृत् ॥ ६ ॥

एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ ७ ॥

---

तामेव श्रुतिमर्थतः पठति एष इति ॥ २ ॥

इदानीं विषयानन्दस्य ब्रह्मानन्दांशत्वप्रदर्शनाय तदुपाधिभूतान्तःकरणवृत्तीर्विभजते शान्ता इति । शान्ताः सात्त्विक्यो वृत्तयः । घोरा राजस्यः मूढास्तामस्यः । ता एव शान्तादिवृत्तीर्दर्शयति वैराग्यमित्यादिना ॥ ३ ॥ ४ ॥

उदाहृतासु त्रिविधास्वपि वृत्तिषु ब्रह्मणश्चिद्रूपत्वं प्रतिभातीत्याह वृत्तिष्विति । शान्तासु विशेषमाह शान्तेति । चकारस्तूक्तद्वयसमुच्चयार्थः ॥ ५ ॥

उक्तार्थे श्रुतिवाक्यमर्थतः पठति रूपमिति । तत्रैव व्याससूत्रस्यैकदेशं पठति उपमेति । अत एव चेति सूत्रस्य पूर्वभागः ॥ ६ ॥

स्वरूपेणैकस्योपाधिसम्पर्कात् नानात्वे श्रुतिं पठति एक एवेति ।

जले प्रविष्टश्चन्द्रोऽयमस्पष्टः कलुषे जले ।
विस्पष्टो निर्मले तद्वद् द्वेधा ब्रह्मापि वृत्तिषु ॥ ८ ॥
घोरमूढासु मालिन्यात् सुखांशस्य तिरस्कृतिः ।
ईषन्नैर्मल्यतस्तत्र चिदंशप्रतिबिम्बनम् ॥ ९ ॥
यद्वापि निर्मले नीरे वह्नेरौष्ण्यस्य संक्रमः ।
न प्रकाशस्य तद्वत् स्याच्चिन्मात्रोद्भूतिरत्र च ॥ १० ॥
काष्ठे त्वौष्ण्यप्रकाशौ द्वावुद्भवं गच्छतो यथा ।
शान्तासु सुखचैतन्ये तथैवोद्भूतिमाप्नुतः ॥ ११ ॥
वस्तुस्वरूपमाश्रित्य व्यवस्था तूभयोः समा ।
अनुभूत्यनुसारेण कल्प्यते हि नियामकम् ॥ १२ ॥

---

ननु निरवयवस्य ब्रह्मणः क्वचित् चिन्मात्रभानम् इतरत्र शान्तवृत्तौ चिदानन्दभानमित्येवं विभागकरणमनुपपन्नमित्याशङ्क्य चन्द्रदृष्टान्तेन परिहरति जलचन्द्रवदिति ॥ ७ ॥

दृष्टान्तं विवृणोति जले प्रविष्ट इति । उक्तमर्थं दार्ष्टान्तिके योजयति तद्वदिति ॥ ८ ॥

तदेवोपपादयति घोरमूढास्विति ॥ ९ ॥

ननु चन्द्रोपाधेरुदकस्य द्वैविध्याद्द्वैधभानमुपपन्नं प्रकृते तु उपाधिभूतस्यान्तःकरणस्य एकत्वाद्द्वैधभानमनुपपन्नमित्याशङ्क्य दृष्टान्तान्तरमाह यद्वेति ॥ १० ॥

इदानीं शान्तासु वृत्तिषु चिदानन्दयोः प्रतीतौ दृष्टान्तान्तरमाह काष्ठ इति ॥ ११ ॥

नन्वेवं व्यवस्था कुतः इत्याशङ्क्याह वस्तुस्वरूपमिति । तत्र किं नियामकमित्याशङ्क्याह अनुभूत्यनुसारेणेति ॥ १२ ॥

न घोरासु न मूढासु सुखानुभव ईक्ष्यते ।
शान्तास्वपि क्वचित् कश्चित् सुखातिशय इष्यताम् ॥१३॥
गृहक्षेत्रादिविषये यदा कामो भवेत्तदा ।
राजसस्यास्य कामस्य घोरत्वात् तत्र नो सुखम् ॥ १४ ॥
सिद्ध्येन्न वेत्यस्ति दुःखमसिद्धौ तद्विवर्द्धते ।
प्रतिबन्धे भवेत् क्रोधो द्वेषो वा प्रतिबन्धकः ॥ १५ ॥
अशक्यश्चेत् प्रतीकारो विषादः स्यात् स तामसः ।
क्रोधादिषु महादुःखं सुखशङ्कापि दूरतः ॥ १६ ॥
काम्यलाभे हर्षवृत्तिः शान्ता तत्र महत् सुखम् ।
भोगे महत्तरं लाभप्रसक्तावीषदेव हि ॥ १७ ॥
महत्तमं विरक्तौ तु विद्यानन्दे तदीरितम् ।
एवं क्षान्तौ तथौदार्य्ये क्रोधलोभनिवारणात् ॥ १८ ॥
यद् यत् सुखं भवेत् तत् तद्ब्रह्मैव प्रतिबिम्बनात् ।
वृत्तिष्वन्तर्मुखास्वस्य निर्विघ्नं प्रतिबिम्बनम् ॥ १९ ॥

---

अनुभूतिमेव दर्शयति न घोरेति । शान्तास्वप्यानन्दकाष्ठाऽस्ति कोऽपि क्वचित् कश्चित् सुखातिशयो भवतीत्याह शान्तेति ॥ १२ ॥

पूर्वोक्तघोरमूढवृत्तिषु सुखाभावमेवाभिनीय दर्शयति गृहेति । सुखासिद्धौ दुःखं वर्द्धते सुखस्य प्रतिबन्धे तु क्रोधो भवति । दुःखाभावे कारणान्तरमाह द्वेष इति ॥ १४ ॥ १५ ॥

परिहारस्याशक्यत्वे विषादो भवति तस्यापि तामसत्वाद् दुःखमित्याह अशक्य इति । क्रोधादिष्वित्यादयः स्पष्टार्थाः ॥ १६ ॥ १७ ॥ १८ ॥

एवं क्षान्त्यादीनां सिद्धमित्याह वृत्तिष्विति ॥ १९ ॥

सत्ता चितिः सुखञ्चेति स्वभावा ब्रह्मणस्त्रयः ।
मृच्छिलादिषु सत्तैव व्यज्यते नेतरद्वयम् ॥ २० ॥
सत्ता चितिर्द्वयं व्यक्तं धीवृत्त्योर्घोरमूढयोः ।
शान्तवृत्तौ त्रयं व्यक्तं मिश्रं ब्रह्मेत्थमीरितम् ॥ २१ ॥
अमिश्रं ज्ञानयोगाभ्यां तौ च पूर्वमुदीरितौ ।
आद्येऽध्याये योगचिन्ता ज्ञानमध्याययोर्द्वयोः ॥ २२ ॥
असत्ता जाड्यदुःखे द्वे मायारूपं त्रयं त्विदम् ।
असत्ता नरशृङ्गादौ जाड्यं काष्ठशिलादिषु ॥ २३ ॥
घोरमूढधियोर्दुःखमेवं माया विजृम्भिता ।
शान्तासु जडवृत्त्यैक्यान्मिश्रं ब्रह्मेति कीर्त्तितम् ॥२४॥

---

इदानीं सर्वत्र ब्रह्मस्वरूपानुभूतिप्रदर्शनाय तत्स्वरूपं स्मारयति सत्तेति । मृच्छिलादिषु सन्मात्रमित्यर्थः । घोरमूढयोः द्वयोः सत्ताचिती द्वे शान्तवृत्तौ सच्चिदानन्दास्त्रयोऽपि व्यक्ताः । एवं सप्रपञ्चं ब्रह्माभिहितमित्याह मिश्रमिति ॥ २० ॥ २१ ॥

अमिश्रं कुतो ज्ञायते इत्याशङ्क्याह अमिश्रमिति । तौ ज्ञानयोगौ पूर्वमेवोक्तावित्यर्थः । कुत्रोक्तावित्याशङ्क्य योगः प्रथमाध्याये उक्त इत्याह आद्ये इति । समनन्तराध्याययोर्ज्ञानमुक्तमित्याह ज्ञानमिति ॥ २२ ॥

ननु सच्चिदानन्दानां ब्रह्मस्वरूपत्वे मायायाः किं स्वरूपमित्याशङ्क्याह असत्तेति । नरशृङ्गादावसत्त्वं मृच्छिलादिषु जाड्यमिति विवेकः ॥ २३ ॥

दुःखं कुत्रेत्याशङ्क्याह घोरेति । एवं सर्वत्र माया प्रतिभासते इत्याह एवमिति । शान्तादिषु वृत्तिषु ब्रह्मणो मिश्रत्वे किं कारणमित्यत आह शान्तेति ॥ २४ ॥

एवं स्थितेऽत्र यो ब्रह्म ध्यातुमिच्छेत् पुमानसौ ।
नृशृङ्गादिमुपेक्षेत शिष्टं ध्यायेद् यथायथम् ॥ २५ ॥
शिलादौ नामरूपे द्वे त्यक्त्वा सन्मात्रचिन्तनम् ।
त्यक्त्वा दुःखं घोरमूढधियोः सच्चिद् विवेचनम् ॥ २६ ।
शान्तासु सच्चिदानन्दांस्त्रीनप्येवं विचिन्तयेत् ।
कनिष्ठमध्यमोत्कृष्टास्तिस्रश्चिन्ताः क्रमादिमाः ॥२७॥
मन्दस्य व्यवहारेऽपि मिश्रब्रह्मणि चिन्तनम् ।
उत्कृष्टं वक्तुमेवात्र विषयानन्द ईरितः ॥ २८ ॥
औदासीन्ये तु धीवृत्तेः शैथिल्यादुत्तमोत्तमम् । .
चिन्तनं वासनानन्दो ध्यानमुक्तं चतुर्विधम् ॥ २९ ॥

---

एतदभिधानं किमर्थमित्याशङ्क्य ब्रह्मध्यानार्थमित्याह एवं स्थित इति । नृशृङ्गादिमुपेक्ष्यान्यत्र ब्रह्मध्यानं कर्त्तव्यमित्याह नृशृङ्गादिमिति ॥ २५ ॥

अन्यत्रेत्युक्तं कुत्र कथं ध्येयमित्यत आह शिलादाविति । घोरमूढबुद्धिवृत्तिषु दुःखं परित्यज्य सच्चिद्रूपयोश्चिन्तनं कर्त्तव्यमित्याह त्यक्त्वेति ॥ २६ ॥

सात्त्विकवृत्तिषु सच्चिदानन्दाख्यत्रयोऽपि ध्येया इत्याह शान्तेति । एषां ध्यानानां किं साम्यं नेत्याह कनिष्ठेति ॥ २७ ॥

इदानीं निर्गुणध्यानेऽनधिकारिणोऽनुग्रहाय मिश्रब्रह्मध्यानेऽधिकार उक्त इत्यभिप्रायेणाह मन्दस्येति ॥ २८ ॥

एवं सवृत्तिकं ध्यानत्रयमुक्त्वा अवृत्तिकं ध्यानमाह औदासीन्य इति । उत्तमोत्तममिति एभ्यो ध्यानेभ्योऽधिकमित्यर्थः । उक्तं निगमयति ध्यानमुक्तमिति ॥ २९ ॥

न ध्यानं ज्ञानयोगाभ्यां ब्रह्मविद्यैव सा खलु।
ध्यानेनैकाग्रमापन्ने चित्ते विद्या स्थिरीभवेत् ॥ ३० ॥
विद्यायां सच्चिदानन्दा अखण्डैकरसात्मताम्।
प्राप्य भान्ति न भेदेन भेदकोपाधिवर्जनात् ॥ ३१ ॥
शान्ता घोराः शिलाद्याश्च भेदकोपाधयो मताः।
योगाद् विवेकतस्त्वेषामुपाधीनामपाकृतिः ॥ ३२ ॥
निरुपाधि ब्रह्मतत्त्वे भासमाने स्वयं प्रभे।
अद्वैते त्रिपुटी नास्ति भूमानन्दोऽयमुच्यते ॥ ३३ ॥
ब्रह्मानन्दाभिधे ग्रन्थे पञ्चमाध्याय ईरितः।
विषयानन्द एतेन द्वारेणान्तः प्रविश्यताम् ॥ ३४ ॥
प्रीयाद्धरिहरोऽनेन ब्रह्मानन्देन सर्वदा।

अयं ध्यानावान्तरभेदः किं नेत्याह न ध्यानमिति। तर्हि किमेतदित्याशङ्क्याह ब्रह्मविद्येति। इयं ब्रह्मविद्या कथमुत्पन्नेत्याशङ्क्याह ध्यानेनेति ॥ ३० ॥

अस्याविद्यात्वे हेतुमाह विद्यायामिति ॥ ३१ ॥

भेदकोपाधिवर्ज्जनादित्युक्तं तानेव भेदकोपाधीनाह शान्ता घोरा इति। एतेषां परिहारः केनोपायेन इत्याशङ्क्याह योगाद् विवेक इति ॥ ३२ ॥

फलितमाह निरुपाधीति। त्रिपुटीभानाभावात् भूमानन्दोऽयमुच्यते इत्यर्थः ॥ ३३ ॥

पञ्चमुपसंहरति ब्रह्मानन्देति ॥ ३४ ॥

पायाच्च प्राणिनः सर्व्वान् स्वाश्रितान् शुद्धमानसान् ॥ ३५

इति ब्रह्मानन्दे विषयानन्दः समाप्तः।

इति श्रीभारतीतीर्थविद्यारण्यमुनीश्वरविरचित पञ्चदश-
प्रकरणात्मकपञ्चदशीग्रन्थः समाप्तः।

---

निर्विघ्नग्रन्थसमाप्तिद्योतनार्थं देवतानामोच्चारणपूर्वकमिष्टाशी-
र्व्वादसूचकं श्लोकमाह प्रीयादिति ॥ ३५ ॥

इति ब्रह्मानन्दे विषयानन्दव्याख्या समाप्ता।

इति श्रीपरमहंसपरिव्राजकाचार्य्य श्रीभारतीतीर्थविद्यारण्य-
मुनिवर्य्य शिष्येण श्रीरामकृष्णविदुषा विरचिता पञ्च-
दशप्रकरणात्मकपञ्चदश्याख्यग्रन्थस्य
टीका समाप्ता।

---

প্রিন্টর—শ্রীক্ষেত্রমোহন মুখোপাধ্যায়।
২০ নং খানাপুকুর লেন।